## प्रथमः सर्गः

### ॥ सामोददामोदरः ॥

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥ १ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

श्रीकृष्णाय नमः

सर्वाङ्गसुन्दरी राधा कृष्णः सर्वाङ्गसुन्दरः ।
तयोरानन्दजननी टीका सर्वाङ्गसुन्दरी ॥
नत्वा श्रीहरिचरणं कुरुते सर्वाङ्गसुन्दरीटीकाम् ।
श्रीनारायणदासः कविराजोऽयं गीतगोविन्दे ॥२॥
आस्ते यदि हृदि वाञ्छा बोद्धुं तत्त्वेन गीतगोविन्दम् ।
श्रीनारायणदासस्याभिप्रायं जनाः शृणुत ॥३॥

स्वेष्टदेवतासंकीर्त्तनेन स्वविघ्नहेतूनुन्मूलनाय मङ्गलमाचरता निखिलप्रबन्धप्रमेयं तत् श्रीकृष्णकेलिकथाजातस्य सूचकं केलिशब्दस्य (१) च महाकाव्यलक्षणानि निपुणतया आशिषा संकीर्त्तयता कविराजजयदेवेन अभ्रान्तं प्रथमं पाठ्यम्।

महाकाव्योपक्रमे आशीर्नमस्क्रियावस्तुनिर्द्देशो वा क्रियत इति कविसंप्रदायः। त्रिविधमङ्गलनिरूपणं ततः प्रारीप्सितग्रन्थस्य निर्विघ्नेन परिसमाप्तये प्रचयपरिपन्थि-कलुषनिवृत्त ये च श्रिकृष्णाख्यं वस्तुनिर्द्देशलक्षणम्।

सर्गबन्धो महाकव्यमुच्यते तस्य लक्षणम् ।
आशीर्नमस्क्रियावस्तुनिर्द्देशो वापि तन्मुखम् ॥

इति काव्यादर्शे। अतएव जयदेवोऽपि तथैव निबन्धं विधित्सुराह मेधैर्मेदुरमम्बर-मिति।

पक्षत्रयमत्र सम्भाव्यते। तत्र जयन्तीति पदोपन्यासात् आशीर्ज्ञेया लोट्ये विधानात् "जयन्तीत्यनेन च नमस्कार आक्षिप्यन्ते" इति काव्यप्रकाशोक्ते (२) र्नमस्क्रिया।

अत्र ग्रन्थे विष्णुरेव नायक उपलक्ष्यते। तस्य प्रागुपन्यासाद् वस्तुनिर्द्देशोऽपीति पक्षत्रयं प्रतिपादितम्। अधुना श्लोकयोजना। राधामाधवयोर्यमुनाकूले रहः केलयो-र्निर्जनस्थानक्रीड़ाः प्रत्यध्वकुञ्जद्रुमं जयन्ति जययुक्ता भवन्तीत्यर्थः। निर्भरकेलिप्रति-पादनार्थमत्र रहः शब्दोपादानम्। प्रत्यध्वकुञ्जद्रुममिति अध्वकुञ्जद्रुमं लक्ष्यीकृत्येत्यर्थः कुञ्जेनोपलक्षितो द्रुमः कुञ्जद्रुमः। अध्वनः कुञ्जद्रुमोऽध्वकुञ्जद्रुम इति षष्ठीसमासः। केचित्तु "लक्षणेनाभिप्रेत आभिमुख्ये" इति अव्ययीभावसमासेन प्रत्यध्वकुञ्जद्रुमं साधयां चक्रुः। किं भूतयोरित्याह।

इत्थं नन्दनिदेशतश्चलितयोरिति इत्थमनेन प्रकारेण नन्दगोपशासनाद् गृहं प्रस्थापितयोरित्यर्थः (३)। कः पुनरसौ नन्दनिदेश इत्याह, नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं पापयेति। एवंकारः कोपाविष्कारः (४)। हे मुग्धे! यतः कार्य्या-कार्य्यमविचार्य्य नक्तं भीरुरयं त्वयैतावद्दूरमानीतस्तस्मात्त्वमेवेमं कृष्णं गृहं प्रापयेति कोपाविष्कारार्थः। कोपाविष्कारश्च राधे! इत्याक्षेप सम्बोधनपदेनैव लभ्यते। न पुनर्वत्से! पुत्रि! मातरि! इत्यादिनेति। राधाशब्दः पुनरुक्तोऽप्यदुष्टः यदुक्तं—

१ केलिशब्देन च महाकाव्यलक्षणेषु नै पुण्यम्
२ अत्र जयति पदेन नमस्क्रिया
३ प्रस्थितयोः
४ कोपाविष्कारे

**विषादे विस्मये हर्षे कोपे दैन्येऽवधारणे ।**
**प्रसादनेऽनुकम्पायां पुनरुक्तं(१) न दुष्यति ॥ इति ॥**

केपि त्वय्येवायं जातविश्वासः त्वया नीयमानो गमिष्यतीति अवधारणार्थमेवकारं वर्णयांचक्रुः । ननु कथं दिवारात्रिशङ्केत्याह । मेघैर्मेदुरमित्यादि, अम्बरमाकाशं मेघैर्मेदुरं स्निग्धमाच्छादितमिति यावत् । वनभुवः श्यामास्तमालद्रुमैरिति, अरण्यप्रदेशाः तापिच्छवृक्षैः श्यामला इत्यर्थः । जलदाच्छन्नतया रवेरदर्शनं तमालश्यामकाननत्वेनान्धकारबाहुल्यमतो रात्रिशङ्का जागरूकेत्यभिप्रायः । ननु केलयः जयन्तीति । केलीनां जयक्रियाकर्त्तृत्वं न घटते । अचेतनस्य चिकीर्षाया अभावात् । उत्कर्षप्रतिपत्तिरेव जयतेरर्थः । तथाह नियतोत्कर्षप्रतिपत्तौ सकर्मकोऽयम् । तथा जयति शत्रुं राजेति अनियतोत्कर्षप्रतिपत्तौ तावपि सकर्मकः, यदि तत्र शत्रुं जयति । सर्वोत्कर्षप्रतिपत्तौ अकर्मकः । यथा जयति रघुवंशतिलक इति । यश्च सर्वोत्कृष्टः कस्तं न नमतीति जयत्यर्थेन नमस्कार आक्षिप्यते । ततो मुख्यार्थबाधेनार्थान्तरसंक्रमितवाच्य व्यङ्ग्यस्वरूपतया राधामाधवयोः रहः केलयो नमस्कारार्हा इत्यर्थः । तेन रहः केलिं प्रति प्रणतोऽस्मीत्यर्थः सम्पाद्यते । राधामाधवयोरिति राधा च माधवश्चेति द्वन्द्वः । क्वचिदनभ्यर्हितस्यापि पूर्वनिपातः स्यात्प्रायिकं चैतत्सूत्रमित्युक्तेः । यद्वा शृङ्गाररसप्रधानं हि काव्यं शृङ्गाररसे च स्त्रिया एव प्राधान्यमिति राधायाः प्राङ्निपातः । नक्तं भीरुरयं त्वमेव तदिममित्यत्रान्वादेशाभावादेनादेशो न । अस्त्ययं दण्ड इममानयेत्यत्र यत्र तत्किञ्चिद्विधाय कार्य्यात्कार्य्यान्तरं निर्दिश्यते सोऽन्वादेश इति । जयादिति काशिकाकारः । राधाविशाखा (२) माचष्टे राधागोपाङ्गनामपि । "दामोदरो हृषीकेशः केशवो माधवः स्वभूः" इत्यमरः । "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः । "रहस्तत्त्वे रतेगुह्ये" इति मेदिनी । "नक्तं च रजनाविति" इत्यमरः ॥ शार्दूलविक्रीडितं छन्दः ॥ १ ॥

## ॥ श्रुतिरञ्जनी ॥

श्रीकृष्णशरणम् । श्रीराधाकान्तशरणम् । श्रीराधाकृष्णौ जयतः । मेघैरिति । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्त इतिन्यायेन काव्यादि पद्यादौ माङ्गलिके शब्दे प्रयोक्तव्ये सति श्रीपदगुरुत्रयात्मकभूमिदेवताको मगण आदौ

१ पौनरुक्तम्
२ राधाविशाख

प्रयोज्य इति। उक्तं च मगणस्य श्रीपदत्वम्। उर्वी मास्त्रिगुरुः श्रियं वितनुते न स्वस्ति लोकजीवितमिति। यद्यप्यादौ मगणः साधुस्तथाप्यादौ म-वर्णप्रयोगे दोषोऽस्ति। तदुक्तं भयशोक-मरण-क्लेशदाहान् कुरुते क्रमादिह पवर्ग इति शुभवर्णप्रयोग नियमोऽपि कविकण्ठपाशो कथित इति।

वर्णं गणं च काव्यस्य मुखे कुर्यात्सुशोभनम्।
कर्त्तृनायकयोस्तेन कल्याणमुपजायते ॥

अन्यथा कष्टसम्पत्तिरनयोरेव सम्भवेदिति। समाधानं तु जयदेवकवेर्महानुभावत्वाददोषः। तदुक्तं कविकण्ठपाश एव।

जगदुदयस्थितिविलयसहिताः खलु लोकविख्याताः।
सामानुग्रहकुशला देवा ऋषयो नरा ये वै ॥
तेषामीश्वरसदृशां काव्यग्रथनं सलक्षणं यस्मात्।
न प्रत्यवायदोषस्तेषां तेजोविशेषेण ॥

इत्यलं गुण दोषगवेषणया। प्रकृतमनुसरामः।

हे राधे! यस्मात् कारणात् अम्बरमाकाशं मेघैर्मेदुरं निविड़मिति यावत् वर्त्तत इति शेषः। अत्र यत्तदोर्नित्यसम्बन्धादितिन्यायेन तदिममित्यत्र (१) तच्छब्दस्य प्रक्रान्ताद्यर्थभावेन यच्छब्दसापेक्षत्वात्। तत्सामर्थ्यादागतस्य यस्मादित्यस्य साधारणत्वेनागतस्य च वर्त्तत इत्यस्य च यथा वनभुव इत्यादावन्वयोऽप्यवगन्तव्यः। यस्मात् तमालद्रुमैस्तापिच्छतरुभिः वनभुवो मार्गस्थली विपिनभूमयश्च श्यामाः नीलवर्णाः, अविस्पष्टमार्गा इति यावत्। वर्त्तन्त इति शेषः। अत्र तमाल(२) द्रुमैरितिपदं तन्त्रेणोपात्तम्। सकृदुच्चरितमनेकोपकारकं तन्त्रमिति तन्त्रविदः कथयन्ति। तेनायमर्थः संपन्नः। तमालद्रवस्तापिच्छतरवः। "पलाशाद्रुद्रुमागमा" इत्यमरः। तेषामिव मा येषां ते तादृशाः 'मा निषेधे प्रभालक्ष्म्योर्वाणीनद्योः सरस्वतीति" नानार्थदीपिकायाम्। इति व्युत्पत्त्या इदं पदं मेघैरित्यनेनापि योज्यम्। तथा च नीलमेघस्यावश्यं वृष्टिसूचकत्वेन कृष्णस्य गृहप्रापणोपदेशः समञ्जसो भवति। तथा तादृशमेघस्य गाढान्धकारसम्पादकत्वेन कृष्णस्य वर्ण्यमानतारविदूरोऽपि नियन्त्रितो भवति। तथा नक्तं रात्रिश्च। तथायं कृष्णो भीरुर्भयशीलश्च। एकाकी सन् गृहं प्रतिगन्तुमसमर्थश्चेत्यर्थः अथवायं नक्तं रात्रौ भीरुरिति वा तत्पूर्वोक्तादम्बरमेदुरत्वादिकारणात्। त्वमेव

१ तदिमनित्यत्र
२ तमालद्रुरिति

इमं भयशीलं बालकृष्णमित्यत्र । एकशब्दानुकथनमात्रेणेदम् एनादेशो न भवति । एष छन्दोऽधीते एनमध्यापयेदित्यादाविव । एनक्रियाप्रयोगाभावात् । अतएव एतमातङ्कितं विद्यादित्यत्रापि एकशब्देनानुकथनाभावादेकक्रियाप्रयोगाभावाच्च नैतदेनादेश इति केचित् । "अथैनमद्रेस्तनयाशुशोचेत्यादावेकक्रियाभावेऽप्येनादेशस्य दृष्टत्वात्"। प्रह्लादनं ज्योतिरनेनेत्यादावेनादेशस्थलेऽपि एनादेशाभावादेनादेशनियमं कवयः प्रायशो नाङ्गीकुर्वन्तीत्यर्थ इत्यलमतिचर्च्चया । गृहं स्वकीयवासमन्दिरं प्रापय नय, "गतिबुद्धीत्यादिना द्विकर्मकत्वम् ( १ । ४ । ५२) त्वमेवेत्यत्र तस्या एव तस्मिन्नेवानुरागातिशयद्योतनार्थमेवकारः । अतएव तयोरुत्तरत्रप्राधान्येन वर्ण्यविहारस्वारस्यं च इत्थमनेन पूर्वोक्तप्रकारेण "इदमस्थमुरिति (५ । ३ । २४ ) थमुप्रत्ययः । नन्दनिदेशतः नन्दगोपस्य शासनात् अथवा इत्थं चासौ नन्दनिदेशश्च, तस्मादिति वा पञ्चम्यास्तसिलेति (५ ।३।७) तसिल् प्रत्ययः । सुप् सुपेति समासः । एवंभूतनन्दनिदेशादित्यर्थः । चलितयोः कालिन्दीतटान्निजावासं प्रयातयोरित्यर्थः । राधानाम काचिद्बल्लवाङ्गना माधवः श्रीकृष्णः तयो रहः केलयः एकान्तक्रीडाः, वासकसज्जाद्यष्टविधनायिकोचितश्रृङ्गारचेष्टा इति यावत् । इममर्थमुत्तरत्र कविरेव स्फुटीकरिष्यति । यमुनाकूले कालिन्दीतटप्रदेशे कुञ्जाश्च द्रुमाश्च । अध्वनि गृहागमनमार्गे कुञ्जद्रुमाः अध्वकुञ्जद्रुमाः तान् प्रति प्रत्यध्वकुञ्जद्रुमम् । 'अव्ययं विभक्तीत्यादिना (२।१।६) यथार्थे वीप्सायामव्ययीभावः ।

अध्वनि प्रतिकुञ्जं प्रतिद्रुमामित्यर्थः । अथवा अधुना सहेत्यर्थे प्रत्यध्वं प्रतिकुञ्जं प्रतिद्रुममित्यर्थः । अध्वन्यप्येकान्ते क्रीडाः सम्भवन्तीति कविप्रसिद्धिः । अत एकान्ते नैर्भयेन क्रीडामन्ये ज्ञास्यन्तीति धिया अतिपरिचयादिह रतिर्भवतीति न्यायं मनसि निधाय विहाराणामभ्यास विहारसूचनार्थं तत्प्रयोग इत्यवगन्तव्यम् ।

कुञ्जो नाम लतागृहं जयन्ति सर्वोत्कर्षेण वर्त्तन्ते अथवा राधामाधवयोर्यमुनाकूले प्रत्यध्वकुञ्जद्रुमं या रहः केलयः ता जयन्तीति वा योजना, अस्मिन् पक्षे जयन्तीति पदं सरसं भवति। अत्र यत्तच्छब्दयोः प्रयोगाभावेऽपि तदर्थोऽङ्गीकर्त्तुं शक्यते, तदुक्तं काव्यप्रकाशे सप्तमोल्लासे यतच्छब्दयोः प्रयोगाभावेऽपि तयोरर्थोऽङ्गीकर्त्तुं शक्यत इत्युक्त्वा इदमुदाहृतम्—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पस्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधि विपुला च पृथ्वी ॥

इत्यत्र तृतीय चरणे य उत्पष्यते तस्मै अयं यत्र इति यत्र नः शब्दाङ्गीकारेण तैरेवै व्याख्यातम् । तद्वत्प्रकृतेऽपीति न कोऽपि विरोधः । अत्र जयतेः सर्वोत्कर्षपरत्वं च । इतिवचनादवगन्तव्यम् ।

निपाताश्चोपसर्गाश्च धातवश्चेत्यमी त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शकः ॥

ननु चात्र विघ्ननिरासकत्वेन नमस्कारस्यैव कर्त्तव्यत्वं युक्तं, न तु सर्वोत्कर्षेण वर्त्तमानस्यास्येति चेन्न, जयतेः सर्वोत्कर्षपरत्वात्तस्य जयत्यर्थे नमस्कार आक्षिप्यते इति । तथा च ताः रहकेलीः प्रणमामीत्यर्थोऽपि लभ्यते । तथा च विघ्ननिरासोऽपि सम्भवतीति भावः । अत्र च आत्मारामस्यापि भगवतः श्रीकृष्णस्य मायावशात्परानुजिघृक्षया वा रहः केलयः सम्भवन्त्येव । तदुक्तं श्रीमहाभारते—

भगवानपि ता रात्री शरदोत्फुल्लमल्लिकाः ।
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥

इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ।
प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥इति॥

न चात्र धर्मशीलनार्थमवतीर्णस्य भगवतः श्रीकृष्णस्य परदाराभिमर्षणमयुक्तमिति शक्यम् । महात्मनस्तद्दोषाभावात् । उक्तं च तत्रैव

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥इति॥

न चात्र श्लोके प्रौढ़नायकस्य बाल्यगुणप्रतिपादनाद्वाक्यदोषः शङ्क्यः । बालस्य सतः पूतनाशकटासुरप्रमुखभञ्जादौ प्रौढ़चेष्टाया दृष्टत्वात् पितृवाक्यानुवादरूपत्वाच्च लोकेऽपि प्रीत्या प्रौढ़मपि पुत्रं पिता बालत्वेन व्यवहरन् दृष्टबालस्यैव सतः प्रौढ़चेष्टा-

वर्ण्णनं तस्य लोकोत्कृष्टतासूचनार्थमवगन्तव्यम् । न चात्र मेघैरित्यनेन वर्षर्तु-प्रतीतेरुत्तरत्र वसन्ते वासन्तीयत्र च क्रीड़ोपयोगि वसन्तर्तु प्रतीतेर्विरोधः । भगवतः क्रीड़ानां बह्वर्तुव्यापित्वस्य पुराणान्तरे प्रसिद्धस्य विवक्षितत्वात् । अन्यथा शरत्कालप्रसिद्धानां रासक्रीडानां रासे हरिमित्यत्र रासे सहनृत्यपरेत्यत्र च वर्णनाविरोधापत्तेः । केतकीगन्धबन्धुः केतकदन्तुरिताश इत्यत्र वर्षर्तुप्रसिद्ध-केतकवर्ण्णनाविरोधाच्च ।

वर्षाकालस्याऽभ्युद्दीपकत्वेन । क्रियादोषयोगित्वाच्च, अतुगिरसृतुभिर्वितायमान-मित्यादौ सर्वैश्चरसैवार्थं सर्वदा सर्वर्तुसमागमप्रतिपादकपुराणकाव्यविरोधा-पत्तेरित्यलमति विस्तरेण ।

अत्र च परस्परावलोकनपरिचुम्बनाद्यनेकभेदः सम्भोगश्रृङ्गारः अभिलाप-विरहेर्ष्याप्रवासशापजत्वेन पञ्चविधो विप्रलम्भश्रृङ्गारश्च यथासम्भवं प्रतिपाद्यः न चात्र राधामाधवयोः प्राथमिक सम्भोगः परन्तु विरहेर्ष्यामानान्तरसम्भोगः ।

निभृतनिकुञ्जेत्यादौ तस्यैव सुज्ञानादिति एवंरूपस्य श्रृङ्गारस्य विष्णुरूप सामवेदादुत्पत्तिः । तदुक्तं—

सामऋग्यजुरथर्वेभ्य श्चत्वारः प्रथमे क्रमात् ।
जाता हास्यादयस्तेभ्यः शान्तस्तूपनिषद्गणात् ॥

श्रृङ्गारस्याधिदेवता विष्णुः, तदुक्तं—

शौरिः शक्रो महाकालो रुद्रोगणपतिर्विधिः ।
कालो यमः परं ज्योतिरित्येषामधिदेवता ॥

एतन्नायकलक्षणं तु—

स्थित्वानुरागः सुभगः कलाभिज्ञो विलासवान् ।
चतुर कामतन्त्रेषु श्रृङ्गाररसनायकः ॥

इत्ययं चतुष्प्रकारः । तदुक्तम्—

अनुकूलो दक्षिणश्च धृष्टश्च शठ इत्यपि ।

एतन्मध्ये कृष्णः शठ नायको दक्षिणश्च । उक्तमनेन कविना सप्तमसर्गे—

नायातः सखि निर्द्दयो यदि शठस्त्वं दूति ! किं दूयसे ।
स्वच्छन्दं बहुबल्लभः स रमते किं तत्र ते दूषणमिति ॥

बहुवल्लभो नाम दक्षिणनायकः । लल्लक्षणं तु—

एकस्यां सक्तचित्तोऽपि कान्तास्वन्यासु यः समम् ।
वर्त्तते गूढरागः सन् प्रोक्तोऽसौ दक्षिणो बुधैः ॥इति॥

गूढविप्रियकृच्छठः नायिकामात्रविप्रियकारीत्यर्थः । रसानुरागवृत्तिरत्र कौशिकी । तदुक्तं—

शृङ्गारे कौशिकी वृत्तिर्नियता समुपाश्रिता इति । तस्या लक्षणं तु—

**या श्लक्ष्णनेपथ्यविशेषयुक्ता**
सुसंयुता या बहुनृत्यगीतैः ।
**कामोपभोगप्रसवोपरागां**
तां कौशिकीं वृत्तिमुदाहरन्तीति ॥

अस्या अङ्गानि तु—

नर्मस्फूर्जो नर्म च नर्मस्फुटश्च नर्मगर्भश्च ।
कौशिक्याः संप्रोक्तान्यङ्गान्येतानि चत्वारि ॥
प्रियोपच्छन्दनकृते कृतं वाग्वेशचेष्टितैः ।
विदग्धे क्रीडितं नर्म हासेच्छाभयमानभाक् ॥

नर्मस्फूर्जः स विज्ञेयः सम्भोगोभयमाश्रितः ।
नर्मस्फोटो भवेद्भावैः सूचितोऽन्यरसोदयः ॥
प्रच्छन्ननेतृव्यापारो नर्म शतसिद्धय इति ।

पाकोऽत्र द्राक्षापाकः । तल्लक्षणं तु— द्राक्षापाकः स विज्ञेयो विहरन्तः स्फुरद्रस इति । अलङ्कारद्वयं तु यथासम्भवमूह्यम् । अत्र श्लोके राधामाधवरहःकेलिविषयरतिप्रतीतेर्भावध्वनिः । रतिर्देवादिविषया भाव इत्यभिधीयत इति लक्षणात् । अलङ्कारस्तु प्रथमार्द्धेऽम्बरमेदुरत्वादि वाक्यार्थानां गृहप्रापणहेतुत्वप्रतीतेर्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं द्विधा मतमिति लक्षणात् ।

इमं गृहं प्रापयत्यनेन राधामाधवयो रहःकेलयो जयन्तीत्यनेन च एकस्मिन्नेव कृष्णे प्रतीयमानयोर्बालत्वप्रौढत्वयोराभासमानस्य विरोधस्य भगवतो हरेरचिन्त्य महिमत्वेन समाधानाद्विरोधाभासः ।

**वाग्देवता चरितचित्रितचित्तसद्मा**
**पद्मावतीचरणचारणचक्रवर्त्ती ।**
**श्रीवासुदेवरतिकेलिकथासमेत-**
**मेतं करोति[1] जयदेवकविः प्रबन्धम् ॥२॥**

---

एक वर्णावृत्त्यां वृत्तिलक्षणो वृत्त्यनुप्रासाख्यः शब्दालङ्कारः । तदुक्तं काव्य-प्रकाशे—

वर्णसाम्यमनुप्रासश्छेको वृत्तिगतो द्विधा ।
सोऽनेकस्य सकृद् पूर्वः एकस्याप्यसकृत्परः ॥ इति ॥

एतेषां तिलतण्डुलवत् संश्लेषात् संसृष्टिरलङ्कारः । तिलतण्डुलसंस्कृतन्यायात् यत्र परस्परं संश्लिष्येयुरलङ्कारा सा संसृष्टिर्निगद्यते । शार्दूलविक्रीड़ितं वृत्तम् । सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितमिति लक्षणात् ॥१॥

॥ सर्वाङ्गसुन्दरी ॥

जयदेव नामा कविरेतं प्रबन्धं गीतगोविन्दाख्यं करोति । कीदृशं श्रीवासुदेवरति-केलिकथासमेतं श्रीयुक्तवासुदेवस्य रतौ केलिः परिहासादिः । तदाश्रिता या कथा तया समेतमित्यर्थः । जयदेवः कीदृक्, वाग्देवताचरितचित्रितचित्तसद्मा, वाग्देवता सरस्वती तस्याश्चरितं कवित्वादिकं तेन चित्रितं चित्ररूपेण लिखितं चित्तमेव सद्म यस्येति विग्रहः । आश्रयस्य गीतगोविन्दस्य योग्यता प्रतिपादनार्थं चित्तस्य सद्मतयारूपता साध्वेव सद्म चित्यते, तेन साध्वितसद्मनः साधुताप्रतिपादनार्थं चित्रितशब्दोपादानं "गृहगेहोदवसितं वेश्म सद्म निकेतनमित्यमरः ।" पुनः कीदृक्, पद्मावतीचरणचारण-चक्रवर्त्ती, पद्मावती लक्ष्मीः, तस्याश्चरणयोश्चारणचक्रवर्त्ती नटश्रेष्ठो वा ।

---

१ ग–छ तनोति

"चारणः कथितो भृत्ये नर्त्तके स्तुतिपालके" इति कोषः । 'चक्रवर्त्ती सार्वभौमः नृपोऽन्यो मण्डलेश्वरः" इत्यमरः । अत्र वाग्देवतेत्यनेन कवेः पाण्डित्यम् । पद्मावतीचरणचारणेत्यतनेन लक्ष्म्यां भक्त्यातिशयेन कवेः दारिद्र्यापगमः । अवश्यं कविना दारिद्र्योपशमाय यतनीयं, यतो दरिद्रकवित्वस्य जनाश्रद्धेयत्वात् । यदुक्तं विष्णुपुराणे—

सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ।
पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ इति ॥

पद्मावती पद्मं कमलमस्त्यस्याः उषितश्चेति ङीप्, संज्ञायामित्यनुवृत्तौ शरादीनां चेति दीर्घः, अत्र जयदेवकवेः पद्मावती भार्या तदुपादानात् कवेरन्याङ्गना-वैमुख्यं शृङ्गारित्वं च इत्याह धृतिदासादेः समीक्षिताभिधानम् । अन्यथा अनेकेष्वेव सत्सु प्राधान्यसम्भवात् कवेः पद्मावत्याः उपपतित्वापत्तिः । नच पद्मावतीशब्दस्य लक्ष्मीवाचितायां कवेरन्याङ्गनावैमुख्यं शृङ्गारित्वं च प्रतिपादितं न भवति इति वाच्यं स्वयमेवास्यार्थस्य जयति पद्मावतीरमणेत्यनेन पुरस्तात्कविना प्रतिपादित-त्वात् । तदेवं मुख्यवृत्या पद्मावतीशब्दो लक्ष्मीमाचष्टे, च्छलात्तु कवेः प्रियास्मरण-मित्येतत्तद्व्यवस्थितं यथा भारवेः सर्गसमाप्तौ लक्ष्मीशब्दः । वसन्ततिलकं वृत्तम् ॥२।

॥ श्रुतिरञ्जनी ॥

अथ जयदेवकविः स्वकविताया बीजशुद्धिं सूचयन् चिकीर्षितं निर्दिशति, वागदेवतेति । वाचाभिमानिनी देवता वागदेवता । वागरूपा देवता वाग्देवता सरस्वती तस्याश्चरितं विहरणं तेन चित्रितं संजातचित्रं "तारकादित्वादितच् प्रत्ययः ।" अथवा चित्रितं चित्रवत्कृतं, चित्रशब्दात्तत्करोति "णिचि कर्मणि क्तः", पक्षद्वयेऽपि चरितालंकृतमित्यर्थः । तादृशं चित्तसद्म चेतोमन्दिरं यस्य तादृशः निरन्तरसरस्वतीनर्त्तनरङ्गमानस इत्यर्थः ।

यथा लोके कयाचित्कामिन्या विविधैः शिल्पैश्चित्रितं गृहं सर्वानन्दकरं भवति तद्वत्पठितेऽपीति द्योतयितुं चित्रितमित्युक्तमिति ज्ञेयम् । अनेन वक्ष्यमाणप्रबन्धानु-

ग्राहकः समग्रः सरस्वती प्रसादः सूचितः । इयमेव कविताया बीजशुद्धिर्नाम ।

किं च पद्मावती नाम जयदेवस्य निजनायिका । तदुक्तमनेनैव कविना दशम-सर्गे—"जयतु पद्मावतीरमणजयदेवकवि भारती उषितमिति गीतमिति ।" तस्याश्चरणौ पादौ तयोश्चारणा नृत्यविशेषाः तेषां चक्रं समूहस्तस्य वर्त्ती प्रवर्त्तकः । अथवा चारणेषु चक्रवर्त्ती सार्वभौमः तत्रातिप्रवीण इत्यर्थः । अथवा चारणचक्रमिव चारणचक्रम् । "उपमितमित्यादिना समासः" । चक्राकारनृत्यविशेष इत्यर्थः । तत्र वर्त्ती चारणस्य कुण्डलिनृत्यभेदत्वात्तस्य चक्राकारत्वमवगन्तव्यम् । चारणलक्षणं तु रामदेवीये—

उद्यत्सु वाद्यचक्रेषु हा हा हूंकारभूषितम् ।
सरसान्दोलनास्तानप्रसादगुणगुम्फनात् ॥

सौराष्ट्रा देशजा यत्र चारणा गणकाकुभिः ।
तत्तद्रसोचितै रागैर्गायन्त्यो बहुभङ्गिभिः ॥

करतालैरनुगतैः पादन्यासैः समुद्धतम् ।
भ्रमणैरपि यन्नृत्यं शून्यनृत्यं वितन्यते ॥

नार्य्यश्चेन्मण्डलावर्त्या प्रविशन्त्यवगुण्ठिताः ।
भवेच्चारणनृत्यं तु तत्सौराष्ट्रपतेः प्रियम् ॥इति॥

अत्र ताम्बूलमभ्यभिसमर्य सुवाद्य नृत्यगीतैः सुतृप्तमभिपूजयतां पुरावदिति । क्रमदीपिकायां भगवतः पुरुषोत्तमस्य नित्यपूजाप्रतिपादकचतुर्थपटले प्रतिपादितं पूजा-विधानम् । संस्तवया धर्मश्च कर्त्तव्यः सोऽनया सहेति वचनार्थं चावकलय्य भगवद्भक्ताग्रणिर्जयदेवः स्वकान्तां पद्मावतीमेव स्वेष्टदेवतायाः कृष्णस्याग्रे प्रतिदिनं पूजान्ते नर्त्तयतीत्यनुसन्धेयम् । एतादृशो जयदेवकविः वर्णयिता ।

श्रिया युक्तो वासुदेवः श्रीवासुदेवः । राक्षसवधार्थं वसुदेवसूनुत्वेन आविर्भूतः । वसुदेवस्यापत्यं पुमान् । यत्रेञ् प्रत्ययः, ऋष्यान्धकवृष्णिकुरुभ्यश्चेति प्रतिषेधावत्ता । वसन्त्यस्मिन् भूतानीति वासुः अथवा अन्तर्य्यामित्वेन सर्वत्र वसतीति वासुः । तदुक्तं श्रीविष्णुपुराणे—

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥इति॥ —

वसतेरुणादयो बहुलमिति तन् प्रत्ययः । स चासौ देवश्चेति विग्रहः । श्रीग्रहणं तेन सह लक्ष्म्या अनपायिनीत्वादवगन्तव्यम् । एतादृशस्य वासुदेवस्य या रतिकेलयः श्रृङ्गारचेष्टास्तासां कथाप्रबन्धानुरूपत्वेन लोकप्रख्यापनं तया समेतं वासुदेवश्रृङ्गार-चेष्टावर्णनात्मकमित्यर्थः । अथवा श्रीश्च वासुदेवश्च तयो रतिकेलिकथासमेतमेतम्। एतच्च "पद्मापयोधरेत्यत्र श्रितकमलाकुचमण्डलेत्यादौ" तत्स्पष्टम् । यद्वा श्रीशब्देन तत्कल्पा राधा कल्प्यते । तस्या वासुदेवस्य च रतिकेलिकथासमेतमिति वा । अनेन प्रबन्धस्य साफल्यं सूचितम् । तदुक्तं हरिभक्तिसुधोदये—

सा पङ्क्त्यापि कवेर्वाणी हरिनामाङ्किता यदि ।
सा वाणी सफला ज्ञेया विफलान्यसमाश्रया ॥

एतं वक्ष्यमाणप्रबन्धं चतुर्धातुसमेतं षडङ्गभासुरं वृत्तमानं ताण्डवनामधेयं वाक्सन्धिमित्यर्थः । तदुक्तं गीतचूडामणौ—

चतुर्भिर्धातुभिः षड्भिश्चाङ्गैर्यस्मात्प्रयुज्यते ।
तस्मात् प्रबन्धः कथित प्रतापपृथ्वीभूभुजा ॥
उद्ग्राहाद्यास्तु चत्वारः स्वरादीनि च षट् तथा ॥
वसन्ति यत्र तज्ज्ञेयः प्रबन्धो वस्तुसंज्ञया ॥
उद्ग्राहः प्रथमो भागस्तथा मेलापकध्रुवौ ।
आभोगश्च प्रबन्धस्य चत्वारो धातवो मताः ॥
पदतेनौ च विरुदपाटौ तालस्वरौ तथा ।
अङ्गान्येतानि षट् प्राहुः प्रबन्धस्य यथाक्रमम् ॥इति॥

एतत्स्वरूपं सङ्गीतरत्नाकरे द्रष्टव्यम् । विस्तरभयान्नात्र लिख्यते ।

वृत्तलक्षणं—

छन्दःशास्त्रे न केनापि तालेनेष्टेन गीयते ।
स्वरैर्युक्तं वियुक्तं वा वृत्तं गायन्ति तद्विदः ॥
नियमोऽन्त्यादिवर्णानां छन्दो जातिप्रसिद्धतः ।
गणानां मात्राणां तत्र प्रबन्धकैरुदीरितम् ॥
त्रिप्रकारमिदं वृत्तं सममर्द्धसमं तथा ।
विषमं चेति विज्ञेयं छन्दःशास्त्रविशारदैः ॥
समवृत्तं समैः पादैर्विषमं विषमैर्पदैः ॥इति॥

अतएवात्र गीतगोविन्दे क्वचिच्च 'वहति मलयसमीर' इत्यत्र पञ्चमसर्गे विषम-पदप्रयोगोपपत्तिरवगन्तव्या । तालार्णवलक्षणप्रबन्धलक्षणं तु—

रागेनैकेन केनापि गद्यपद्यैर्यदृच्छया ।
तालैश्च बहुभियुक्तस्तालार्णव इतीरितः ॥इति॥

चम्पूरूपमित्यर्थः । तदुक्तं—

गद्यं पद्यं च मिश्रं च त्रिविधं काव्यमुच्यते ।
पद्यं तु छन्दसा बद्धं गद्यं काव्यकदम्बकम् ॥
गद्यपद्यात्मकं मिश्रं चम्पूरित्यभिधीयते ॥इति॥

पदमालेत्यपरे । चम्पू एतादृशं प्रबन्धं करोति । करिष्यति निर्मास्यतीत्यर्थः । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति भविष्यति लट् । अथवा एतस्यापि शब्दस्य प्रबन्धान्तर्गतत्वेनारब्धपरिसमाप्तिप्रतिपादकरूपलट्प्रयोगोपपत्तिर्वा । अत्र करोतीति प्रथमपुरुषः रामः करोतीतिवत् कञ्चनातिशयं द्योतयति । पद्यं गीतात्मकं प्रबन्धं रचयितुं जयदेव एव समर्थो नान्य इति भावः ।

यत्करोषि यदश्नासि यद्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ।

यदि हरिस्मरणे सरसं मनो
यदि विलासकलासु कुतूहलम् ।
मधुरकोमलकान्तपदावलीं
शृणु तदा जयदेव सरस्वतीम् ॥ ३ ॥

---

इति भगवद्वचनानुरोधेन क्रियाफलस्य कर्त्तृगामितामीश्वराधीनतां च सूचयितुं परस्मैपदप्रयोग इतिभावः । अत्र च्छेकानुप्रासोऽलङ्कारः । वसन्ततिलकंवृत्तम् । "उक्ता वसन्ततिलका तभजाजगौ ग" इति लक्षणात् ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

सिद्धेऽपि प्रतिपादितार्थे हृदयाह्लादकत्वाभावात्कदाचिज्जनाः श्रद्धेयुरित्याह यदीत्यादि । हे वैष्णवजन ! हे विलासिजन ! यदि हरिस्मरणे सरसं मनस्तिष्ठति, यदि विलासकलासु कुतूहलमस्ति, तदा जयदेवसरस्वतीं शृणु इति वाक्यार्थः । केवल हरिस्मृतौ वैष्णवजनस्यैव श्रद्धा, केवल-विलासकलासु विलासिजनस्यैव श्रद्धा इत्युभयोरुपादानम् । कीदृशीं सरस्वतीं, मधुरकोमलकान्तपदावलिं, मधुरा रसवती, कोमला सुकुमारा, कान्ता लौकिकार्थापदावलिः यस्या इति विग्रहः, उक्तं च काव्यादर्शे –

"मधुरं रसबद्वाचि वस्तुनापि रसः स्थितः ।
अनिष्ठुराक्षरप्रायं सुकुमारमिहोष्यते ॥

कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमादिति विलासकलेति, विलासश्च कला चेति द्वन्द्वः कलाश्चतुःषष्ठिरूपाः, क्रीडोपभोगशालित्वं विलासः, यदुक्तं नाट्यलोचने –

स्थानासनगमनाना वक्त्रभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥इति स्त्रीविलासः ॥

स्थितपूर्वः प्रियालापः सुखदुखे च तुल्यता।
धीरा दृष्टि गतिश्चित्रा विलासः परिकीर्त्तितः ॥

इति पुंविलासः द्रुतविलम्वितं नाम वृत्तम्। द्रुतविलम्वितमाह नभौभरौ ॥३॥

॥ श्रुतिरञ्जनी ॥

जयदेवकविः स्ववाग्वैभवस्य लोकोपादेयतासामग्रीमाह यदीति। अत्र श्लोके शृणु मनः शब्दयोः सामर्थ्याज्जन तवेति पदद्वयमपाहृत्तव्यम्। हे जन! तव मनः हरि-स्मरणे उपासकस्याविद्या तत्कार्याणि पापानि वा हरतीति हरिः, तस्य स्मरणे चिन्तनरूपे तृतीयभक्तौ उक्तं च।

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ इति॥

यदि सरसं सरागं साभिलाषमिति यावत्, "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः। भवेदितिशेषः। अस्ति भवयोः साधारणत्वात्। तथा विलासेषु विभ्रमेषु शृङ्गारचेष्टास्विति यावत्। कलासु कामकलासु च। तव मनो यदि कुतूहलं कौतुकि स्यात्। कुतूहलशब्दादर्श आदित्वादच् प्रत्ययः। आमुस्मिकैहिक सैख्यापेक्षं यदि स्यादिति पादद्वयसमुदायार्थः। अत्र ननु लोकोपादेयत्वं सूचितम्। तदा तर्हि हे जन मधुराणि माधुर्यगुणयुक्तानि, कोमलानि प्रसादगुणसम्पन्नानि, कान्तानि ओजोगुणघटितानि, यानि पदानि, तेषामावलिः समूहो यत्र, तादृशीं मधुरेत्यादि पद्यावलिविशेषणं वा अत्रेवं बोद्धव्यम्। दशगुणा इति केचित्, श्लेषादयश्चतुर्विंशति गुणा इत्यन्ये। माधुर्यादयस्त्रय एव गुणा इति काव्यप्रकाशकारः, तदुक्तं "माधुर्य्योजः प्रसादाख्यास्त्रयस्त पुनर्दशेति" इदमोजादिगुणत्रयेण यत्र जयदेवेन गुणसम्पत्तिरुक्तेति, गुणत्रयलक्षणं तु भारतीये —

आनन्दकत्वं माधुर्य्यं गलितत्वस्य कारणम्।
सम्भोग-शान्त-करुण-विप्रलम्भेषु सोत्कृयम् ॥

**वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां**
**जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः[१] ।**
**शृङ्गारोत्तरसत्प्रमेयचरनैराचार्यगोवर्द्धन-**
**स्पर्द्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः॥४॥**

गलितत्वं नाम चित्तस्य द्रवीभावः, ओजश्चित्तस्य दीप्त्या सविस्तारस्य च कारणम्।

वीरवीभत्सतरौद्रेषु क्रमेणातिशयान्वितम् ।
वस्त्रं जलमिव स्वच्छं तृणराशिमिवानलः ॥
यश्चित्तं व्यश्नुते तूर्णं स प्रसादोऽखिलाश्रयः ॥इति॥

तथाच एतादृशगुणसंपन्नां जयदेवसरस्वतीं जयदेवकृतां प्रबन्धरूपां वाणीं शृणु आकर्णय । श्रुवः शृचेति शृणोतेः श्नुप्रत्ययः शृभावश्च । प्रत्ययादसंयोगपूर्वादिति हेर्लुक् । अस्यैवार्थान्तरम्। हे मनः हरेः स्मरणेऽसरसमितिच्छेदः असरसं विरसं ? यदि भवेः, तदा तर्हि असारस्य निवृत्तये, भक्तविशेषणविशिष्टां जयदेवसरस्वतीं शृणु । तच्छ्रवणे तदसारस्यनिवृत्तिद्वारा हरिस्मरणप्रावण्यं भविष्यतीतिभावः । यद्वा कामुकस्य कुतूहलं मनः, केन निमित्तेन, कदाचिद् विलास कलासु असरसंस्याः यद्वा, यदि मनः विलासकलासु वाह्यविभ्रम-कलास्वेव कुतूहलं कौतुकि स्यात् तन्निवृत्तये भक्तविशेषणविशिष्टां जयदेवसरस्वतीं शृणु । तदाऽसारस्य निवृत्तिद्वारा विलासकलाप्रावण्यं तन्निवृत्तिर्वा तव भविष्यतीति भावः । यद्वा यदि वाह्यविषयलीलालालसं स्यात् हरिविलासकलासु असरसं तदापि तन्निवृत्तये जयदेव-सरस्वतीं शृणु । तत्र हरिविलासप्रवणं स्यादितिभावः । शेषं समानम् । अत्र मनोमात्र-सम्भोधनम् । आस्वाददशायां कवेरपि सहृदयत्वमेवेति काव्यप्रकाशकारवचनात् । कवेः सतोऽपि जयदेवस्य मनसोऽपि सम्बोधनत्वमविरुद्धमिति भावः । अथवा तद्व्यतिरिक्तजनमनो वा सम्बोधनम् ॥३॥

॥ सर्वाङ्गसुन्दरी ॥

सम्प्रति कवीनां प्रशंसाव्याजेन निन्दां कुर्वन्नात्मनः प्रौढिमाह वाच इति ।

१ ख दुरूहाद्रुते

उमापतिधर नामा सान्धिविग्रहिको वाचः पल्लवयति विस्तारयतीत्यर्थः। एतेनास्य व्याख्याशक्ति दर्शिता, निन्दा तु पल्लवग्राहित्वात्। यदुक्तं—

पल्लवग्राहिपाण्डित्यं क्रयक्रीतं च मैथुनम्।
भोजनं च परायत्तं तिस्र पुंसां विडम्बनाः॥ इति।

शरणः श्लाघ्यो दुरूहद्रुते इति, दुरूहे प्रमेये समस्यादौ द्रुते शीघ्रत्वे च श्लाघ्यो द्रुत-कविरित्यर्थः। द्रुतदुःखोह्य पक्वे वा, निन्दा दुरूह द्रुत एव श्लाघ्यो नान्यत्रेत्येव धारणात् तु वेद्या। शृङ्गारोत्तरसत्प्रमेयरचनैराचार्य्यगोवर्द्धनस्पर्द्धी कोऽपि न विश्रुत इति शृङ्गारप्रधानसत्प्रमेयग्रथनायामाचार्य्यगोवर्द्धनं स्पर्द्धितुमभिभवन्तं कोऽपि न शक्त इत्यर्थः। अत्रापि अवधारणेन अभिभवितुमिति रसान्तरानभिप्राया निन्दा ज्ञेया श्रुतिधरो धोयी कविक्ष्मापतिरिति धोयी नामा कविराजः श्रुतिधरः श्रवणमात्रादेव गृहीत-ग्रन्थ इत्यर्थः। निन्दा तु श्रुतिधरतया हेयोपादेयबुद्धिरहितत्वात्पशुत्वापत्तेः। यदुक्तं—

उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः॥ इति।

अतएव ते गिरां सन्दर्भशुद्धिं ग्रन्थविशेषं न जानते। कस्तर्हि जानातीत्याह जयदेव एवेति। शार्दूलविक्रीडितं वृत्तम्॥ ४॥

॥ श्रुतिरञ्जनी ॥

ननु जयदेवसरस्वत्येव हरिस्मरणप्रवणैर्विलासकुतूहलिभिश्च किमिति श्रोतव्या। उमापतिधरप्रभृतीनां तत् समानं कवीश्वराणां विद्यमानत्वात्। तद्वाण्यपि श्रूयतामित्याशङ्क्य तेषां दोषाविस्करणपूर्वकं स्वस्य सारस्यं प्रकटयति। वाच इति। उमापतिधरनामान्वर्थसंज्ञः कविः। तादृशोऽपि स कविः वाचः पल्लवयति करोतीति। केवलं मृदुपदवतीं कवितां करोति। न तु रसगुणालङ्कारसम्पन्नामित्यर्थः। पल्लवशब्दान्मतुवन्तात्तत्करोतिणिचि "विन्मतोर्लुगिति" मतुपो लुक्। तथा शरणो नाम कश्चन कविः सोऽपि गिरां वाचां सन्दर्भशुद्धिं पदघटनापाटवं जानीते जानाति। केवलपदघटनाघटितां कवितां रचयति न त्वलङ्कारालङ्कृतामित्यर्थः। तथा च श्रुतिधरो नामान्वर्थसंज्ञः कश्चन कविः कोऽपि भक्तकविद्वयादत्यन्ताप्रसिद्ध इत्यर्थः। अतएव कोऽपीत्युक्तं, तथा धोयी नाम कश्चन कविः स तु न विश्रुतः न प्रसिद्धः स्वजनैरेव कविरिति व्यवह्रियते। न तु दिगन्तविश्रुत इत्यर्थः। अतः दुरूहाद्द्रुते कुतर्कं विना "अन्या"दित्यादिना

पञ्चमी"। शृङ्गारोत्तराणि शृङ्गाररसप्रधानानि यानि सत्प्रमेयरचनानि श्रुति कटुत्वादि दोषरहितानि निर्माणानि तैर्हेतुभिराचार्य्यगोवर्द्धनस्पर्द्धि।

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरते यस्तु तमाचार्य्यं प्रचक्षते॥

इत्युक्तलक्षणलक्षितो लोकगुरुर्जयदेव एव नान्य इत्यर्थः। अतएवात्र जयदेवेऽयोगान्ययोगव्यवच्छेदेन सकलापि कविता सामग्री वर्त्तत इति सूचयितुमेवकार प्रयोग इति भावः। तथा च जयदेवस्यैव सरस्वती श्रोतव्या न तूमापतिधरप्रभृतीनामितिभावः। अन्वयान्तरं वा, उमापतिधरः वाचः पल्लवयति, शरणः दुरूहाद्रुते शृङ्गारोत्तरसत्प्रमेय रचनैः श्लाघ्यः अर्थनिर्माणे चतुरः नत्वलङ्कारादिनिर्माणे। "गोवर्द्धनस्पर्द्धी विरोधी श्रुतिधरः तत्रापि धोयीकविः न विश्रुतः" सन्दर्भस्य रसगुणालङ्कारवाक्यधर्मसंघस्य शुद्धिं सम्यक्काव्यघटनासामग्रीं जयदेव एव जानीते नान्य इत्यभिप्रायः।

अतश्च तस्यैव वाणी श्रोतव्या नान्येषामितिभावः। अत्र जयदेवकवेरुमापतिधरप्रभृतिभिः कविभिरौपम्याक्षेपपूर्वकं व्यातिरेकप्रतिपादनाद्व्यतिरेकालंकारः।

शाब्दे वार्थेऽथवाक्षिप्ते औपम्ये वस्तुनोर्द्वयोः
यद्भेदकथनं सोऽयं व्यतिरेक उदाहृतः॥ इति॥

अत्र कविप्रसङ्गादिदं बोद्धव्यम्।

शुचिर्दक्षः शान्तः सुजनविनुतः सुनृतरतः
कलावेदी विद्वान् किल मृदुपदः काव्यचतुरः।
कृतज्ञो दैवज्ञः सदयहृदयः सत्कुलभवः
शुभाराागच्छन्दो गुणगणविवेकी स हि कविः॥

कायिकादिस्वरूपं तु—

कायिको वाचिकश्चार्थः शिल्पिको मार्दकानुगः।
विवेकी भूषणार्थी च कवयः सप्तकीर्त्तिताः॥१॥
आवापोद्धारकृद्याबन्मनसो रुचिरात्मनः।
कायिको वाचिकः शब्दवागाडम्बरकारकः॥२॥

॥ प्रथमः प्रबन्धः ॥

मालवरागेण[१] गीयते

**प्रलयपयोधिजले धृतवानसि वेदम्**
**विहितवहित्र–चरित्रमखेदम् ।**
**केशव धृतमीनशरीर जय जगदीश हरे ॥ध्रुवम्॥ १**

---

अर्थोऽभिधेयश्चित्रार्थी शिल्पिको ह्यचित्रकृत् ।
शब्दार्थं मार्दवापेक्षी कविः स्यान्मार्दवानुगः ॥३॥
शास्त्रालङ्कारसंस्कारी विवेकी कविपुङ्गवः ।
अलङ्कारैकनिष्ठो यो भूषणार्थी बुधैर्मतः ॥४॥

उदात्तादि स्वरूपं तु अस्मत्कृतप्रसन्नराघवव्याख्याने निपुणमुपपादितं द्रष्टव्यम् ॥ ४।

॥ सर्वाङ्गसुन्दरी ॥

संप्रति भगवतो दशावतारान वर्णयितुमाह । मालवरागेण गीयते । तस्य ध्यानम्—

नितम्बिनीचुम्बितवक्त्रपद्मशुकद्युतिः कुण्डलवान् प्रमत्तः ।
सङ्गीतशालां प्रविशन् प्रदोषे मालाधरो मालवरागराजः ॥

हे केशव ! हे जगदीश ! हे हरे ! जयजयेत्याशीः । ‘केशव केशिकः नः केशीत्युक्तेः’ प्रशस्तकेशोऽपि केशवः स्यादिति हरिशब्दोपादानम् । “यमानिलेन्द्रचन्द्रार्कादिसिंहाशुविष्णुष्विति” वचनात् यमादिरपि हरिः स्यादिति केशवशब्दोपादानं, किमभीष्टप्राप्तिविषये आशीरित्याह प्रलयेत्यादि । प्रलयपयोधिजले त्वमखेदं यथा स्यात्तथा वेदं धृतवानसि वेदधृतौ त्रैलोक्यरक्षा स्यादिति उपयुक्ताशीः । विहितो वहित्रचरित्रमित्यपि क्रियाविशेषणम् । विहितं वहित्रचरित्रं नौकायाः चरित्रं यत्रेति विग्रहः । “वहित्रं मानभेदे स्यान्नौकायां पुंनपुंसकम्” । वरुणाश्रमवत् पयोधिशब्दोपादानम् ।१॥

---

१ क. ग. मालवगौडरागेण
ध. रूपकतालेन

॥ श्रुतिरञ्जनी ॥

रसेषु शृङ्गाररसप्रधानं हरेरधिष्ठानममुं वदन्ति ।
उद्दीपनं तस्य च गीतमाहुस्तस्मात् प्रशस्तं प्रवदन्ति गीतम् ॥
श्रीविष्णुरूपः खलु सामवेदस्तस्मात्समुत्पन्नमिदं हि गीतम् ।
तद्देवतानां पुरतः प्रगीतं भक्ता बुधाः पर्वदमामनन्ति ॥

ताम्बूलमर्घ्यसमर्घ्य सुवाद्यनृत्यगीतैः सुतृप्तमभिपूजयतात्पुरावदिति । सङ्गीतमन्त्रशास्त्रोक्तवचनैर्गीतस्य सर्वेश्वरप्रीतिहेतुत्वात् स्वर्गादिफलदायकत्वप्रतिपादनात्पद्मावतीचरणचारणानुकूलं श्रोतृचित्तानुरञ्जकगीतमुदाहरति । प्रलयेत्यादि । अत्रेदं बोद्धव्यं गीतलक्षणं तु—

रञ्जकस्वरसन्दर्भो गीतमित्यभिधीयते ।
श्रुत्यनन्तरभावी यः स्निग्धोऽनुरसनात्मकः ॥
स्वतो रञ्जयति श्रोतुचित्तं स स्वर उच्यते ।

सङ्गीतरत्नाकरे—

नृत्तं वाद्यानुगं प्रोक्तं वाद्यगीतानुवर्त्ति च ।
अतो गीतं प्रधानत्वादत्रादावभिधीयते ॥
गीतेन प्रीयते देवः सर्वज्ञः परमेश्वरः ।
गोपीपतिरनन्तोऽपि वंशीध्वनिरतिं गतः ॥

अत्रत्यानि गीतानि प्रबन्धमध्ये गाथारूपाणीति केचित् । तदुक्तं सङ्गीतरत्नाकरे (३४-२३) प्रबन्धपरिगणनस्थले एलाकरण ढेङ्किभिरित्यारभ्य—

चक्रवालः क्रौञ्चपदः स्वरार्थोऽध्वनि कुट्टनी ।
आर्य्या गाथाद्विपथकः कलहंसश्च तोटकम् ॥ इति ॥

अष्टपद्या रूपाणीत्यपरे, तदुक्तं विप्रकीर्णप्रबन्धपरिगणनस्थले—

पञ्चाननोमातिलकौ त्रिपदी च चतुष्पदी ।
षट्पदी वस्तुसंज्ञश्च तथाचाष्टपदी स्मृता ॥

गतिस्वरगीतस्य नृत्यस्य च प्रतिष्ठाङ्गभूतस्तालः, तदुक्तम्—

तालस्तलप्रतिष्ठायामिति धातोर्घञि स्मृतः । [१]
गीतं वाद्यं तथा नृत्तं यतस्ताले प्रतिष्ठितम् ॥
तकारस्तु शिवः प्रोक्तो लकारः शक्तिरुच्यते ।
शिवशक्ति समायोगात्ताल इत्यभिधीयते ॥

अन्यत्राप्युक्तम्—

संयोगे च वियोगे च तालयोरुभयोर्यदा ।
वर्त्तते व्याप्तिमान् कालः स तालः परिकीर्त्तितः ॥
अनुद्रुतो द्रुतश्चैव लघुर्गुरुरतः परम्
प्लुतश्चेति क्रमेणैव तालाङ्गानि तु पञ्चधा ॥
अनुद्रुताभ्यां विन्दु स्याद्विन्दू द्वौ च लघुर्भवेत् ।
लघुद्वयं गुरुश्चैकस्त्रिलघुः प्लुत उच्यते ॥
पञ्चलघ्वक्षरोच्चारमितामात्रेह कथ्यते ।
मात्रार्द्धया कुर्य्यादिह लघ्वादिप्लुत कल्पनम् ॥
द्रुताशयं तु कथितं चतुरङ्गुलविस्तरम् ।
लघुरष्टाङ्गुलं प्रोक्तं गुरोः स्यात्षोडशाङ्गुलम् ॥
प्लुते त्र्यष्टाङ्गुलं प्रोक्तं तालघाते मनीषिभिः ॥

एतादृशस्य तालस्य दशप्राणाः—

कालो मार्गः क्रियाङ्गानि ग्रहो जातिः कलालयः ।
यतिः प्रस्तारकश्चेति तालप्राणाः दश स्तृताः ॥

एतेषां स्वरूपं तु सङ्गीतरत्नाकरे द्रष्टव्यम् । ग्रन्थविस्तरभयान्नात्र लिख्यते । अत्र गीतगोविन्दे गीतानि शूलादितालैरेव प्रायशो गीयन्ते । अत्र शूलादिस्त्रिप्रकारः शुद्ध-शूलादिः शालिकशूलादिर्देशशूलादिश्चेति । तदुक्तं रामदेवीये—

१ ख. तस्माद्गीतं च नृत्यं च

एलाकरणते सीड ं वर्त्तिनाजोम्बलस्तथा ।
रजोरभा चैकतालेत्यष्टौ सूडक्रमाश्रिताः ॥

अयं तु शुद्ध शूलादिर्मुनिना परिकीर्त्तितः ।

एलादेकरण वर्त्तिनि का च ते ङ्की
चित्राकजोम्बलरसोत्सबमण्डनाः स्युः ।
लालक्ष्मलिम्य पुत्रका च एकताली
शूलक्रमे रविमिताः शमिताः प्रबन्धाः ॥

रविमिताः द्वादशसंख्याकाः ।

अयंशालिक शूलादिः कीर्त्तितो भरतर्षिणा ।
ध्रुवा अथो रूपकश्च त्रिपुटो झम्प एव च ॥
अट्टताल्येकताली च शूलुरित्यभिधीयते ।
अयं च देश शूलादिर्मुनिना परिकीर्त्ततः ॥ इति ॥

अत्र यद्यपि वाग्गेयाकारचातुर्य्याद्गीते तालनियतिर्नास्ति, तथापि येन तालेन गीयमाने श्रोतृचित्तानुरञ्जनं भवति तेनैव तालेन गेयम् ।

तथा चात्र गीतगोविन्दे गीतानि ध्रुवादिभिः सप्तभिर्देशशूलादितालैरेव प्रायशो गायकाः गायन्ति । तन्मध्येऽट्टतालीतालतोऽयम् । गीतमुदाहरति प्रलयेति अट्टताली लक्षणं तु— "लघुद्रुतौ लघुश्चैकः सा भवेदट्टतालिका" ।

अत्रावताराः सन्त्येऽन्ये सरसिजनयनस्य सर्वतो भद्राः ।
कृष्णादन्यः को वा प्रभवति गोपगोपिकामुक्त्यै ॥

इति वचनार्थं मनसि निधाय दशावतारमध्ये स्वकृतिनायकत्वेन कृष्णमेवातिशयेन वर्णयितुनाम आदौ आद्यावतारान् प्रस्तौति । प्रलयेत्यादि । मालवरागेण गीयते इत्युक्तम् तस्यायमभिप्रायः । मालवरागस्य रागराजत्वात् तद्विरहाणां सायंकालत्वात्तदुपोद्घातपातस्यापि सायं कर्त्तव्यत्वान्मालवरागस्य सायंकाले प्रशस्तत्वात् ।

मालवरागेण गीयत इत्युक्तमित्यवगन्तव्यम् । तदुक्तम्—

नितम्बिनीचुम्बितवक्त्रपद्मः समुज्वलत्कुण्डलवान् प्रमत्तः ।
सङ्गीतशालां प्रविशन् प्रदोषे मालाधरो मालवरागराजः ॥ इति ॥

अयं रागः पुंरागः । तस्य भार्य्यास्तु गुणक्रियागुज्जरीगोली चेति । तदुक्तं राग-विवेके—

भैरवश्चापि भूपालः श्रीराम पद्पञ्जरः ।
वसन्तो मालवश्चैव बङ्गालो नाटकस्तथा ॥
एतेऽष्टरागाः कथिताः पुंरागा इति सूरिभिः ।
वेलाबली मलहरी गौली भूपालयोषितः ॥
देवक्रिया मेघरञ्जी कुरञ्जी भैरवस्त्रियः ।
श्रीरागपत्न्य पञ्चाली भल्लारी साहलीति च ॥
देशी च ललिता तोडी पद्पञ्जरयोषितः ।
रामक्रिया वराली च कौशीवासन्तयोषितः ॥
गुणक्रिया गुज्जरी तु गौली च मालवस्त्रियः ॥ इति ॥

कालनियमस्तु—

प्रातर्गुण्डकिरी सदा मलहरी देशाक्षिका गुज्जरी
मध्याह्नेऽपि च रामकृद्द्वयमथो कर्णाटगौलान्यथः ।
सायं मालविका कृतेति सुधियो गायन्ति सायन्तने
सारङ्ग पुनरेव गौलमपरं प्रत्यूषतो भैरवी ॥ इति ॥

तथा नीतिरत्नमालायामपि—

देशाक्षी भैरवी शुद्धा शारङ्गी या च भैरवी ।
देवक्री रक्तहंसी च माहुलीरागरञ्जिता ॥
एते सूर्य्यांशतो जाता सायंकाले तु निन्दिताः ।
प्रभाते गीयते येन स नरः सुखमेधते ॥

शुद्धा नटा च सारङ्गा शुद्धनट्टावरालिका ।
वरालिका द्राविला च देशीनां च वरालिका ॥
छाया गौली तथा चान्या साहुल्य दोलिके तथा ।
मलाहरीकातच्छा च गौरी कर्ण्णाटकाह्वया ॥
गौली मालवगोलश्च रामक्री च तथैव च ।
छायारामक्रुतेरश्री छाया सर्व वराटिका ॥
कर्ण्णाटाह्वयवङ्गाला इत्येते चन्द्रमेऽशुजाः ।
एते रागा विशेषेण प्रातः काले तु निन्दिताः ।
सायमेषां प्रगानेन ह्युन्नतां श्रियमाप्नुयात् ।
तान् विपर्य्यासतः कृत्वा गीता यदि नराधमः ॥
पातकव्याधिभेदादि दारिद्र्यादि लभेन्नरः ।
उक्तेतराणां रागाणां न वेलानिर्ण्णयः क्वचित् ॥
अवेलारागमाकर्ण्य तद्जदोषप्रशान्तये ।
ईशानं च हरिं स्तुत्वा मध्यमादिमनन्तरम् ।
गायेद्वा श्रृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥ इति ।

अत्र चतुर्विंशतिगाथानां मध्ये एकैकगाथात्रयत्रयस्य क्रमेणैक पुरुषरागः तत्पत्नीद्वयस्यायं मनसि निधाय चतुर्विंशतिगाथाः कृतवानिति केचिद्वदन्ति। अष्टभिः पुरुषरागैरष्टभिः स्त्रीरागैरष्टभिर्नपुंसकरागैर्गाथा गातव्या इति विवक्षितत्वाच्चतुर्विंशति गाथाः प्रोक्तवानित्यन्ये। मया तु बहुपुस्तकपाठानुसारेण तत्र रागसङ्गतिः कथ्यत इत्यलमिति प्रपञ्चेन। प्रकृतमनुसरामः। प्रलयेति। तत्र केशवेत्यादि हरे इत्यन्तं ध्रुवपदमित्यन्वर्थसंज्ञा अष्टपदमनुसूतत्वेन सर्वफलभागपूर्वकत्वात्। तदुक्तं सङ्गीतचूडामणौ

प्रबन्धेषु ध्रुवत्वेन ध्रुव इत्यभिधीयते।
स्वयं गीतप्रबन्धे स्याद्‌द्वयदनेनैव पूरणम्॥ इति॥

एवं धयपदेष्ववगन्तव्यम्। एतदान्ध्रभाषया पल्लवीति वदन्ति। धृतं मीनशरीरं मत्स्यगात्रं येन स तथा। तस्य सम्बुद्धिः। एतादृश हे केशव ! अत्र केशवोऽन्यतरस्यामिति प्रशंसार्थमत्वर्थीय-व प्रत्ययान्तेन केशवशब्देन कृष्णसम्बोधनम्। तस्य गुडाकेशेत्याख्या पुरुषोत्तमत्वलक्षणसूचनार्थम्। तेन च मत्स्यादिशरीराणामौपाधिकत्वं व्यज्यते। अथवा कश्च ईशश्च केशौ तौ वाति गच्छतीति केशवः। नियामकत्वेन तत् प्राप्तवानित्यर्थः। तस्य सम्बुद्धिः। अनेन देवोत्तमत्वं सूच्यते। अतएव जगदीशत्वं तस्येति भावः।

प्रकर्षेण लयो यस्मिन्निति प्रलयः। पयांसि धीयन्तेऽस्मिन्निति पयोधिः समुद्रः। कर्मण्यधिकरणे चेति कप्रत्ययः। प्रलयश्चासौ पयोधिश्च, तस्य जले एकार्णवीभूतसमुद्रतोय इत्यर्थः। अथवा, प्रलयः संहारः तत्र प्रयोधिर्जलधिः तस्य जले तद्रूपजले वा, अधिकरणे शङ्खासुरेण सह मग्नमितिशेषः। किंच ऊह्यन्ते प्राप्यन्ते परतीरमेभिरिति बहित्राणि संसारजनतारकाणि "बहतेः करणादित्रगिति" क प्रत्ययः। तादृशानि च च तानि चरित्राणि कर्माणि विहितानि विधानकमींकृतानि विहितचरित्राणि येन तादृशं सुगतप्रापककर्मविधायकमित्यर्थः। उक्तंच "गुरुदेवद्विजातीनां निःश्रेयसकर परः" इति अथवा विहितं बहित्रं बहित्रस्य तारकभूतनौकादेश्चरित्रमिव चरित्रं येन तादृशं विहितमित्यत्र "दधातेर्हिरिति निष्ठायां हिरादेशः"। "विहितमहितचरित्र मिति" क्वचित्पाठः नाम नौकादिनेतादर्थाकारो दण्डविशेषः। तस्य चरित्रमिव चरित्रं यस्येति विग्रहः। "नौकादण्डः क्षेपणी स्यादरित्रके निपातनमित्यमरः"। कर्णश्रोत्रमरित्रं चेत्यभिधानान्तरम्। अन्यच्च

अस्य वाहन संयुक्तां कर्णग्राहवतीं शुभाम्।
सुप्रतारां दृढां तीर्थे शीघ्रं नावमुपाहरेत्॥

इत्ययोध्याकाण्डे द्वादश सर्गस्थितश्लोकव्याख्या¹ तदा हरीव्याकृतम्। ऊह्यते प्राप्यते परतीरमनेनेति वाहनम्। अरित्रादि। कर्णादीनि अरित्राणि गृह्णातीति कर्णग्राह इति व्याख्यातम्। तथाच, यथा अरित्रस्य समुद्रतारकत्वं तथा वेदस्य संसारतारकत्वम्।

१। अयोध्याकाण्ड १२६ सर्ग ६ष्ठश्लोक।

अतएव विहितं विशेषेण हितमित्यर्थः। अत्र यद्युक्तं तद्ग्राह्यम्। विशेषं सुगमम्। किं न विद्यते खेदो यस्मात् अखेदं सर्वक्लेशापहमित्यर्थः। तस्य श्लोकापहत्वं च निःश्रेयससाधनत्वात्। निःश्रेयसस्य क्लेशनिवृत्तिं विनाऽभूतत्वादवगन्तव्यम्। एतादृशं वेदं निरपेक्षवृत्तकरणं ज्ञानकाण्डकर्मकाण्डात्मकं निगमकदम्बकम्। वेदमिति "जातावेकवचनम्"। ज्ञानकाण्डेऽप्युपासनाश्रवणादि विधीनां सम्भवात्तत्रापि विहित-चरित्रत्वमविरुद्धम्। धृत्वानुद्धृतवानसि। वेदान् कुक्षौ निक्षिप्य सिन्धौ निमग्नं शंखा-सुरं हत्वा पुनर्वेदान् ब्राह्मणे प्रादाः खल्वित्यर्थः।

यदा उक्तविशेषणविशिष्टं वेदं जले धृतवानित्यन्वयः। तथा च श्रुतिः "यो ब्राह्मणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति उक्तंच—

ॐकारादिसमस्तमन्त्रपदवीगम्यः पुरा दानवं
सिन्धौ मग्ननिमग्नदैत्यसहितं वेदापहं शङ्खकम्।
जित्वा तज्जठरे निमग्ननिगमान् यो दत्तवान् ब्राह्मणे
पायाद्वः कमलामुखाब्जमधुपो मत्स्यावतारो हरिः॥ इति॥

ततश्च हे जगदीश ! जगन्नाथ ! जगन्नियामकेति यावत्। हरे ! स्मर्त्तॄणामुपासकानां च पापान्यविद्या तत्कार्य्याणि हरतीति हरिः तस्य सम्बुद्धिः। हे हरे ! अनेन प्रलयकाले हरेर्वेदोद्धरणं सूच्यते।

सकललोकानन्दनिवर्हणपटीयसस्तस्य तदुद्धरणस्य सूकरत्वादित्यभिप्रायः।

जयदुष्टनिग्रहं शिष्टपालनं च कुर्वन् सर्वोत्कर्षेण वर्त्तस्वेत्यर्थः। अखेदं धृतवान-सीति क्रियाविशेषणं वा। अत्र च्छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः॥ १॥

# क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे
# धरणिधरणकिणचक्रगरिष्ठे।
# केशव धृतकच्छपरूप जय जगदीश हरे ॥ २॥

॥ सर्वाङ्गसुन्दरी ॥

कूर्मरूपं स्तुवन्नाह । अत्र पूर्ववन्मुखबन्धयोजना । तव पृष्ठे क्षितिस्तिष्ठति इत्येवं-रूपापरा । कीदृशे, अतिविपुलतरे अतिमहतीत्यर्थः । पुनः कीदृशे धरणिधरणकिणचक्र-गरिष्ठे धरण्याः धारणेन यत्किणचक्रं शुष्कव्रणसमूहः तेन गुरुतम इत्यर्थः । किणः शुष्कव्रणेऽपि चेति त्रिकाण्डशेषः । ननु क्षितिधरणिशब्दयोरेकत्वात् पौनरुक्त्यदूषणमत्र वर्त्तते । यदुक्तं व्यक्तिविवेके –

सर्वनामपरामर्शयोग्यार्थः स च यः पुनः ।
स शब्देनाभिधादोषः स वाच्यो वचनाभिधः ॥ इति ॥

क्षितिशब्देनात्र हस्तपादाद्यवयवशालिनी भूरिति साधारणी प्रतीयते । धरणिशब्देन तु पृथिवी मृत्तिकामयीति नास्ति पौनरुक्त्यम् । धृत कच्छपरूपेति सम्बोधनम् । धृतं कच्छपरूपं येन इति विग्रहः ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

क्रमप्राप्तमवतारान्तरं प्रस्तौति । क्षितिरति । धृतकच्छपरूपं कमठशरीरं येन तस्य सम्बुद्धिः । एतादृशकेशव, अतिविपुलतरेऽत्यन्तविशाले, अतिक्रान्त विपुलतरं येन, तस्मिन् विपुलादपि विपुलतर इत्यर्थः । अत्यादय क्रान्ताद्यर्थे द्वितीयेति समासः । किं च धरणि धरणेन भूधरणेन जातो यः किणः ग्रन्थ्याकारः शुष्कव्रणः तृतीया तत्कृतेत्यादिना समासः । चक्रमिव चक्राकारकिण इत्यर्थः । उपमितमित्यादिना समासः । तेन गरिष्ठे ऽत्यन्त गुरौ वर्त्तुलधरणीमण्डल सन्ततधरणसञ्जात किणाक्रान्त इत्यर्थः । अथवा धरणिधरः पर्वतः कृत्यल्युटो बहुलमित्यलुक् । तेन समुद्रमन्थन काले जाते किणा-स्तेषां चक्रं समूहः शेषं समं भ्राम्यन्मन्दराचलाघात-संजात-किणाक्रान्त इत्यर्थः । एतादृशे तव पृष्ठे गात्रस्य पश्चाद्भागे क्षितिर्भूमिस्तिष्ठति अक्लेशं निवसतीत्यर्थः । अत्र तिष्ठतीति वर्त्तमानप्रयोगेणाङ्गीकृतार्थ-परित्यागरूपदृढप्रतिज्ञत्वं गम्यते । उक्तं च—

**वसति दशन शिखरे धरणी तव लग्ना**
**शशिनि कलङ्ककलेव निमग्ना।**
**केशव धृतशूकररूप जय जगदीश हरे ॥ ३ ॥**

---

पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रीवाग्रकण्डूयनै-
र्निद्रालोः कमठाकृतेर्भगवतः श्वासनिलाःपान्तु वः।
यत्संस्कारकलानुवर्त्तिनवशोद्वेगोद्वलेनाम्भसा
यातायातनियन्त्रिणे जलनिधिर्नाद्यापि विश्राम्यति ॥

गरिष्ठमित्यत्रातिशयेन तमविष्ठनाविष्ठनप्रत्ययेऽपि प्रिय स्थिरेत्यादिना-रोषरादेशः। अत्र किण गरिष्ठत्वरूपवस्तुना भगवतः पुरुषोत्तमस्य धरणिधरणकिणाङ्कित-सर्वपुरुषातिशयरूपवस्तु व्यज्यत इति वस्तुना वस्तुध्वनिः। तेन च सर्व पुरुषसेव्यत्वरूपं वस्तु व्यजत् इत्यनुरणनध्वनिः। अथवा, भूधारणाङ्कितत्ववस्तुना एतस्य एतादृशसर्वपुरुषव्यतिरेको व्यज्यत इति वस्तुना वस्त्वलङ्कारध्वनिः। तेन च सर्व-सेव्यत्वं वस्तु व्यजत इत्यलङ्कारेण वस्तुध्वनिः ॥ २ ॥

॥सर्वाङ्गसुन्दरी॥

वराहरूपं स्तुवन्नाह। अत्र पूर्ववन्मुखबन्धयोजना। तव दशनशिशरे धरणी वसति-त्येवं-रूपापरा। कुत्र केनेत्याह। शशिनि कलङ्ककलेव निमग्ना इति। दशनेन साम्या-नुपपत्तेः पूर्णचन्द्रेण न उपमानं, किं तर्हि, अर्द्धचन्द्रः तत्र या कलङ्ककला सा अस्तंगत-रूपैवेति निमग्ना सदृशोपन्यासः। वाक्यार्थोपमेयम्—

वाक्यार्थे नैव वाक्यार्थः कोऽपि यद्युपमीयते।
एकानेकवशद्वत्वे सा वाक्यार्थोपमा द्विधा ॥

धृतशूकररूपेति सम्बोधनम्। धृतं शूकररूपं येनेति विग्रहः। "शिरोऽग्रं शिखरं शृङ्गमित्यमरः ॥ ३ ॥

तव करकमलवरे नखमद्भुतशृङ्गं
दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव धृतनरहरिरूप जय जगदीश हरे ॥ ४ ॥

---

।श्रुतिरञ्जनी।

अवतारान्तरं वर्णयति । वसतीति उक्तं च—

पातुं त्रीणि जगन्ति सन्ततमकूपाराच्चिरादुद्वहं
लीलाक्रोडकलेवरः स भगवान् यस्येकदंष्ट्राङ्कुरे ।
कूर्मः कर्दति चालति भूरसति नः सन्ति दिग्दन्तिनो
मेरुः कोषति मेदिनी जलजति व्योमाति रोलम्बति ॥

हे देव ! दशन शिखरे दंष्ट्राग्रे लग्ना सक्ता मध्ये निमग्नेत्यर्थः एवं रूपधारिणी नीलरूपा मेदिनी, तस्याः नीलरूपत्वं च विचित्ररूपत्वादवगन्तव्यम् । शशिनि चन्द्रमसि निमग्ना कलकंकलेव कलङ्करेखेव सती तिष्ठति । यथा चन्द्रमसि कलङ्करेखावभासते तथा तव दंष्ट्राग्रे धरणी राजतीत्यर्थः । कलवेत्येक पदम् । "इवेन सह नित्यसमासो विभक्त्यलोपश्च वक्तव्यः ।" अत्रोपमानोपमेय साधारणधर्मादिनां चतुर्णामुपादाना-त्समासगा पूर्णोपमा । तदुक्तम्—

स्वतः सिद्धेन वाक्येन सम्मतेन च धर्म्मतः ।
सामान्येन च वर्णस्य वाच्यं चेदेकदोपमा ॥ इति ।

तेन शशिनि दशनयोरौपम्यं गम्यत इत्यलङ्कारेणालङ्कारध्वनि । एकदेशविवर्त्ति-न्युपमा वा । तेन च सर्वेश्वरस्य दंष्ट्राग्रेणैव धरणिधारणसामर्थ्यमलोकरूपं वस्तु व्यज्यत इत्यलंकारेणानुरणितवस्तुध्वनिः ॥ ३ ॥

॥सर्वाङ्गसुन्दरी॥

नरसिंहरूपं स्तुवन्नाह । अत्र पूर्ववन्मुखबन्धयोजना । तवकरकमलवरे नखमद्भुत-शृङ्गमस्तीत्येवं रूपापर । करः कमलेषु वर इति सप्तमीयोगविभागात् समासः । नख-

मद्भुतश्रृङ्ग नखमित्यसमस्तरूपकम्, अद्भुतं च तत् श्रृङ्गं चेति कर्मधारयः। कथमद्भुत-श्रृङ्गनखमित्याह । दलितो हिरण्यकशिपोस्तनुभृङ्गो येनेति विग्रहः । अन्यद्धि कमलाग्रं भृङ्गेण दल्यत इदं दन्तुरकरकमलाग्रं भृङ्गं व्यदालीदित्यद्भुतश्रृङ्गत्वं नखस्येत्यभिप्रायः। ननु कमलस्योपरि भृङ्गपतनस्य दृष्टत्वादियं न घटते वर्णना। हिरण्यकशिपुं नखैर्विदार्य भगवानुत्तोलितवानित्यस्ति पौराणिकी कथा । तेनैषा वर्णनायोग्या ज्ञेया । धृत नरहरिरूपेति सम्बोधनम् । धृतं नरहरिरूपं येनेति विग्रहः। "श्रृङ्गमग्रे प्रभुत्वे च विषाणोत्कर्षयोरपि" ॥४॥

॥श्रुतिरञ्जनी॥

अवतारान्तरं वर्णयति । तव करेति । उक्तं च—

यस्तम्भादुदयादहोबलमिति प्रस्तूयमानोऽमरै-
र्भक्तोक्तेः परिपालनाय भगवांल्लीलानृसिंहाकृतिः ।
सद्योदारितदैत्यराजविगलद्रक्तोरसि प्रोल्लस-
त्पातयश प्रसवोपमाननखरो देवः स वो रक्षतु ॥

धृतं नरहरिरूपं नृसिंहशरीरं येन तादृशं हे केशव ! कर एव कमलवरं नीररुहश्रेष्ठं तस्मिन्नधिकरणे अद्भुतमयमाश्चर्य्यकरं श्रृङ्गमग्रभागो यस्य तत्तादृशम् अथवा, श्रृङ्ग-वच्छृङ्गं बनमहिषविषाणकल्पमित्यर्थः, अतएवाश्चर्य्यकरत्वम् अथवा, व्यस्तरूपकम् । किञ्च दलितो विदारितः हिरण्यकशिपोः प्रह्लादजनकस्य तनुरेव भृङ्गश्चञ्चरीको येन तत्तादृशं भृङ्गसमानहिरण्यकशिपुशरीरविदारकमित्यर्थः । नखं नखानि । "जातावेक-वचनम्" । वसतीति पूर्वगीतस्थ क्रियापदेनान्वय । अत्र करस्य कमलत्वरूपणान्नखानां दलत्वरूपणं हिरण्यकशिपुतनोर्दलान्तरवर्त्तिभृङ्गत्वरूपणं चेत्येकदेशविवर्त्ति रूपकम् । तेन च भगवतो नृसिंहस्यालौकिकपराक्रमशालित्वरूपवस्तु व्यज्यते इत्यलङ्कारेण वस्तु-ध्वनिः ॥ ४ ॥

छलयसि[१] विक्रमणे बलिमद्भुतवामन
पदनखनीरजनितजनपावन।
केशव धृतवामनरूप जय जगदीश हरे ॥ ५

॥सर्वाङ्गसुन्दरी॥

वामनरूपं स्तुवन्नाह। अत्रापि पूर्ववन्मुखबन्धयोजना। विक्रमणे त्रिविक्रमावस्थायां बलिं दैत्येशं छलयसीत्येवंरूपापरा। छरछद्मगतौ। वृषादित्वात्कलच्। यद्वा छल-अत्। अद्भुतवामनरूपेति सम्बोधनम्। अद्भुतश्चासौवामनश्चेति विग्रहः। कथमुद्भुतत्वं वामनस्येत्याह पदनखनीरजनिदजनपावनेति पदस्य नखानां जलेन जनित, जनानां पावनं पवित्रता येनेति विग्रहः। वामनस्य पदनखेन ब्रह्माण्डभेद इत्यद्भुतत्वम्। विष्णुः किलैकपादेन पृथिवीं व्याप्यापरेण बलिं पातालं नीत्वापरेण चाभ्युद्यतेन ब्रह्माण्डं भित्वा गङ्गामवतारयतीत्यस्ति पौराणिकी कथा ॥ ५ ॥

॥श्रुतिरञ्जनी॥

अवतारान्तरं वर्णयति छलयसीति।

उर्ध्वाधश्चक्रदण्डः शतधृतिभ्वनाम्भोरुहो नालदण्डः
क्षोणी नौ कूपदण्ड. क्षरदमरसरित्पट्टिकाकेतुदण्ड।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्बदण्डोऽङ्घ्रिदण्डः
श्रेयस्तैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः॥

अद्भुतयन्तोऽत्यद्भुताः, स्वप्रतापेन सर्वाश्चर्य्यकारिण इत्यर्थः अद्भुतशब्दात्तत्करोति "ण्यन्तात्पराचिणेर्लोपः।" तादृशानप्यसुरान् वामनयति नीचभावं गमयतीत्यद्भुतवामनः। मत्तराक्षसशिक्षक इत्यर्थः। अद्भुतवामनेति पदद्वयं वा, अद्भुतकारित्वं च तस्त सर्वेश्वरस्य वामनीभावानन्तरमेव त्रिलोकीव्याप्तपादत्वा दवगन्तव्यम्। किंच, पदनखानां यन्नीरमुदकं ब्रह्मकृतक्षालनेन नखेभ्यो गलितं गङ्गाकारं यज्जलं तेन जनितमुत्पादितं जनानां लोकानां पावन शुद्धीकरणं येन तादृशस्य पादोदकेन

१। ख. चलयसि

क्षत्रियरुधिरमये जगदपगतपापं
स्नपयसि पयसि शमितभवतापम् ।
केशव धृतभृगुपतिरूप जय जगदीश हरे॥६॥

---

सकलजनपातकनिवर्त्तकेत्यर्थः। उक्तं च भागीरथीस्तवे—

"आद्यावादि पितामहस्य नियम व्यापार पात्रीजलं
पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ।"

अत्र निषिद्धस्यापि नखोदकस्य सकलजनपावनत्व प्रतिपादनं भगवतः श्रीकृष्णस्यालौकिकमतिमहत्सूचनार्थमवगन्तव्यम्। किंच, धृत-वामनरूपं येन स तथा। एतादृशत्वे केशव विक्रमणे विशेषेण पादक्षेपे त्रिलोकीव्याप्त पादन्यासे सतीत्यर्थः। बलि बलि नामधेयं राक्षसं चलयसि स्वस्थानाद्भ्रंशयसि, राज्यभ्रष्टं कृत्वा पातयसीत्यर्थः। अनेन भगवतः स्वभक्तसन्ततावत्यन्तानुग्रहः सूचितः। उपाय पराक्रमाभ्यां दानव दमनत्वमेतस्यैव नान्यस्येत्यस्य सर्वोत्कृष्टत्वमितिभावः। एतादृशं सामर्थ्यं सर्वदा हरे वर्त्तत इति सूचयितुं चलयसीति वर्त्तमानप्रयोग इत्यव-गन्तव्यम्। अनेन महापराधकार्य्यपि दाता संरक्षणीय इति द्योत्यते। चलयसीत्यत्र चल कम्पने चलिरिति घटादिषु कम्पनार्थस्य चलितः पाठान्नोपधावृद्धिः॥ ५॥

॥ सर्वाङ्गसुन्दरी ॥

परशुरामरूपं स्तुवन्नाह। अत्रापि पूर्ववन्मुखबन्धयोजना। क्षत्रियरुधिरमये पयसि रामह्रदाख्ये तीर्थे अपगतपापं यथा स्यादेवं जगत् स्नपयसि इत्येवंरूपापरा। शमित-भवतापमित्यपि स्नपनक्रियाविशेषणम्। शमितो भवस्य संसारस्य आधिदैविकाधि-भौतिकाध्यात्मिकस्तापो येनेति विग्रहः। इह स्नानमात्रेण एव अपगत पापत्वं पश्चात्पुनर्जन्मखण्डनात् शमितभवतापमिति तात्पर्य्यार्थः। परशुराम किल पितृ-वधोद्यतक्रोधः-क्षत्रियान् निहत्य तदीयरुधिरैः कुरुक्षेत्रे पञ्चह्रदान् कृत्वा पितृतर्पणमका-

षीं दिति पौराणिकी कथा । धृतभृगुपतिरूपेति सम्बोधनम् । धृतं भृगुपतिरूपं येनेति विग्रहः । भृगोरपत्यानि भृगवः, अत्रिभृगु-कुम्भ-वशिष्ठ-गौतमाङ्गिरेभ्यश्च इत्यतः लुक् भृगूनां पतिः भृगुपतिः परशुरामः इत्यर्थः । ६ ॥

॥ श्रुतिरञ्जनी ॥

अवतारान्तरं प्रस्तौति । क्षत्रियेति । उक्तं च—

यस्य श्री जमदग्निजस्य परशुस्त्रिः सप्तकृत्वो नृपान्
हत्वा संप्रति कार्त्तवीर्य्यनृपतेर्दोर्मण्डलीखण्डनः ।
निक्षत्त्रां सकलामदाद्वसुमतीं यः कश्यप ब्रह्मणे
पायाद्वः कमलामुखाब्जमधुपो रामावतारो हरिः ॥ इति ॥

भृगुपतिर्जमदग्निस्तस्य यस्य स तथोक्तः । तस्य सम्बुद्धिः । धृतपरशुरामावतारेत्यर्थः । भृगुपतिरूपत्वं च तस्य । "आत्मा वै पुत्रनामासीति" श्रुतेः । एतादृश हे केशव ! क्षत्रियाणां जमदग्निद्रोहिजातीयबाहुजानां यद्रुधिरं रक्तं तन्मये तत्स्वरूपे " स्वरूपार्थे मयडिति केचिद्वचनात्" स्वरूपार्थे मयट पयसि तोये पापमेषामस्तीति पापाः पापकर्माणो जमदग्निवधकारिणः क्षत्रिया इत्यर्थः । "पापशब्दादर्श आद्यच् प्रत्ययः" अपगतानि पापानि यस्मिन् कर्मणि तद्यथाभवति तथा, किंच, शमितः शान्तिं गमित इति यावत् ।

भवतापः क्षत्रियबाधाजनितजनसंसारतापो यस्मिन् कर्मणि तद्यथा तथा । अथवा, भवत्यस्मात्परशुराम इति भवः परशुरामपित्रादिः शमितस्तत्पित्रादितापो यस्मिन् कर्मणीति वा । विरोधिक्षत्रियनाशे पितृलोकवासितत्पित्रादितापापगतेरितिभावः ।

वितरसि दिक्षु रणे दिक् पतिकमनोयं
दशमुखमौलिबलिं रमणीयम् ।
केशव धृतरामशरीर जय जगदीश हरे ॥ ७ ॥

अथवा भवः सदाशिवः "व्योमकेशो भवो भीम" इत्यमरः । तस्य तापः मत्प्रियशिष्य परशुराम पितरं मुनिं जमदग्निं निष्कारणमेव हतवानिति यः सन्तापः शमितस्तादृशो-भवतापो यस्मिन् कर्मणीति वा । जगद्भूलोकं स्नपयसि अभिषेचयसि । अत्रापगततापं शमितभवतापमिति पदद्वयं जगद्विशेषणपरत्वेन कैश्चिद् व्याकृतं तदसरसं, स्नपनात् पूर्वं विशेषणद्वयस्यार्थाघटनात् अत्र रुधिरमये स्नपयसीति वस्तुना अस्य सर्वोत्कृष्ट प्रतापशालित्वं रूपं वस्तु व्यज्यत इति वस्तुना वस्तुध्वनिः । अपराधकारिणः शिक्षण-विधाविदानीमपि हरेः सामर्थ्यमस्तीति, सूचयितुं वर्त्तमानप्रयोगः ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

श्रीरामस्वरूपं स्तुवन्नाह । अत्रापि पूर्ववन्मुखवन्वयोजना । रणे दिक्षु दशमुख-मौलिबलिं ददासीत्यर्थः । इत्येवं रूपापरा । दशमुखमौलिरेव बलिरिति विग्रहः । ननु न दिशश्चेतनावत्यः, तत्कथं तासु बलिं ददातीत्याह । दिक् पतिकमनियमिति दिक्षु बलिप्रदानात् दिक् पतितुष्टिः स्यादित्यभिप्रायः । ननु कथं दिक् पतिभिः शक्राद्यैरेष बलिराकांक्षते इत्याह—रमणीयमिति भूवनपरिभावि त्वाद्रावणस्याकांक्षणीयः शिरो बलिप्राप्तपूर्वत्वान्मनोरमतां विभर्त्तीत्यभिप्रायः ।

"मौलिः शिरसि चूडायां किरीटे संकटे कचे ।
बलिर्दैत्यप्रभेदच करचामरदण्डयोः ॥

उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि ।
गृहदारुप्रभेदे च जठरावयवेऽपि च ।।"

इति मेदिनी । धृतरामशरीरेति सम्बोधनम् । धृतरामशरीरं येन इति विग्रहः ।। ७ ।।

।। श्रुतिरञ्जनी ।।

अवतारान्तरं वर्णयति । वितरसीति । उक्तं च—

एतौ तौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छदौ
वैदेहीकुचकुम्भकुङ्कुमरजःपङ्कारुणालङ्कृतौ ।
लोकत्राणविधानसाधुसदनप्रारम्भयूपौ भुजौ
दद्यास्तामुरुविक्रमौ रघुपतेः श्रेयांसि भूयांसि वः ।।

रमन्ते योगिनोऽन्ते सत्यानन्द चिदात्मनि ।
इति रामपदेनासौ परंब्रह्माभिधीयते ।।

इति लक्षण लक्षितस्य रामस्याभिमानास्पदं नीलोत्पलसमानवर्णं यच्छरीरं धृतं तादृशं रामशरीरं येन धृतं रामावतारेत्यर्थः । एतादृश हे केशव ! दिक्पति कमनीयम् अभिलक्षणीयम् । अतएव रमणीयं सर्वेषां मनोहरम् अवाप्तसकलकामानिमिषाभिलाष गोचरत्वादेवाखिलामास्यत्वं तस्य युक्तिमित्यर्थः । एतादृशं दशमुखस्य रावणस्य मौलित्रलिः शिरपरम्परारूपोपहारः । "बलिपूजोपहारयो"रित्यमरः । रणे संग्रामे दिक्षु अष्टदिशासु वितरसि ददासि त्रिलोकीकण्टकदशकण्ठनिधनेन तद्बाधितान् दिक्पतीन् सन्तोषयसीत्यर्थः ।

उक्त वाञ्छितार्थवितरणसामर्थ्यं सर्वदास्तीति सूचयितुं वर्त्तमानप्रयोग इति भावः विशेषणतौल्येनाप्रस्तुतार्थप्रतीतेः समासोक्तिरलङ्कारः ।। ७ ।।

वहसि वपुषि विषदे वसनं जलदाभं
हलहतिभीतिमिलितयमुनाभम् ।
केशव धृतहलधररूप जय जगदीश हरे॥ ८ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

बलभद्रं स्तुवन्नाह । अत्रापि पूर्ववन्मुखबन्धयोजना । विशदे शुक्ले वपुषि वसनं जलदाभं वहसीत्येव रूपापरा उत्प्रेक्षते । हलहतिभीतिमिलित यमुनाभमिति, हलहतेर्भीत्या मिलितेव यमुनाया आभा यत्रेति विग्रहः । हलिना किल वृन्दावनगतेन कादम्बरीं पीत्वा मत्तेन यमुनास्नानार्थमाहूता सा च मत्तोयमित्यवज्ञया तत्समीपं नागता । ततोऽसौ क्रोधार्त्ता हलेनाचकर्षेत्यस्ति पौराणिकी कथा । धृतहलधररूपेति सम्बोधनम् । धृतं हलधररूपं येनेति विग्रहः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

अवतारान्तरं वर्णयति । वहसीति । उक्तं च—

यः कृष्णाग्रभवो हरिः सिततनुर्नीलाम्बरो रेवती-
भर्त्तामुष्टिगजप्रलम्बदमनः कालिन्दिकाभेदनः ।
तालाङ्को मुषली बलि (ल) यदुवरः सङ्कर्षणः कामपः
पायाद्वः कमलामुखाब्जमधुपो रामावतारो हरिः ॥

धरतीति धरः, पचाद्यच् । हलस्य लाङ्गलस्य धरो बलभद्रः धृतं हलधररूपं येन तादृश हे केशव ! अत्र हलधरपदेन बलभद्रकथनं हलहतिभीत्येतत् स्फुटार्थमित्यवगन्तव्यम् । जलदाभं नीलमेघश्यामं, किञ्च, हलेन हतिराकर्षणं तस्माद् या भीतिस्तया मिलिता स्वयमेवागत्य कटिप्रदेशे या यमुना तदाभं तत्कल्पं, हलहतिभीत्या कटिदेशमावृत्य यमुनेव कृतावभासमित्यर्थः । एतादृशं वसनं नीलाम्बरं विशदे निर्मले शरत्पा-

निन्दसि यज्ञविधेरहह श्रुतिजातं
सदयहृदयदर्शितपशुघातम् ।
केशव धृतबुद्धशरीर जय जगदीश हरे ॥ ९ ॥

---

विकचन्द्रवद्धवल इत्यर्थः वपुषि शरीरे वहसि धरसि, अत्र वर्त्तमानसम्भवात् प्रयोगोपपत्तिः । अत्र गम्योत्प्रेक्षोपमाभेदयोः सृष्टिः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

बुद्धरूपं स्तुवन्नाह । अत्र पूर्ववन्मुखबन्धयोजना । यज्ञविधेः श्रुतिजातं वेदसमूहं निन्दसीत्येवं रूपापरा । धृतबुद्धशरीरेति सम्बोधनम् । धृतं बुद्धशरीरं येनेति विग्रहः । अहहेत्यद्भुतम् । स्वयं वेदान् प्रकाश्य स्वयमेव निन्दसीत्यद्भुतम् । कीदृशं श्रुतिजातं दर्शितपशुघातम् । दर्शितः पशुघातः पशुमारणं येन । कथं निन्दसीत्याह । सदय हृदयेति । सदयं हृदयं यस्येति विग्रहः । अहिंसा परमो धर्म इति बौद्धागमात् । "अहहेत्यद्भुते खेदे" । वेदे श्रवसि च श्रुतिः ॥ ९ ॥

॥ श्रुतिरञ्जनी ॥

अवतारान्तरं प्रस्तौति । निन्दसीति । उक्तं च—

निन्दन् पाशविधानदेघमखिलं स्वछन्दलोकत्रयी
सञ्चारी त्रिपुरे पुरारिरमणीचित्तभ्रमोत्पादकः ॥
सर्वज्ञो भगवान् मुनिर्दशबलः शास्ता घनः श्रीघनः ।
पायाद्वः कमलामुखाब्जमधुपो बौद्धावतारो हरिः ॥

धृतबुद्धशरीरं बौद्धमत प्रवर्त्तक मुनिवेशधारिगात्रं यस्य तादृशं, किञ्च, सदयं कृपापरतन्त्रं सर्वप्राणीहिंसा पराङ्मुखमित्यर्थः । एतादृशं हृदयं चेतो यस्य, तादृशं

म्लेच्छनिवहनिधने कलयसि करवालं
धूमकेतुमिव किमपि करालम् ।
केशव धृतकल्किशरीर जय जगदीश हरे ॥ १०॥

---

हे केशव ! दर्शितः अग्निष्टोमीयं पशुमालभेतेत्येवमादिवाक्यैरुपदिष्टः पशुघातं गवादिपशुमारणं येन तादृशम् ।

किञ्च, यज्ञविधेः यागजन्यापूर्वस्य यागरूपेषु साधनस्य वा बोधकमितिशेषः । अथवा विधेरिति सम्बन्धे षष्ठी, तत्सम्बन्धीत्यर्थः । एतादृशं श्रुतिजातं वायव्यं श्वेतमालभेतेत्यादि वाक्यकदम्बकम् ।

अहह धिक् धिगिति निन्दसि "अहिंसा परमो धर्मस्तवधर्मः प्राणिनां वधः" इत्यादि वाक्यकल्पनयाहिंसापूर्वकक्रत्वनुष्ठानप्रतिपादकवाक्यजातमप्रमाणमिति कांश्चिन्मन्दबुद्धीन् बोधयसीत्यर्थः ।

अथवा अहहेति खेदविस्मयद्योतकं । कविवाक्यं वा किम्बा "अहहेत्यद्भुतेखेदे" इत्यमरः । खेदस्तु यागाद्यनुष्ठापकवेदप्रणेतुर्भद्विदृशस्य तद्विरुद्धाचारबोधनमयुक्तमिति आश्चर्यं तु, अपांशुलशिरोमणित्रिपुरकामिनीपातिव्रत्यपराकरणेवे कथमियमुपायचातुरीति । परवञ्चना चातुर्यमिदानीमप्यस्तीति द्योतयितुं वर्त्तमानप्रयोगः इतिभावः । अत्र हिंसापूर्वकयागाद्यनुष्टानप्रतिपादकवेदप्रणेतृत्वेन सर्वपुराणप्रसिद्धस्य तस्यैव भगवतः सर्वेश्वरस्य तादृशश्रुतिनिन्दापूर्वकतद्विरोधाचारोपदेष्टृत्वप्रतिपादनरूपवस्तुनास्यालौकिकमहिमसम्पन्नस्वरूपं वस्तु व्यज्यत इति वस्तुना वस्तुध्वनिः ॥ ९ ॥

॥ सर्वाङ्गसुन्दरी ॥

कल्किरूपं स्तुवन्नाह । अत्रापि पूर्ववन्मुखबन्धयोजना । म्लेच्छनिवहनिधन इति । म्लेच्छसमूहस्य मारणनिमित्तं करिवालं खड्गं कलयसीत्येवं रूपापरा । धृतं कल्कि-

कल्किशरीरेति सम्बोधनम्। धृतं कल्किशरीरं दाम्भिकतनुर्येनेति विग्रहः। कीदृशं धूमकेतुमिव करालमुत्पातसूचकग्रहमिव भीषणं केचित्। अत्र खड्गस्य नीलवर्णतया धूमसाम्यात् तन्मुष्टेः सुवर्णमयत्वात् अग्निसाम्याद्धूमकेतुशब्देन धूमकेतुमाहुः। म्लेच्छनिवहनिधन इति निमित्तात्कर्मयोगे सप्तमी। "समूह निवहव्यूह सन्दोह विसरव्रजाः" इत्यमरः। अस्योत्पाते धूमकेतुः। करबालः कृपाणवत्—

"करालो भीषणो तुङ्गे निधनं मृतिनःस्वयोः।
कल्कोऽस्त्रीषु ततैलादिशेषे दम्भे विभीतके"॥

इति मेदिनी ॥ १० ॥

॥ श्रुतिरञ्जनी ॥

अवतारान्तरं प्रस्तौति। म्लेच्छेति। धृतं कल्किशरीरं येन तादृशं। हे केशव। म्लेच्छानां मूर्खाणां देवब्राह्मणबाधकानामित्यर्थः, तेषां निवहः समूहस्तस्य निधने मरणविषये करालमतिक्रूरमतिभयङ्करमिति यावत्। करवालं खड्गं धूमकेतुर्नाम रात्रौ गगने परिदृश्यमान औत्पातिकस्तालाकारः कश्चन केतुविशेषः तमिव, अथवा धूमः केतुश्चिह्नं यस्य सोऽयं धूमकेतुः प्रलयकालवह्निज्वालाजातमिव केनाप्यत्याश्चर्यं यथा स्यात्तथा कलयसि, "वर्त्तमानसामीप्ये वर्त्तमानवदेति भविष्यति लट्" धर्मसंस्थापनार्थाय दुष्टशिक्षणमधुनापि करोतीति सूचयितुं वर्त्तमानप्रयोग इति भावः। किमपीत्येतदव्ययं करवालविशेषणं वा। तदा किमपि एतादृशमपि वक्तुमशक्यमित्यर्थः।

म्लेच्छैर्धर्मे मन्दीकृते दुष्कृते च प्रवर्द्धिते सति तादृङ् म्लेच्छनिधनपूर्वकं धर्मस्थापनाय दुष्टशिक्षणमधुनापि करोतीति सूचयितुं वर्त्तमानप्रयोग इति भावः। किमपीत्येतदव्ययं करवालविशेषणं वा। तदा किमपि एतादृशमपि वक्तुमशक्य-

**श्री जयदेवकवेरिदमुदितमुदारं**
**शृणु शुभदं सुखदं भवसारम्।**
**केशव धृतदशविधरूप जय जगदीश हरे॥ ११॥**

---

मित्यर्थः। म्लेच्छैर्धर्मे मन्दीकृते दुष्कृते च प्रवर्द्धिते सति तादृङ् म्लेच्छनिधनपूर्वकं धर्मस्थापनाय कल्क्यवतारो भविष्यतीति समुदायार्थः। धूमकेतुमिवेत्येकं पदम्। पूर्णोपमा। युगान्तरापेक्षया वा धृतेर्भूतार्थप्रयोगोपपत्तिः॥ १०॥

॥ सर्वाङ्ग सुन्दरी॥

दशावतारवर्णनां संकलयन्नाह।

"सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु"।
"उदारो दातृ महतोरित्यमरः।"

धृत दशविधरूप इति सम्बोधनम्। धृतं दशविधरूपं येनेति विग्रहः। "सम्प्रति गीतार्थमेकेन श्लोकेन निबध्नाति॥११॥

॥ श्रुतिरञ्जनी॥

भक्त गीतं भगवते समर्पयति। श्रीजयेति। धृतानि दशविधरूपाणि येन तादृश, धृतदशावतारेत्यर्थः। एतादृश हे केशव! उदारं ध्वनिगुणालङ्कारादिसम्पत्त्या गम्भीरमित्यर्थः। अतएव सुखदं सरसचित्ताकर्षकं शुभदं उचिततालरागादिसम्पत्त्या श्रुतिकटुत्वादिदोषराहित्येन च श्रोतृणां नेतुश्च कल्याणप्रदम्। अथवा त्वदङ्किततया मङ्गलदायकम्। अतएव भवस्य संसाररूपदुःखस्य सारोऽपसारणं यस्मात्, तादृशं, संसारदुःखापहमित्यर्थः। अथवा, भवत्यस्माद्भक्तिदानादिकमिति भवो नाम भक्त्यादिसाधनं तन्मध्ये सारं सारभूतं क्षिप्रमेव भगवद्भक्त्यादिसम्पादनमित्यर्थः। अथवा जन्मसाफल्यकरं वा एतादृशं श्रीजयदेवकवेः इदं पूर्वोक्तं दशावतारवर्णना उदितं वचनं गीतमिति यावत्, शृणुआकर्णयेत्यर्थः॥ ११॥

वेदानुद्धरते जगन्ति[1] वहते भूगोलमुद्‌बिभ्रते
दैत्य‍ं[2] दारयते बलिं छलयते[3] क्षत्रक्षयं[4] कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥५।

॥ सर्वाङ्गसुन्दरी ॥

सम्प्रति गीतार्थमेकेन श्लोकेन निबध्नाति । दशाकृतिकृते कृष्णाय तुभ्यं नमोऽस्त्विति वाक्यार्थः । दशाकृतिं कृतवानित्यर्थे क्विप् । दशाकृतिकृत्यं प्रकटयन्नाह । वेदानुद्धरत इति मीनरूपायेत्यर्थः । जगन्ति वहते कूर्मरूपायेत्यर्थः। भूगोलमुद्बिभ्रत इति वराहरूपायेत्यर्थः । दैत्यं दारयत इति नरसिंहरूपायेत्यर्थः । बलिं छलयत इति वामनरूपायेत्यर्थः । क्षत्रक्षयं कुर्वत इति परशुरामरूपायेत्यर्थः । पौलस्त्यं जयत इति रामरूपायेत्यर्थः । हलं कलयत इति हलधररूपेण हलमुषलौ धृतायेत्यर्थः । कारुण्यमातन्वत इति बौद्धरूपायेत्यर्थः । म्लेच्छान् मूर्च्छयत इति कल्किरूपायेत्यर्थः ।

गोला गोदावरी सख्योः कुनटी दुर्गयोः स्त्रियाम् ।
पात्राञ्जने मण्डले च क्लीबं वा कुञ्जरे द्वयोः ॥ इति मेदिनीकरः ॥५॥

॥ श्रुतिरञ्जनी ॥

एवमवतारान प्रस्तुत्यानन्तरकृत्यं दशावतारिरूप-कृष्णनमस्कारमाचरति । वेदानुद्धरत इति । हे देव! शङ्खासुरापहृत निगमान् उद्धरते उद्धर्त्रे, तमसुरं

१ । घ. च. जगत् ।
२ । घ. च. दैत्यान् ।
३ । ख. चलयते ।
४ । ख. च्वक्षियं ।

तज्जठरे निमग्न-निगमान पूर्वब्रह्मणेप्रदात इत्यर्थः। जगन्ति लोकान् वहते सर्वलोकभर्त्त, इत्यर्थः । भूगोलं सप्तद्वीपसागर- पर्वतादि सहितं भूमण्ड़लमुद्विभ्रते । प्रलयकाले दंष्ट्राग्रेण महार्णवमग्नमेदिनी समुद्धरणायेत्यर्थः। दैत्यं हिरण्यकशिपुं दारयते भेत्त्रे, हिरण्यकशिपुविदारणं कुर्वाणायेत्यर्थः।

बलिं च बलिचक्रवर्त्तिनं चलयते भ्रंसयते, बलेर्निजभक्तसन्ततित्वेन स्थानभ्रंशमात्रं कृत्वा पातालं प्रतिष्ठापयित्रे इत्यर्थः। क्षत्रियाणां जमदग्निघातुकजातीयबाहुजांनां क्षयं नाशं कुर्वते कुर्वाणाय सकलक्षत्रियान्तकायेत्यर्थः।

पुलस्त्यस्यापत्यं पुमान पौलस्त्यो रावणः तं जयते, विजयमानाय, हलं लाङ्गलं कलयते, आयुधत्वेन हलं बिभ्राणायेत्यर्थः। अतन्वत इति पदद्वयी कारुण्यं करुणा चातुर्बर्णादित्वात् स्वार्थे ष्यञ् । अथवा करुणा अस्यास्तीति करुणः। अर्शआदित्वादच् । तस्य भावः कर्म वा कारुण्यं "गुणवचनेत्यादिनाष्यञ्" । आतन्वते तन्वानाय भूतमात्रहिंसा न कर्त्तव्येति सर्वप्राणिषु दयां कुर्वत इत्यर्थः।

आतन्वत इति पदद्वयम् । म्लेच्छान् सर्वधर्मविप्लावकक्रूरकर्मणः। पापिष्ठान् मूर्च्छयते नाशयते एवं दशाकृतिकृते दशावतारकर्त्रे, दशाकारधरायेत्यर्थः। दशाकृतिकृत इत्यत्र दशत्वयुक्ता आकृतय इति विग्रहः। अथवा—

तद्धितार्थेत्यादिना उत्तरपदसमासः। अथवा दिक्संख्ये संज्ञायामिति संज्ञात्वात्समासः। कृत इत्यत्र करोतेः कर्त्तरि क्विप् । ह्रस्वस्येत्यादिना तुगागमः। एवं विधाय "कृषिर्भूवाचकः शब्दोणश्च निर्वृत्तिवाचकः। तयोरैक्यं परंब्रह्म कृष्ण इत्यभिधीयते" इत्युक्त लक्षण लक्षिताय कृष्णाय तुभ्यं नमः। दशावताररूपं त्वां नमस्करोमीत्यर्थः। सर्वत्र नमःस्वस्तीत्यादिना चतुर्थी। अत्र भावः प्रतिपाद्यः। यदुक्त, रतिर्देवादि विषयाभाव इत्यभिधीयते इति ॥ ५ ॥

।। द्वितीयः प्रबन्धः ।।

गुर्जरीरागेण[१] गीयते

## श्रितकमलाकुचमण्डल धृतकुण्डल ।
## कलितललितवनमाल जय जय देव हरे ॥१॥ ध्रुवम् ॥

॥ सर्वाङ्गसुन्दरी ॥

ग्रन्थारम्भे विघ्नविघातार्थं पुनरपि मङ्गलप्रीत्या हरिं स्तुवन्नाह ॥ मङ्गलगुर्जरीरागेण गीयते ॥ ध्यानम्—

श्यामासुकेशी मलयद्रुमाणां
मृदूल्लसत्पल्लव तल्पयाता ।
श्रुतेः स्वराणां दधीती विभागं
तन्त्रीमुखाद्दक्षिणगुर्जरीयम् ॥

हे हरे ! हे देव ! जयजयेति सर्वत्र वाक्यार्थः । सम्मतौ द्विरुक्तिः । धृतकुण्डलत्वे कलितललित वनमालत्वे च कारणमाह । श्रितकमलाकुचमण्डल इति सकामो हि सर्वेशः स्यादित्यभिप्रायः । धृते कुण्डले येन, कलिता धृता वनमाला येन । श्रितं कमलाकुचमण्डलं येनेति विग्रहः ।

स्यान्मण्डलं द्वादशे राजके च
देशे च कम्पे च कदम्बके च ।
कुष्ठप्रभेदेऽप्युपसूर्य्यकेऽपि
भुजङ्गभेदे शुनि मण्डलः स्यात्" ॥ इति विश्वः ।

'ललितं हारभेदे स्यादीप्सिते च मनोहरे' ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

एवं दशावतारानुपवर्ण्य तन्मध्ये स्वकृतिनायकं श्रीकृष्णं विशेषेण वर्णयति । श्रितेति ।

---

१ । क. ख. मङ्गलगुज्जरीरागेण ।
घ. गुज्जरीरागनिःसारतालाभ्यां ।

दिनमणिमण्डलमण्डन भवखण्डन ।
मुनिजनमानसहंस जय जय देव हरे ॥ २॥

अटताली । गुज्जरीरागेण गीयते । इत्युक्तं तस्यायमभिप्रायः । मालवरागानन्तरं तत्कलत्रभूतायाः गुर्ज्जर्य्याः सन्निधानं युक्तमिति । यदुक्तं—

श्यामा सुकेशी मलयद्रुमाणां
मृदूल्लसत्पल्लवकल्पमात्रा ।
श्रुतेः स्वराणां दधती विभागं
तन्त्रीमुखी दक्षिणगुर्ज्जरीयम् ॥ इति ॥

तत्र जयेत्यादि ध्रुवपदम् । कमला लक्ष्मीः "कमला श्रीर्हरिप्रियेत्यमरः" । तस्याः कुचौ तयोर्मण्डलं प्रदेशः अग्रभाग इत्यर्थः । श्रितं सेवितं गृहीतमित्यर्थः । आहिताग्न्यादिष्विति निष्ठायाः पूर्वनिपातः । लक्ष्मीकुचप्रसारितकराग्रभाग इत्यर्थः किं च धृते कुण्डले कर्णाभरणे येन तस्य सम्बुद्धिः । हे तादृश केशव ! जय भक्ताभीष्टदायकः सन् सर्वोत्कर्षेण वर्त्तस्वेत्यर्थः भक्त्यतिशयद्योतनार्थं द्विरुक्तिः सम्भ्रमेण वा अत्र सकृदेकवर्णावृत्तिलक्षणश्छेकानुप्रासो नाम शब्दालङ्कारः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

दिनमणिमण्डलमण्डनत्वेन हरेः परमपुरुषत्वम् । यदुक्तं —"ध्येयः सदा सवितृमण्डलमध्यवर्त्तीति" परमपुरुषश्च सुजनैरेव चिन्तयितुं शक्य इत्याह । मुनिजनमानसहंस इति रूपकमिदम्, यथा मानसे सरोवरे सदा हंसस्तिष्ठति, तथायं मुनिजनहृदये तिष्ठतीत्येदर्थप्रतिपादनार्थं श्लिष्टार्थस्य मानसशब्दस्योपादनम् । कथमयं मुनिजनैश्चिन्त्य इत्याह । भवखण्डनेति । भवं पुनर्जन्म खण्डयतीत्यर्थे नन्द्यादित्वाल्युः मुक्तिप्रद इति कृत्वा मुनिजनैरसौ सर्वदा चिन्त्यत इत्यर्थः ॥ २ ॥

कालियविषधरगञ्जन जनरञ्जन ।
यदुकुलनलिनदिनेश जय जय देव हरे ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

दिनमणीति । दिनमणिः सूर्य्यः । "प्रद्योतनो दिनमणिरित्यमरः" तस्य मण्डलं बिम्बं "बिम्बोऽस्त्री मण्डलं त्रिष्वत्यमरः", तत्कल्पं मण्डनमाभरणं यस्य स तादृशः। दिवाकरवद्दीप्यमानभूषण इत्यर्थः। अथवा दिनमणिमण्डलस्य स्वावासभूत सूर्य्य-मण्डलस्य मण्डनमलङ्कारः। स्वावासभूतसूर्य्यमण्डलप्रकाशक इत्यर्थः। तदावासत्वं च। "ध्येयः सदा सवितृमण्डलमध्यवर्त्ती नारायणः सरसिजासन सन्निविष्ट" इति वचना-दवगन्तव्यम्। तस्य सम्बुद्धिः। अतएव भवस्य संसारस्य खण्डन, ज्ञानप्रदानेन भक्त-जनेसंसारनिवर्त्तक, इत्यर्थः। अथवा भवस्य बाणासुरविजयसमये तन्मन्दिरावस्थित महादेवस्य खण्डन जृम्भशास्त्रप्रयोगेण तदङ्गविनिर्वापकेत्यर्थः। अथवा—

भवो भक्तजनस्य पुनर्जन्म तस्य खण्डन स्वभक्तानां पुनर्जन्मनिवारकेत्यर्थः। अतएव मुनिजनस्य मानसमन्तःकरणं मानससरश्च तत्र हंसः मरालः स इव विहारमाण इत्यर्थः अथवा मुनीनां जनानां चेति वा विग्रहः। अथवा भवो भक्तः। मानसमिति श्लिष्ट-रूपकम्। अथवा मुनिजनमानसेषु हृदयेषु दिप्यमानेत्यर्थः। अत्र च्छेकानुप्रासरूपकोपमा-भेदानां संसृष्टिः॥ २ ॥

॥सर्वाङ्गसुन्दरी॥

कालियनामा विषधरः सर्पस्तस्य गञ्जनेन जनरञ्जनता यमुनाजलस्य स्वेच्छयाऽवगा-हनात्। यदुकुलनलिनदिनेश इति ययातिशापेनास्तं गतस्य यदुवंशस्य प्रकाशनात यदुकुलमेव नलिनं तस्य प्रकाशत्वात्॥ कृष्णो दिनेश एव इति रूपकमिदम्। यदुक्तं— "उपमैव तिरोभूतभेदा रूपकमुच्यते" ॥ ३ ॥

मधु मुरनरकविनशन गरुड़ासन।
सुरकुलकेलिनिदान जय जय देव हरे ॥ ४॥

---

कालियेति। कालियाख्यस्य विषधरस्य सर्पस्य गञ्जन भञ्जन हिंसकेति यावत्। गजि हिंसायामित्यस्मान्नन्द्यादिना ल्यु प्रत्ययः। अतएव जनानां रञ्जन आल्हादकर अतएव यदुकुलमेव नलिनं कमलं तस्य दिनेश सूर्य्य, यदुकुलकमलोल्लासहेतुभूतेत्यर्थः। दुष्टनिग्रह शिष्टपरिपालनमस्य वंशकेतुत्वादितिभावः॥ ३ ॥

॥सर्वाङ्गसुन्दरी॥

गरुड़मारुह्य दैत्यान् विनाश्य देयताक्रीड़ां विष्णु प्रावर्त्तयदिति वस्त्वर्थः। मधुमुर-नरकान् विनाशयतीति। गरुड़ आसनं यस्येति विग्रहः। सुरकुले केलीनां निदानमादि-कारणमिति विग्रहः॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

मध्विति। मधुमुरनरका असुरविशेषास्तेषां विनाशन, अथवा नरकशब्दस्तन्त्रवृत्त्या नरकासुरनिरयावाचष्टे सकृदाचरितमनेकोपकारकं तन्त्रमिति तद्विदः। तथा चाय-मर्थः। मधुमुरनरकाणां नरकस्य देवर्षिबाधया भविष्यतो निरयस्य नाशन निवर्त्तकः। कृष्णकृतनिधनेनैव तेषां नरकपात निवर्त्तनात्तस्य तन्निवर्त्तकत्वमवगन्तव्यम्।

किं च गरुडः सुपर्णः स एवासनं वाहनं यस्य तस्य सम्बुद्धिः। एतच्च मध्वादिनाशन सामर्थ्यसूचनार्थमवगन्तव्यम्। अतएव सुराणां देवानां कुलं समूहस्तस्य केलयः शृङ्गार-चेष्टास्तासां निदानमादिकारणं "निदानं त्वादिकारणमित्यमरः"।

पूर्वं सुरकामिनीषु सुरविरोधिभिर्वन्दीकृतासु सुराणां शृङ्गारचेष्टाभावात्पश्चाद्भग-वता गरुडवाहनेन कृष्णेन तेषु सुरविरोधिषु निःशेषं निर्वापितेषु सुराणां निर्विघ्नचेष्टानां सम्भवात्तस्य तन्निदानत्वमितिभावः। निधानेति केषुचित् पाठः। तदा निधीयन्तेऽत्रेति

**अमलकमलदललोचन भवमोचन।**
**त्रिभुवनभवननिदान[१] जय जय देव हरे ॥ ५ ॥**

निधानं सुराः स्वपदमनित्यमिति मत्वा नित्यपदसिद्ध्यर्थं सर्वं परित्यज्य हरावेव क्रीडन्तीति तस्य निधानं त्वमिति भावः। अनेन देवेन्द्रादिसकलदेवतासाम्राज्य परिपालकत्वमुक्तमिति ज्ञेयम्। अत्र देशान्तरे शसयोरभेदादनुप्रासोपपत्तिरवगन्तव्या ।४।

॥ सर्वाङ्गसुन्दरी ॥

विष्णुः पुण्डरीकाक्षः इत्यमलकमलदललोचन इत्युक्तम्। स च नित्यत्वाद्भवमोचनो भवति। भवं मुञ्चतीति कृत्वा, त्रिभुवनाश्रयोऽप्यसौ भवतीति त्रिभुवनभवननिधानेत्युक्तम्। त्रिभुवनं भवनं गृहं येषां तत्र जनप्रभृतयस्तेषां निधानं यः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

अमलेति। अमलं निर्मलं संकोचादि दोषरहितं यत्कमलं पुण्डरीकं तस्य दलं पर्णं छदः पुमानित्यमरः। तद्वल्लोचने यस्येति मध्यपदलोपी समासः। कमलपत्रविशाल-पुण्डरीकाक्षेत्यर्थः। किंच, भवस्य संसारस्य मोचन निवर्त्तक, भक्तानां सकलसंसार-दुःखनिवर्त्तकेत्यर्थः। अथवा भवशब्दस्तन्त्रेणोपात्तः। हलन्त्यमितिवत्। तथा च स्वभक्त महादेवस्य भवः कन्था परिधानादि संसारस्तस्य मोचन निवर्त्तक, अनेन भगवतः श्री-कृष्णस्य सकलाराध्यत्वमुक्तं, महादेवस्य विष्णुभक्तत्वं च "प्रह्लादश्चाम्बरीषश्च वसुर्वायुसुतः शिवः।"

विश्वक्सेनोद्धवाक्रूराः शुकाद्याः सनकादयः।
महाविष्णुप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः॥ इति वचना-

१। निधान इति पाठान्तरम्।

जनकसुताकृतभूषण जितदूषण ।
समरशमितदशकण्ठ जय जय देव हरे ॥ ६ ॥

दवगन्तव्यम् । अथवा भवत्यस्मादिति व्युत्पत्त्या भवौ जनकजनन्यौ "पुमान् स्त्रिये-त्येकविशेषः ।" तयो मोचनजनकजनन्योः कंसकृतनिरोधनिवर्त्तकेत्यर्थः । अथवा भवस्य जनकरूपवसुदेवस्य वा निर्बन्धनिवारकेत्यर्थः । अत्र सर्वत्र पौरुषाधिक्यं गम्यते । किं च, त्रयाणां भुवनानां समाहारस्त्रिभुवनं "पात्रादित्वान्नङीप् ।" त्रिभुवनस्य भवन-मुत्पत्तिस्तस्यनिदान । भवनशब्दस्थितिलययोरप्युपलक्षणम् । तथाच, त्रयाणां मूलकारण-मित्यर्थः । अथवा त्रिभुवनमेव भवनं गृहं "भवनागारमन्दिरमित्यमरः ।" तस्य निदानं त्रिभुवनाख्यगृहनिर्मातेत्यर्थः । निधानेति केषुचित् पाठः । तदा त्रिभुवनस्य भवनमुत्प-त्तिर्यस्मादिति त्रिभुवनभवनः ॥ निधानवन्निधानः । यथा निक्षेपः । सर्वाशास्यो भवति तथाचायमपीत्यर्थः । त्रिभुवनश्चासौ निधानश्चेति तस्य सम्बुद्धिः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

सीतायाः कृतभूषण इति षष्ठी समासः । कथं सीतायाः कृतभूषणो राम इत्याह । जितदूषण समरे शमितदशकण्ठ इति जितमभिभूतं दूषणं सीताद्विषो येन इति विग्रहः । रावणं समरे हत्वा सत्यसती वेति किम्वदन्ती दूषणं सीताया वह्निविशोधनया व्यप-सार्य्य जितदूषणो रामः इत्यभिप्रायः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

जनकेति । जनकसुताय कृतं भूषणं येन । असदृशप्रेमातिशयात् स्वस्य बालकर्त्तृ-त्वमवगन्तव्यम् । अथवा, जनकसुताया आकृतमाकारः भावे क्तः । तदेव भूषणं यस्य तादृश, वामाङ्कस्थितजनकसुताकारैकभूषणेत्यर्थः । अथवा, जनकसुतायै कृतं ब्रह्मणा-चरितं तादृशं च भूषणं च तद्रूपब्रह्मणा जनकसुताभूषणत्वेन कल्पितेत्यर्थः उक्तं च

अभिनवजलधरसुन्दर धृतमन्दर।
श्रीमुखचन्द्रचकोर जय जय देव हरे ॥ ७ ॥

---

बधैः—"पतिर्हि भूषणं स्त्रीणां भूषणादपि भूषणम्" इति अथवा जनकसुताया कृतं चरितं भूषणं यस्मिन् तादृशं जनकसुतालङ्कृताखिलाङ्गेत्यर्थः। अथवा जनकसुतैव कृतं भूषणं यस्य तादृश, जनकसुतैव भूषणेत्यर्थः तस्य सम्बुद्धिः। जितः दूषणाख्यो राक्षसो येन तादृश, अथवा जितं पराजितं दूषणं लोकसम्भावितं पित्राज्ञालंघनादि येन स तथा। अथवा, जितं दूषणं जनापवादादिकं येन स तथा। सर्वदा निष्कलङ्केत्यर्थः। समरे युद्धे शमितः मारितः दशकण्ठो रावणो येन तादृश, अथवा दशकण्ठशब्दस्तन्त्रेणोपात्तः। तथा च समरे शमिताश्छिन्ना दशकण्ठस्य दशकण्ठा दशकन्धरा येन तादृश, अस्मिन्पक्षे पौरुषाधिक्यं गम्यते ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

अभिनवेति। कृष्णो हि नूतनमेघच्छविरित्यभिनवजलधरसुन्दर इत्युक्तम्। स च धृतमन्दरो भवति। रुक्मिण्याः परिग्रहात्। चकोरः पक्षिविशेषस्तस्य चन्द्रकिरणे प्रीतिः। यदुक्तं "ज्योत्स्नापानं चकोराणामिति" कविकल्पलतायाम् ॥

तव चरणे प्रणता वयमिति भावय।
कुरु कुशलं प्रणतेषु जय जय देव हरे ॥

तव इत्यादि। तव चरणे वयं प्रणता इति भावय जानीहि इत्यर्थः। ज्ञात्वा किं कर्त्तव्यमित्याह—अस्मासु प्रणतेषु कुशलं विधेहीत्यर्थः। तव चरणे इत्यत्र मूलपाठो नास्ति। अभिनव जलधरमित्यनन्तरं तवचरणे इति पाठो युक्तः ॥ ७ ॥

श्रीजयदेवकवेरिदं कुरुते मुदम् ।
मङ्गलमुज्वलगीतं जय जय देव हरे ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

अभिनवेति। धरतीति धरः। जलस्य धरः पचाद्यच्। अभिनवो नूतनः स चासौ जलधरश्च स इव सुन्दरः। नूतनजलधर इव मोहन इत्यर्थः। अनेन ग्रीष्मकल्पस्मर-कृतगोपकामिनीमनस्तापनिर्वापणसामर्थ्यं सूच्यते। सुन्दरशब्दस्य कर्णाटभाषायां ग्राम्यत्वदोषः प्रयोगबाहुल्यात्परिहर्त्तव्यः। धृतो मन्दराख्यो गिरिर्येन स तथा गोवर्द्धनधारकेत्यर्थः अनेन देवता सार्वभौमत्वं गम्यते। मुखं चन्द्र इव मुखचन्द्रः तत्र चकोर इव चकोरः। यथा चकोरः सादरेण चन्द्रमसं तत्किरणान् वा पिबति, तथा-यमपि श्रीमुखं मुखसौन्दर्यं वा पिबन् वर्त्तमान इत्यर्थः। अनेन वक्ष्यमाण गोपकामिनी-केल्यनुगुणं शृङ्गारित्वं सूचितम् ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

इदं जयदेवकवेर्मङ्गलं गीतं मङ्गलरूपं मुदं कुरुते कीदृशम् उज्वलगीतं गानदोष-रहितं, यदुक्तं —

शङ्कितं भीतमुद्धृष्टमव्यक्तमनुनासिकम्।
काकस्वरं शिरःकम्पं तथा स्थानविवर्जितम्॥
विस्वरं विरसं चैव विशिष्टं विषमागतम्।
व्याकुलं तालहीनं च गीतदोषाश्चतुर्दश ॥ इति ॥

श्रितकमलेत्यभिप्रायश्च श्रीमुखेन प्रकटयति ॥ ८॥

पद्मापयोधरतटीपरिरम्भलग्न–
काश्मीरमुद्रितमुरो मधुसूदनस्य ।
व्यक्तानुरागमिव खेलदनङ्गखेद–
स्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥ ६ ॥

---

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । मङ्गलं मङ्गलहेतुकल्याणस्वरूपं वा उज्वलं ध्वनिगुणालङ्कारभास्वरम् जयदेवकवेरिदं गीतं शृण्वतां श्रोतृणां च मुदं सन्तोषं कुरुते करोति यदा यदा श्रूयते, गीयते च तदा मङ्गलं करोतीति द्योतयितुं वर्त्तमानप्रयोग इत्यत्र न्तव्यम् । सारस्यं त्वाशीः प्रयोगेनेत्यवगन्तव्यम् ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

मधुसूदनस्य हरेरुरो वक्षो वो युष्माकं प्रियमनुपूरयत्विति योजना । पद्मापयोधर-तटी परिरम्भलग्नकाश्मीरमुद्रितम् । पद्मा लक्ष्मीः तस्याः पयोधरौ स्तनौ तयोस्तटी प्रान्तदेशस्तस्य परिरम्भेण लग्नं यत्काश्मीरं कुङ्कुमं तेन मुद्रितं मुद्रां प्रापितमित्यर्थः । लग्नं च तत्काश्मीरं इति समासे केचिन्न कर्मधारय-बहुव्रीह्योः प्रतिपत्तिकर इति दूषण-माचक्षुः । तदसमीक्षिताभिधानं मुद्रितशब्दस्य सम्बन्धाभावात् । तटस्थत्वात् बहुव्रीहि प्रतिपत्त्यनुदयात् ।

पुनः कीदृक्, खेलदनङ्गखेदस्वेदाम्बुपुरम्, खेलदनङ्गखेदेन सेदाम्बुनः पूरो यत्रेति व्यधिकरणे बहुव्रीहिः । "पूरो जलप्रवाहे स्यात्" । स्वेदाम्बु घर्मजलम् उत्प्रेक्षते । व्यक्तानुरागमिवेति । लक्ष्मीं प्रत्युद्गतानुरागप्राचुर्यादिव बहिर्भूत इवेत्यर्थः ।

अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथोत्प्रेक्षते यत्र तामुत्प्रेक्षां विदुर्बुधाः ।

इति काव्यादर्शे ।

न विना विप्रलम्भेन सम्भोगः स्फुटमर्हति ।
कषायितेहि वस्त्रादौ भूयान्रागोऽनुरज्यते ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

एवं सर्वेश्वरं प्रस्तुत्य तस्य भगवतः श्रीकृष्णस्य राधाप्रमुखवल्लवाङ्गनाविषय-श्रृङ्गारं वर्णयितु काम आदौ प्रधाननायिकारूपलक्ष्मीविषयश्रृङ्गारवर्णनापूर्वकमाशीर्वादेन श्रोतृजनानभिनन्दयति । पद्मेति ॥ पद्मायाः लक्ष्मीदेव्याः पयोधरतटीकुचतटं तत्परिसरप्रदेशः स्तनमण्डलमिति यावत् तस्य परिरम्भ आलिङ्गनं तेन लग्नमासक्तं यत् काश्मीरं कुचकुङ्कुमं तेन मुद्रितं चिह्नितम् अलङ्कृतमिति यावत् । अतएव व्यक्तः बहिरवभासमानोऽनुरागः हृदयान्तः स्थितः लक्ष्मीविषयानुवृत्तो रागो यस्य तादृशमिव-स्थितमिति शेषः अथवा अनुरागो नाम रतेर्भोगाख्यः षष्ठावस्थाविशेषः तदुक्तं रति-कल्पलतायाम्—

अङ्कुर पल्लवकलिका प्रसून फलभोगभागियं क्रमशः ।
प्रेमामानः प्रणयः स्नेहो रागोऽनुरागश्चेति ॥

अयं शब्दः प्राकरणिकत्वाद्रतिपरः । अत्र काश्मीरानुरागयोः सवर्णत्वं न तथोत्प्रेक्षितमवगन्तव्यम । तदुक्तं भावप्रकाशे –

सुखदुःखात्मकं भोग्यं सुखत्वेनाभिमन्यते ।
येन रागः स इत्युक्तो रञ्जनाद्धियात्मनः ॥

नीली कुसुम्भमञ्जिष्ठारागौपम्येन स त्रिधा ।
क्षालितो यश्चनापैति यश्चनातीव शोभते ॥
नीलरागः स एवेति कथितो रङ्गवेदिभिः ।
योऽपैति क्षालितः क्षिप्रमभ्यगो यो न शोभते ॥
कुसुम्भराग इत्येष भणितो रागवेदिभिः ।
अतीव शोभते यस्तु नापैति क्षालितोऽपि सन् ॥
एषैव कविभिः सर्वैर्माञ्जिष्ठो राग उच्यते ।
ज्येष्ठा माञ्जिष्ठराग स्यान्नीलीरागस्तु मध्यमः ॥
कुसुम्भरागः कविभिरधमोऽथेति कीर्त्तितः ।
रागोऽनुवृत्तोऽविच्छिन्नमनुराग उदाहृतः ॥
अनुरूपोऽथवा राग इति वा निर्वाहो भवेत् ।
स तु प्राय स्वसंवेद्यो यूनोरन्योऽन्यरक्तिमा ॥ इति ॥

व्यक्तानुरागमिवेत्येकं पदम् । अतएव खेलन् युवयुवतीचित्तचाञ्चल्य निष्पादनार्थं सर्वत्र क्रीडमानो योऽनङ्गस्तेन । खेदः रतिजननद्वारा तन्निष्पादिताया स तेन हेतुना स्वेदाम्बुपूरः श्रमजलप्रवाहो यत्र तत्तादृशम् । अनेनाभ्यन्तरः शृङ्गारः सूचितः । अत्र सर्वत्रतृतीया तत्कृतेत्यादिना समासः । अथवा खेलदित्यत्रान्तर्भावित ण्यर्थः ।

तदा खेलन् विहरयन्नित्यर्थः । उक्तं च माघे—

इदमिदमिति भूरुहां प्रसूनैर्मुहु-
रभिलोभयता पुरः पुरोऽन्या ।
अनुरभसमनायि नायकेन
त्वरयति रन्तुमहो जनं मनोभूः ॥ इति ॥

अन्तर्भावित ण्यर्थप्रकारस्तु उवाच इति सूत्रव्याख्यानावसरेऽन्तर्भावितो बुद्धया प्रकाशितो ण्यर्थ इत्यादिना ग्रन्थसन्दर्भेण न्यासकरेण प्रतिपादितो द्रष्टव्यः । यद्वा

वसन्ते वासन्ती कुसुमसुकुमारैरवयवै–
र्भ्रमन्तीं कान्तारे बहुविहितकृष्णानुसरणाम् ।
अमन्दं कन्दर्पज्वरजनितचिन्ताकुलतया
बलद्बाधां राधां सरसमिदमूचे सहचरी ॥ ७ ॥

---

खेलदित्युरो विशेषणम् । तदा खेलत् विहरत् अतएवानङ्गखेदस्वेदाम्बुपूरमित्यन्वयः । यद्वा, खेलन् सर्वाङ्गेषु विहरन् सर्वाङ्गीणतया भासमान इत्यर्थः । एतादृशानङ्गखेदेनेति वान्ये जना, एतादृशं मधुसूदनस्य भगवतः श्रीकृष्णस्य, अत्र मधुसूदनपदेन कृष्णाभिधानम् उद्दीपकपौरुषाधिक्यद्योतनार्थं दुष्टनिग्रहपूर्वकशिष्टपरिपालकत्वसूचनार्थं वा उरो वक्षस्थलम् । वो युष्माकम् । सर्व एते वास्मादान्वादेशे वक्तव्या इत्यनादेशेऽपि वसादेशः । प्रियमपेक्षितं वस्तुजातम् । अथवा पुत्रपौत्रधनधान्यवाहनादिजनित सन्तोषम् । अनुपूरयतु, पुनः पुनः परिवर्द्धयतु संसारिणः दुःखापसारणद्वारा सुखमेव प्रयच्छत्वित्यर्थः । अत्र भावः प्रतिपाद्यः । उत्प्रेक्षालङ्कारः—

यत्रान्यधर्मसम्बन्धादन्यत्वेनोपतर्कितम् ।
प्रकृतं हि भवेत् प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते ॥ इति लक्षणात् ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

विरहिणीराधां विवर्णयिषुराह । वसन्ते राधामिदं वक्ष्यमाणं सरसं यथा स्यादेवमूचे सहचरीति वाक्यार्थः । वासन्तीकुसुमसुकुमारैरवयवैरुपलक्षितां "इत्थंभूतलक्षणे" इति तृतीया । कीदृशीं, कान्तारे भ्रमन्तीं "कान्तारं वर्त्मदुर्गमित्यमरः" । ननु

कथं कान्तारे भ्रमन्तीमित्यर्थः । बहुविहितकृष्णानुसरणाम् अति बहुविहित कृष्णानुसरणं ययेतिविग्रहः । कथमसौ श्रीकृष्णमनुसन्दधातीत्याह । अमन्दं कन्दर्प-ज्वरजनितचिन्ताकुलतया बलद्वाधामिति बलन्ती वर्द्धमाना बाधा पीडा यस्याः इति विग्रहः ॥

अत्रापि कन्दर्पज्वरजनिता असौ चिन्ता चेति समासेन कर्मधारय बहुव्रीहिः । प्रतिपत्तिकर इति दूषणं न कर्त्तव्यम् । आकुलता पदस्य केनचित् सम्बन्धाभावात् तटस्थत्वात् न बहुव्रीहि प्रतिपत्यानुदयात् । "पीडावाधाव्यथा दुःखम्" "वासन्ती माधवीलता" इत्यमर । शिखरिणीनामवृत्तम् ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

एवं प्रधाननायिकामुपवर्ण्य कृत्यङ्गभूतं राधामाधवविहारं प्रतिज्ञातं सख्युक्तिव्याजेन प्रस्तौति । वसन्त इति । वसन्तसमये, वलन्ती वर्द्धमाना बाधा विरहवेदना यस्यास्तादृशीम् । वसन्तस्योद्दीपकत्वाद्बाधाया वृद्धिरितिभावः । वलते वृध्यर्थत्वं च ।

निपाताश्चोपसर्गाश्च धातवश्चेत्यमी त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शकः ॥

इति अवगन्तव्यम् । अथवा बलन्ती चलन्ती बाधा यस्यास्ति बाधायाश्चाञ्चल्यं नाम सर्वाङ्गीणत्वम्, अतएव बहु अनेकप्रकारं विहितमाचरितं कृष्णस्य स्ववल्लभरूपस्य माधवस्यानुसरणमन्वेषणं यया तादृशं विरहवेदना निवृत्तेर्वल्लभलाभ साध्यतया तदर्थं तन्मार्गणमिति भाव ।

किं च, कन्दर्पज्वरः विरहवेदनाजनितो मन्मथज्वरस्तेन जनिता उत्पादिता या चिन्ता मनःपीडा तयाकुलता व्याकुलीभावः कार्य्याकार्य्यविचारणापावमित्यर्थः । तया हेतुना कान्तारे कण्टकपाषाणादिसंकीर्णदुर्गमपथे "कान्तारं वर्त्मदुर्गमित्यमरः" । वासन्तीकुसुमानि माधवीलताप्रसूनानि "वासन्ती माधवीलतेत्यमरः"

॥ तृतीयः प्रबन्धः ॥

वसन्तरागेण गीयते

**ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे।**
**मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे॥**
**विहरति हरिरिह सरसवसन्ते,**
**नृत्यति युवतिजनेन समं सखि विरहिजनस्य दुरन्ते॥**
**॥ ध्रुवम्॥ १ ॥**

---

तद्वत् सुकुमारैरत्यन्तकोमलैर्भ्रमणासमर्थैरिति यावत् । एतादृशैरप्यवयवैश्चरणादिभिः करणैरमन्दं शीघ्रं यथा भ्रमन्तीम्। अनेन कृष्णान्वेषणेऽत्यादरः सूचितः । यथा लोके कश्चिदतिकोमलाङ्गोऽपि रागादिना संजातचित्तभ्रमः सन्नङ्गापाटवं मार्गाद्यसौष्ठवमप्यविचार्य्य वृथैव सर्वत्र वनं भ्रमतीति तथा विरहरागात् सर्वत्राटन्तीमित्यर्थः । एतादृशीं राधां सहचरीति सहचरी सखीचरेषु इति टः। टित्वाङ्ङीप् ।

सरसं मनोहरं यथा तथा इदं वक्ष्यमाणम् उचे उवाच, वचिरिति ब्रुवो वचिरादेशः, न तु वचे रूपम्। परस्मैपदप्रसङ्गात्। विरहातुराणां पुनस्तन्निवर्त्तकवचनोपन्यास एव न्याय इति मनीषया सरसमित्युक्तमिति ज्ञेयम्। यद्यप्याद्यश्लोके त्वमेव गृहं प्रापयेत्यनेन राधाया एव कृष्णेन सह प्रयाणं मध्ये मार्गे विहारश्च प्रतीयते न त्वन्यावस्थानम् । तथापि तत्तस्याः प्राधान्यं सूचयितुं न त्वन्यनिवृत्त्यर्थम् । तथा च राधायाः सहचरीलाभः । कृष्णस्य वक्ष्यमाणयुवतिजनविहारलाभश्च न विरुद्ध इत्यवगन्तव्यम् । वलदित्यत्रानुदात्तेतामात्मने पदस्यानित्यत्वाच्छत्रादेशः। तदनित्यत्वं च । क्षिङ्येङित्करणादवगन्तव्यम्। अथवा बलवतीति बलः। पचाद्यच्, स इवाचरतीत्याचारे क्यवन्ताच्छत्रादेशः। उक्तं च, वामनेन, वलतेरात्मनेपदमनित्यं ज्ञापकादिति ॥ ७॥

॥ **सर्वाङ्गसुन्दरी** ॥

ललितेति। वसन्तरागेण गीयते। रागध्यानम्—

शिखण्डिबर्होच्चयबन्धचूडः पुष्णन् पिक चूतलताङ्कुरेण ।
भ्रमन्मुदा धाममनङ्गमूर्त्तिर्मतो मतङ्गस्य वसन्तरागः ॥

किमाह सहचरीत्याह । हरिः इह सरसवसन्ते श्रीवृन्दावनविपिने विहरति युवतिजनेन समं, नृत्यति चेति वाक्यार्थः। विनापि चकारेण, चार्थोपगम्यते। यथा गामश्वं पुरुषं पशुमहरहर्नीयमानो वैवस्वतस्तृप्ति नोपयातीति स्मरस्य तदुक्तम् । अविदग्धश्चात्रयुवतिजनः प्रतिपत्तव्यः, विदग्धस्य संहावद्धावादिमन्तरेण नर्त्तनस्यानौचित्यात्, अतएव तेन समं हरेः क्रीडोत्कोर्त्तनं राधायाः न द्वेषजनकं सपत्न्याः सदोषसुरतोत्कर्त्तनस्य नार्य्या हर्षोत्पादकत्वात्, सरसोऽप्ययं वसन्तो विरहिणां दुःखदः।

यदाह विरहिजनस्य दुरन्त इति। संभोगिनां सुखदो यद्वक्ष्यति तरुणाकारणबन्धाविति, त्वं चेत्, राधे ! विरहिणी तस्मात् संभोगार्थं श्रीकृष्णसंकाशं व्रजेदिति । गमनायप्रोत्साहनम् । कीदृशे वसन्ते, वृन्दावनविपिनेवेत्याह । ललितलवङ्गेत्यादि । अत्रापि ललिता चासौ लवङ्गलता चेति समासे न कर्मधारयो बहुव्रीहिः । प्रतिपत्तिकर इति दूषणं न वाच्यम् । परिशीलनशब्दस्य केनचित्सम्बन्धाभावात्तटस्थत्वाद्बहुव्रीहि प्रतिपत्त्यनुदयात्। ललितलवङ्गलता परिशीलने कोमलो मलयसमीरो यत्रेति विग्रहः । अथान्यः कश्चित्पुनः कठिनोऽपि ललितनारीसम्पर्कान्मृदुतां प्राप्नोतीत्यभिप्रायः । अत्र कोमलपदोपन्यासान्मान्द्यं पुष्पसम्बन्धात्सौरभ्यं स्निग्धलतायोगाच्छैत्यं वायोर्ज्ञेयम् । मधुकरनिकरेण करम्बिता मिश्रिता ये कोकिलास्तैः कूजितः । कुञ्जकुटीरो येनेति विग्रहः, "करम्बितस्तु खचितं ऋषितं त्ववगुण्ठितम्। ह्रस्वा कुटी कुटीरः स्यात् स्तोमौघनिकरव्रजाः ॥१॥

॥ श्रुतिरञ्जनी ॥

सहचरी ऊचे इत्युक्तम्। तत्प्रकारमेव स्फुटयति ललितेत्यादि। अटताली । वसन्तरागेण गीयते इत्युक्तम्। अत्र हिन्दोल वसन्तो ग्राह्यः, न तु शुद्धवसन्तो हिन्दोलवसन्तस्यैव। क्रीतोपयोगित्वेन परिगणनात्। तदुक्तमृतुक्रीडाविवेके—

वसन्ते चूर्णविक्षेपो व्यात्याक्षी मन्मथार्च्चनम्।
हिन्दोलरागगानं च पुष्पोपाचय एव च ॥
दोलाकेलिर्विवाहश्च माधवीसहकारयोः।
अशोकबकुलादीनां तरूणां दोहदक्रिया ॥

इति वसन्तराग स्वरूपं तु—

शिखण्डिबर्हेण निबद्धचूडः पुष्णन् पिकचूतलताङ्कुरेण ।
समं मुदा वासमनङ्गमूर्त्तिर्मतो मतङ्गस्य वसन्तरागः ॥

तत्र विहरतीत्यादिना दुरन्त इत्युक्तम्। ध्रुवपदमिदम्। तत्रादौ ध्रुवपदं व्याक्रियते। अत्र कृष्णं मृगयमाणायै राधायै सखी कृष्णचेष्टितं कथयति।

हे सखि! राधे! "सखिशब्द सख्याशिश्वीतिभाषायामिति" (४।१।६२) निपातनात्साधुः। विरहिजनस्य प्रियेण प्रियया वा वियुक्तस्य जनस्येत्यर्थः। इदं स्त्रीपुरुषसाधारणम्। दुरन्ते निरवधिके यापयितुमशक्य इत्यर्थः। वसन्तस्य तदस्योद्दीपकत्वाद्विरहिजनं प्रति तस्य दुरन्तत्वमिति भावः। इहास्मिन सरसः सकलकुसुममकरन्दसहितः अथवा शृङ्गारादिसमेतो वा, "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवेरसे" इत्यमरः। स चासौ वसन्तश्च तस्मिन्, अथवा, सरसः युवयुवतिघटनाचतुरः तादृशश्चासौ वसन्तश्च तस्मिन्निति वा घटनाचातुर्य्यं च। तस्योद्दीपकत्वादवगन्तव्यम्। हरिः पत्यादीन् परित्याज्यागतगोपिकाजनविहारी श्रीकृष्णः युवतिजनेन तरुणीजनेन समं सह विहरति चूर्णविक्षेपादिना क्रीडतीत्यर्थः। चूर्णविक्षेपादयस्तु समनन्तरमेवोक्ताः।

न केवलं क्रीडामात्रं अपितु तेन समं नृत्यति। क्रीडाजनितसन्तोषेण पताकप्रमुखश्चतुर्विंशदसंयुक्तहस्तैः अङ्गुल्यादिभिः संयुक्तहस्तैः चतुरस्रो वृत्तस्वस्तिकादिभिः संयुक्तहस्तैर्वा युवतिजनेन सह नृत्यमभिनयतीत्यर्थः। इदमत्र वोद्धव्यम्, नर्त्तनं त्रिविधम्। तदुक्तं भावप्रकाशे--

तदपि त्रिविधं नाट्यं नृत्यनृत्तप्रभेदतः।
सुखदुःखात्मकं यत्र लोकवृत्तं निरूप्यते ॥

आङ्गिकाद्यैरभिनयैर्वाक्यार्थाभिनयात्मकम् ।
रसभाव समायुक्तं नाट्यं च परिचक्षते ॥
भावादिभावसुभगं पदार्थाभिनयात्मकम् ।
गात्रविक्षेपणं यत्र तन्नृत्यमिति गीयते ॥
तन्नृत्तं स्याद्गीतवाद्यमिलत्काललयाश्रयम् ।
उदिताभिनयं यत्र गात्रविक्षेपणं यदि ॥
इदं देशीति कथितं तत्तद्देशजनेच्छया ।
खड्गकन्दूकवस्त्रादिदण्डकाच्चामरस्रजः ॥
वीणादि वृत्वा यत्कुर्युर्नृत्तं तद्देशिकं भवेत् ।
एतत्त्रयं द्विधा भिन्नं लास्यताण्डवसंज्ञया ॥
सुकुमारं तयोर्लास्यमुद्धतं ताण्डवं विदुः ।
चतुर्विधं लोकलास्यं कुण्डली दण्डरासकम् ॥
प्रेरणा प्रेरणंचैव तत्तद्देशानुसारतः ।

नृत्याङ्गभूताभिनय हस्तास्तु :—

पताकस्त्रिपताकश्चार्द्धचन्द्रः कर्त्तरीमुखः ।
अराल मुष्टिशिखरा कपित्थः कटकामुखः ॥
शुकतुण्डश्च लाङ्गुलः पद्मकोषोऽरपल्लवः ।
सूचीमुखः सर्पशिराश्चतुरो मृगशीर्षकः ॥
हंसास्यो हंसपक्षश्च भ्रमरो मुकुरस्तथा ।
ऊर्णनाभश्च सन्दर्शस्ताम्रचूडोऽपरःकरः ॥
अञ्जलिश्च कपोताख्यः स्वस्तिकः कटकस्तथा ।
दोलापुष्पपटोत्सङ्गः कटको वर्द्धमानकः ॥
जगदन्तश्चावहित्थो निषधो मकरध्वजः ।
बन्धनश्चेति हस्ताः स्युः संयुक्तास्तु त्रयोदशः ॥

एतेऽभिनयहस्ताः स्युः सप्तत्रिंशन्मुनेर्मताः ।

असंयुक्ताभिनय हस्तलक्षणानि तु :—

अङ्गुष्ठः कुञ्चिताकारस्तर्जनी मूलमाश्रितः ।
सपताक इति ख्यातः पताकाकारधारणात् ॥
पताकानामिका नम्रा त्रिपताकः स उच्यते ।

त्रिपताकः :—

पताकाङ्गुलयः किञ्चिन्नम्रा दूरेण विच्युता ।
अङ्गुष्ठा यदि विद्धद्भिरर्द्धचन्द्रोऽर्द्धचन्द्रवत् ॥

अर्द्धचन्द्रः :—

तर्जनी त्रिपताकस्य मध्यमा पृष्ठदर्शिनी ।
यदा भवेत्तदा तज्ज्ञैः ज्ञातव्यः कर्त्तरीमुखः ॥
अङ्गुष्ठः कुञ्चितो नम्रश्चन्द्ररेखेव तर्जनी ।
पराभिन्नार्थ बलिता यत्र सोऽयमरालकः ॥
अङ्गुष्ठं पिण्डरोन्मध्यं शेखरस्य करस्य चेत् ।
मुष्टिहस्तस्तु संप्रोक्तो नाट्यविद्याविशारदैः ॥
प्रदेशे न कपित्थः स्यात्तलस्था प्रासमुन्नतः ।
अङ्गुष्ठो यदि विद्वद्भिर्ज्ञातव्यः शेखरः करः ॥
भवेत्युत्कटकाख्यस्य मध्या नाम कनिष्ठिकाः ।
तलमध्ये स्थिता स्वाग्रैःकपित्थोऽयमुदाहृतः ॥
यदा प्रदेशिनी मुद्रा मुखेऽङ्गुष्ठेन पीडिता ।
तले मध्ये तु नमिता शेषो वक्त्रेऽध्वगे तथा ॥
कटकामुख हस्तोऽयमुच्यते नृत्यकोविदैः ।
भ्रूलतेव यदा वक्रा तर्जन्यङ्गुष्ठसङ्गता ॥
नमिताऽनामिको शेष कुञ्चितोदञ्चिते यदा ।

शुकतुण्डक तं प्राहुराचार्य्या भरतादयः ॥
अङ्गुष्ठतर्जनीमध्या विरलाग्रत्रिकोणवत् ।
हंसस्य स्वनतानामि तदा लाङ्गुल इष्यते ॥
आसन्नाग्रास्तदाङ्गुल्यः विशिष्टा परितोऽध्वगाः ।
पद्मकोषस्तदा ज्ञेय किञ्चिद्विकसिताब्जवत् ॥
तलेऽङ्गुल्यः पृष्ठ गास्तु कथिता विरलाः क्रमात् ।
कनिष्ठा पूर्विका यत्र स भवेद्रपल्लवः ॥
सकटामुखहस्तस्य तर्जनी स्याद् यदायता ।
सूचीमुखकरं प्राहुर्नृत्यविद्याविशारदाः ॥
यदि निघ्नं पताकस्य तलं सर्वशिरा भवेत् ।
कनीयस्योन्नता यत्र परिश्लिष्टा प्रसारिता ॥
स्यातां सर्वकराङ्गुष्ठ कनिष्ठे ऊर्ध्वगे यदा ।
तदा मृगशिराः प्रोक्त पण्डितैर्नृत्य कोविदैः ।
संगताग्रमुखा यत्र तर्जन्यङ्गुष्ठमध्यमाः ।
उन्नते विरले शेषे हंसास्यं तदुदीरितम् ॥
कनीयसी पताकस्य पश्चादपसरेद्यदि ।
अन्याङ्गुल्यत्रयं मूले मनाच्चावनतं तदा ॥
हंसपक्षकरं प्राहुराचार्य्या भारतवेदिनः ।
मध्याङ्गुष्ठौ सङ्गताग्रौ कुञ्चिता तर्जनी मनाक् ।
परिकरस्थले स्यातां विरले ताम्रचूडके ॥
सङ्गताभ्यां पताकाभ्यामञ्जलिः परिकीर्त्तिता ॥

शेषं संयुक्तलक्षणानि सङ्गीतरत्नाकरे द्रष्टव्यानि । ग्रन्थगौरवभयान्न लिख्यन्ते । शिष्टानृत्योपयोगिप्रक्रिया तरङ्गलक्ष्मीविलासे द्रष्टव्या । प्रकृतमनुसरामः । कीदृशे वसन्ते विहरतीत्याकाङ्क्षायामाह । ललितेति । ललिता रमणीया लवङ्गलता देव कुसुमवल्ली वलङ्गदेवकुसुममित्यभिधानम् । तया परिशीलनं सम्पर्कः तेन कोमलः कुमारः अथवा तया परिशीलनं सम्पर्को यस्य तादृशः । अनेन सौरभ्यं सूचितम् । कोमलः मन्द-

उन्मदमदनमनोरथपथिकवधूजनजनितविलापे ।
अलिकुलसंकुलकुसुमसमूहनिराकुलवकुलकलापे ॥ २ ॥

सञ्चारः अनेन मान्द्यं सूचितम् । निश्वासम्भूतत्वादेव तस्य शैत्यं मन्दसिद्धिः । एवं विधो मलयसमीरश्चन्दनानिलः यस्मिन् । तादृशे, किंच मधुकराणां मधुव्रतानां निकरः समूह तेन करम्बिताः मिलिताः ये कोकिलास्तेषां कूजितमव्यक्तशब्दो येषु तानि मधुप-झङ्कारैः कोकिलरवैं मुखरितानीत्यर्थः । एवं विधानि कुञ्जकुटीराणि लतागृहरूप स्वश्नमन्दिराणि यस्मिन्, तादृशे, एवंविधे वसन्ते हरिर्विहरतीत्यन्वयः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

उन्मदेति । उद्गतौ मदमदनौ हर्षकामौ यस्य, मनोरथोऽन्यपदार्थः[१] । उन्मदमदन-मनोरथश्चासौ पथिकवधूजनश्चेति कर्मधारय, तेन जनितो विलापो यत्रेति विग्रहः, पथिकवधूजनलक्षणं यथा—

निर्मण्डना मलिनमंशुकमावहन्ती हिण्डीरपिण्डपरिपाण्डुरगण्डभित्तिः ।
या सर्वदा प्रियवियोगजदुःखतप्ता तां प्रोषितप्रियतमां निगदन्ति सन्तः ॥

इति नागरसर्वस्वे । अलिकुलेत्यादि । अलिकुलेन संकुलोऽव्याप्तो यः कुसुमसमूहः तेन निराकुलो वकुलकलापो यत्रेति विग्रहः । यद्यपि वसन्ते वकुलपुष्पासम्भवस्तथापि कवीनां वसन्तवर्ण्णने सम्प्रदायसिद्धत्वमित्युक्तम्—

१ । उन्मदेत्यस्य श्रुतिरञ्जनीटीका नास्ति ॥

**मृगमदसौरभरभसवशम्बद नवदलमालतमाले ।**
**युवजनहृदयविदारण मनसिजनखरुचिकिंशुकजाले ॥ ३ ॥**

---

संकुलं वाच्यघद्ध्याप्तेर्विस्पष्टार्थं वचस्यपि ।

निर्णयेन निषेधे च व्याप्ते त्वग्रगणाकुलौ ॥

"कलापो भूषणे बर्हे तूणीरे संहतेऽपि च" इत्यमरः ॥ २ ॥

मृगमदेति । मृगमदः कस्तूरी तत्सौरभरभस्य गन्धप्रवाहस्य वशम्बद आयत्त इव नवदलमालस्तमालो यत्रेति विग्रहः । "रभसो वेग हर्षयोः" युवजनहृदयविदारणं यन्मनसिजनखं तादृशं किंशुकजालं यत्रेति विग्रहः । "पलाशे किंशुकः पर्णो वातपोथः" इत्यमरः । "जालं गवाक्षे आनाये क्षिरके जन्मवृन्दयोरिति" मेदिनी ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

मृगमदेति । मृगमदस्य सौरभं परिमलः तस्य रभसेन वेगेन हर्षेण वा· "रभसोद्वेगहर्षयोरित्यमरः" । वशम्बदानि स्वायत्तानि तत्कल्पानि तद्वत्· सुगन्धीनीत्यर्थः । अथवा मृगमदश्च सौरभं च मृगमदसौरभे तयोः रभसमाधिक्यं तस्य वशम्बदानि तद्वन्नीलवर्णानि सुगन्धीनि चेत्यर्थः अत्र सौरभस्य मृगमदीयत्वं निषादस्थपतिन्यायेनावगन्तव्यम् । तन्त्रो वा मृगमदशब्दः एतादृशाभिर्नवानि नूतनानि कीटादिभिरनुपहतानि प्रत्यग्रोत्पन्नानीति यावत् । अदृश्यानि यानि दलानि तेषां माला नृपरम्परा येषु तादृशः मालाः तापिञ्छतरवो यस्मिन्, तादृशे वशम्बदेत्यत्र·प्रियवशेवदः खशिति ( ३-२-३८ ) खश् प्रत्ययः । खित्यनव्ययस्येति ( ६-३-६६ ) मुमागमः । किं च युवजनानां तरुणपुरुषाणां यानि हृदयानि तेषां विदारणा भेदका ये मनसिजनखाः·कामकरजास्तेषां रुचिः कान्तिरिव कान्तिर्येषां तथा विधानि किंशुकजालानि पलाशकुसुमसन्दोहा यस्मिन् तादृशे, अत्र विदारणजनितरुधिररुषितत्वान्नखानामरुणत्वमवगन्तव्यम् । अथवा कन्दर्पस्य श्रीपतिपुत्रत्वेव सौभाग्यसम्पन्नत्वसूचकनखरक्तत्वसम्भवात्किंशुकानां तत्कल्पत्वम् । उक्तं च सामुद्रिके—

मदनमहीपति कनकदण्डरुचिकेशरकुसुमविकासे ।
मिलितशिलीमुखपाटलपटलकृतस्मरतूर्णविलासे ॥ ४ ॥

पाणि पादतले रक्ते नेत्रान्तौ च नखानि च ।
तालु जंघाधरौष्ठं च सप्तरक्तं प्रशस्यते ॥ इति ॥

एतादृशे वसन्ते हरिर्विरतीत्यन्वयः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

मदन एव मह्िपतिरिति विगृह्य मयूरव्यंसकादित्वादुत्तरपदार्थप्रधानः समासः कार्य्यः । यदि पुनरत्र मदनो महीपतिरिव इत्युपमितं व्याघ्रादिभिरित्यनेन समासः क्रियते तदा पूर्वपदार्थप्राधान्यात्, मदने कनकदण्डाभावात्, वर्णनेयमघटमाना स्यात् । मदनमहीपतेः कनकदण्डरुचिः केशरस्य नागकेशरस्य कुसुमविकाशो यत्रेति विग्रहः ।

"छत्रं कनकदण्डः स्याद्राज्ञः काञ्चननिर्मितम् ।
चाम्पेयः केसरो नागकेसरकाञ्चनाह्वयः " । इत्यमरः ।

मिलितेत्यादिः । मिलिताः शिलीमुखाः यत्र पाटलीपटलमद्यपदार्थः मिलिताः शिलीमुखाः पाटलिपटलेन कृतः स्मरतूणविलासो यत्रेति विग्रहः । पाटलिकुसुमस्य तूणाकारत्वात् । शिलीमुखशब्दस्य शिष्टार्थत्वात्साम्यम् । " समूहे पटलं क्लीवमलिबाणौ शिलीमुखौ ।" "तूणोपासङ्ग तूणीर निषङ्गा इषुधिर्द्वयोः" इत्यमरः ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

मदनेति । मदनमहीपतेः कन्दर्पभूपालस्य कनकदण्डं कनकमयो दण्डो यस्य तत्कनकदण्डं श्वेतछत्रं तस्य रुचिकान्तिरिव कान्तिर्येषां तानि केसरकुसुमानि देववल्लभाख्यद्रुमकुसुमानि "केसरे देववल्लभ" इत्यमरः । तेषां विकाशो यस्मिन् तादृशे, किं च,

विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे ।
विरहिनिकृन्तनकुन्तमुखाकृतिकेतकि[1]दन्तुरिताशे ॥ ५ ॥

---

मिलिताः घटिताः शिलीमुखाः द्विरेफाः येषु तानि पाटलानि पाटलिकुसुमानि तेषांपटलः समूहस्तेन कृतः निर्मितः स्मरतूणविलासः मदनतूणीरविभ्रमो यस्मिन् तादृशे "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोरित्यमरः" अत्र शिलीमुखशब्देन बाणा अपि ग्राह्याः तदा पाटलानां तूणत्वरूपणं समञ्जसं भवति । एतादृशे वसन्ते हरिर्विहरतीत्यन्वय ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

विगलिता लज्जा यस्य तत् विगलितलज्जं जगत् ततस्तत्करोतीत्यर्थे णिच्, तत्कर्मणि क्तः । विगलितं लज्जितं जगत् वसन्तेन निर्लज्जं विहितं कृतमित्यर्थः । विगलितलज्जितजगदवलोकनेन तरुणैर्नूतनैः करुणैर्वृक्षविशेषैः कृतः पुष्पव्याजेन हासो यत्रेति विग्रहः यूनामेव कामभावाभिज्ञतया हासस्योपयुक्तेः श्लिष्टार्थस्य तरुणशब्दस्योपादानम् ।

"तरुणं स्यान्नवे यूनि कुब्जपुष्पोरुवृक्षयोः ।
करुणो वृक्षभेदे स्याद् दुःखे च करुणोऽस्त्रियाम् ॥"

विरहीत्यादि । विरहिनिकृन्तनाय कुन्तमुखाकृतिर्या केतकी तया दन्तुरिता आशा दिक् यत्रेति विग्रहः "ङ्यापोः संज्ञा छन्दसो बहुलमिति" केतकीशब्दस्य ह्रस्वः । "पुष्पे जातो प्रभृतयः" इत्यमरः । निकृन्तनमिति "कृति च्छेदने" लुटि नुम् दर्शनात् । नूनं जयदेवोऽपि लुटि भ्रान्तनह्यतनुमस्ति शेमुचादीनामिति श एवतद्विधानात् । किन्तु स्थितेर्गतिश्चिन्तनीये गतिश्चिन्तयति पृषोदरादित्वात नुमत्र कल्पनीयः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

विगलितेति । विगलितमपगतं लज्जितं लज्जा येषां ते तादृशाः लज्जितेति भावे क्तः । अतएव जगदवनिजातम् अवलोकयन्तीति जगदवलोकनाः, अस्मिन् समये निर्लज्जान-

---

१ । ख. घ. केतक ।

स्मानवलोक्य जनाः किं वदिष्यन्तीति जगदवलोकनाश्च एतादृशा ये तरुणा युवजनास्तेषु विषये करुणैः करुणकुसुमैः कृतः हासो येन तादृशे, विकसितकरुणकुसुमव्याजेन कामोद्रेकेण निर्लज्जजनान् हसतीत्यर्थः।

अथवा लज्जा येषां संजाता ते लज्जिताः तारकादित्वादितच् प्रत्ययः। विगलिता अपगता लज्जिता यस्मिन् तादृशे वसन्तोदयपर्य्यन्तमुद्दीपकाभावेन मन्दीकृते कन्दर्पदर्पे जगति लज्जा तिष्ठति। वसन्ताविर्भावे तु उद्दीपकमहिम्ना संजातदर्पे तत् प्रभृति जगन्निर्लज्जं भवतीत्यर्थः। तस्यावलोकनेन निरीक्षणेन हेतुना जनितस्तरुण करुणकृताहासः कोमलकरुणकुसुमनिर्मिताहासो यस्मिन् तादृशे, जगदवलोकनतरुणेत्यर्थ तृतीया तत्कृतेत्यादिना समासः। एतादृशे वसन्ते हरिर्विहरतीत्यन्वयः।

किञ्च विरहिजनानां निकृन्तनं नितरां पीड़नं तस्मिन् विषये कुन्तमुखानां प्रसारिताग्राणामाकृतिरिवाकृतिर्येषां तादृशानि यानि केतकानि केतकीकुसुमानि तैर्दन्तुरिता दन्तवत्यः कृता आशा दिशो यस्मिन् तादृशे दन्तानां शैत्यात्तीक्ष्णाग्रत्वाच्च केतकानां तथा रूपणम्। दन्तुरिता व्याप्ता इति वा कृन्तनमित्यत्र नुमागमश्चिन्त्यः आसेत्यादाविव धात्वन्तरमादाय वा प्रयोगः समर्थनीयः। अक्ष्णोरुत्पाटलं पथ्यं नासिकायाश्च कृन्तनमिति वा भट्टस्यापि प्रयोगदर्शनात् दन्तुरितेत्यत्र "दन्त उन्नत उरचिति (५-२-१०६) मत्वर्थे दन्तशब्दादुरच्।" तस्मात्करोति ण्यन्तात् कर्मणि क्तः। देशान्तरे शसयोरभेदत्वादन्त्यानुप्रासोपपत्तिः। अत्र केतकशब्देन केतकीविशेषो ग्राह्यः। न केतकमात्रं वसन्तकाले तस्य समृद्ध्यभावादिति, अथवा सर्वेश्वरसेवार्थं सर्वर्त्तुसमागमसम्भवात् सामान्यं ग्राह्यम् ॥ ५ ॥

माधविकापरिमलललिते नवमालिकयातिसुगन्धौ ।[१]
मुनिमनसामपि मोहनकारिणि तरुणाकारणबन्धौ ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

माधविका परिमलललिते नवमालिकया अति सुगन्धौ "विमर्दोत्थे परिमलो गन्धे" जनमनोहरे" इत्यमरः। पुनः कीदृशे, नवमालिकया अतिसुगन्धौ "सप्तला नवमालिकेत्यमरः"। पुनः कीदृशे, मुनिमनसामपि मोहनकारिणि का कथा रागिणामित्यपि शब्दार्थः। पुनः कीदृशे, तरुणीकारणबन्धौ। अत्र सामान्योक्तेऽपि तरुणः सम्भोग्येव प्रतिपत्तव्यः, व्याजेन विरहिजनस्य दुरन्त इत्युक्तेः। तरुणाश्च तरुण्यश्च तरुणी "पुमान् स्त्रियेत्यकशेषः।" विभावनालङ्कारः। यदुक्तं—

प्रसिद्धहेतुव्यावृत्या यत्किञ्चित्कारणान्तरम्।
यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥ इति ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

माधविकेति । माधविकायाः पुष्पितवासन्तीलतायाः परिमलो गन्धस्तेन मिलिते व्याप्ते, किञ्च, मुनिमनसामपि मुनीनां विषयविमुखानां मनसमन्तकरणानामपि किमुत रागिणामित्यर्थः मोहनकारिणि विकारसम्पादनशीले "सुप्यजातौ णिनिस्ताच्छील्ये (३।२।७८)"। तरुण्यश्च तरुणाश्च "पुमान्स्त्रिया" (१।२।६७) त्येकशेषः। तेषामकारणमन्योऽन्यसंघटनार्थमाह्वानं तत्र बन्धौ विमुखतरुणतरुणीसम्बन्धघटनापटीयसीत्यर्थः। अथवा तरुणतरुणीनामकारणबन्धो अन्योऽन्यसम्बन्धघटननिरुपाधिकमित्रभूते इत्यर्थः। एवंभूते वसन्ते हरिर्विहरतीत्यन्वयः ॥६॥

१। घ. छ. नवमालतिजातिसुगन्धौ।

स्फुरदतिमुक्तलतापरिरम्भणपुलकितमुकुलितचूते।
वृन्दावनविपिने परिसरपरिगतयमुनाजलपूते ॥ ७ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

स्फुरन्त्या अतिमुक्तलतायाः परिरम्भणेन पुलकिता इव मुकुलिताश्चूता येनेति विग्रहः। यथान्यकश्चिदुत्तमाङ्गनाश्लिष्टपुलकिताङ्गो भवति इत्यभिप्रायः। अचेतनावपि स्त्रीपुंसौ संयोगमन्तरेण किं पुनः स्थातुमशक्तौ सचेतनावित्यर्थप्रतिपादनार्थं अस्य पदस्योपन्यासः।

वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः।
भक्तिः संक्षिप्तरूपत्वात्सा समासोक्तिरिष्यते॥ इति

काव्यादर्शः। "अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता" इत्यमरः॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

स्फुरदिति। स्फुरदिति स्फुरन्ती भासमाना या अतिमुक्तलता माधवीलता, "अतिमुक्तः पुण्ड्रकःस्याद्वासन्ती माधवीलतेत्यमर"। तया परिरम्भणमालिङ्गनं तेन मुकुलितः संजातमुकुलः अतएव पुलकितः सञ्जातपुलक इव स्थित इत्यर्थः। एतादृशश्चूतो यस्मिन् तादृशे अत्र लताचूतयोः परिरम्भणादिप्रतिपादनाभयोर्नायिकानायकसाम्यं ध्वन्यते। परिसरे पर्य्यन्तभूमौ पर्य्यन्तभूः परिसरसुरतश्रमापनोदनपटुतरपयःकणालङ्कृत इत्यर्थः। एतादृशे वृन्दावने वृन्दावनाख्यप्रदेशे वसन्तसमये हरिर्विहरतीत्यन्वयः॥ ७ ॥

श्रीजयदेवभणितमिदमुदयति हरिचरणस्मृतिसारम्।
सरसवसन्तसमयवनवर्णनमनुगतमदनविकारम् ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

इदं जयदेवभणितं सरसवसन्तसमये वनवर्णनमुदयतीति योजना। कीदृशं हरिचरणस्तुतिसारं, हरिचरणस्तुतिसारो यत्रेति विग्रहः पुनः कीदृशं, अनुगतमदनविकारं, अनुगतः सन्निधानवर्त्ती मदनविकारः यत्रेति विग्रहः। सम्प्रति बिरहिणां दुःखदायिनं पवनं वर्णयितुमाह। इत्यस्याभिप्रायः श्लोकाभ्यांस्पष्टयति ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति। हरिचरणस्तुतेः श्रीकृष्णपादस्मरणस्य सारो बलं यस्य तत्तादृशं सततहरिचरणस्मरणमूलकारणमित्यर्थः। अनेन तद्गीतस्यामुष्मिकफलसाधनत्वमुक्तम्। न केवलमामुष्मिकैकसाधनत्वमपि त्वैहिकसुखसम्पादकत्वमस्तीत्याह—सरसेति। रसाः शृङ्गारादयस्तैः स वर्त्तत इति सरसः। अथवा पुष्परससहितः अथवा युवतिजनघटनाचतुरः। एतादृशो यो वसन्तसमयस्तस्मिन् वनस्य वर्णनं, अथवा सरसमिति वर्णनविशेषणम्। अत्र एवानुगता अनुसृता मदनविकारा स्त्रीपुरुषकामचेष्टा यस्य तत्तादृशम्। अनेनैहिकसुखसाधनत्वमुक्तम् एतादृशं श्रीजयदेवेन भणितं गदितं गीतं उदयति। सकलजनाह्लादकत्वेन चन्द्र इव उदितमासीदित्यर्थः। यदा यदा गीयते श्रूयते च तदा तदा पारलौकिकं पारसौख्यं सम्भवतीति सूचयितुं वर्त्तमानप्रयोग इत्यवगन्तव्यम्। सारस्य त्वाशीः प्रयोग इति ध्येयम् ॥ ८ ॥

दरविदलितमल्लीवल्लिचञ्चत्पराग-
प्रकटितपटवासैर्वासयन्[1]काननानि ।
इह हि दहति चेतः केतकीगन्धबन्धु
प्रसरदसमबाणप्राणवद्गन्धवाहः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

इह वसन्ते गन्धवाहो वायुश्चेति हरतीति योजना । विरहिणामित्यर्थादवगन्तव्यम् । ननु वायुना सह विरहिणां वैरं नास्ति तत्कथं चेतो हरतीत्याह । प्रसरदसमबाणः प्राणवदिति कामः प्राणसमः सखेति यावत् । जागरूकप्रभुशक्तितांप्रतिपादनार्थं प्रसर-शब्दोपादनम् । कामो ह्यत्र महीपतित्वेन निर्दिष्टस्तस्य विरहिणो वधाः समुल्लंघित-शासनत्वात् । यदुक्तं—"आज्ञाभङ्गकरान् राजा न क्षमेत स्वसुतानपीति कामन्दके ।"

तत्सखश्चायं वायुरतस्तदाज्ञया विरहिणो दहतीत्यभिप्रायः किं कुर्वन् दरविदलित-मल्लीवल्लि चञ्चत् परागप्रकटितपटवासैः काननानि वासयन् वास उपसेवायां चुरादिः । इषत्विकसित मल्लिकाव्रततीभ्यश्चञ्चन्तश्च ते परागाश्चेति कर्मधारयः । दरविदलितमल्ली-वल्लिचञ्चत्परागैः प्रकटिताः पटवासः सुगन्धिचूर्णानि तैः अरण्यानि सुगन्धयन् इत्यर्थः । पुनः कीदृक्, केतकीगन्धबन्धुः अत्र वायोः शैत्यं न वर्णितं तद्योगे चेतो दाहाभावात् । "दरोऽस्त्रियां भये शुभ्रे इषदर्थे दरोऽव्ययम् ।" " परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि । सुगन्धिचूर्णपिष्टातः पटवासकः " इत्यपि ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

पुनः प्रकारान्तरेण राधामाह । दरविदलितेति । हे राधे ! दरं इषद्विदलिताश्चलिता या मल्लीवलयः मल्लिका लताः अथवा मल्यश्च मल्लीवल्लय: अत्रैव गोबलीवर्दन्यायेन

[1] । पटवासै रञ्जयन् इति पाठान्तरम् ।

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीड़त्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥ ६ ॥

मल्लिकानां पृथगुपादानम्। तासां मल्लिकावल्लीनां चञ्चन्त आभासमाना ये परागाः सुमनो रजांसि "परागःसुमनो रजः" इत्यमरः तान्येव प्रकटिता स्फुटीकृता पटवासा नानाविधकुसुमादि सुगन्धिद्रव्यपरिमलमिलितगन्धचूर्णानि "पटवासो गन्ध चूर्णकुसुमाद्यैरधिवासितमित्यभिधानम्।" तैः काननानि कृष्णविहारयोग्यविपिनानि वासयन्नधिवासयन् परिमलयुक्तानि कुर्वन्निति यावत्। अञ्चयन्निति केषुचित् पाठः। तदाऽयमेवार्थः। केतकीगन्धस्य बन्धुः सहचरः तद्गन्धाधिवासित इत्यर्थः। एतादृशो यः गन्धं वहतीति गन्धवहः मलयमारुतः कर्मण्यणीत्यण् प्रत्ययः। स कर्त्ता प्रसरन् वियोगीजननिवर्त्तनाय बहिः सञ्चरन् यः असमबाणस्य प्राणस्तद्वत्। स इव तेन तुल्यं क्रिया चेद्वतिरिति वति प्रत्ययः। प्राण इति जातावेकवचनम्। अथवा प्रधानत्वात् स एव ग्राह्यः। अथवा प्रसरतः वसन्तसमये वियोगिजनविजयाय विष्वक् व्याप्नुवतः असमबाणस्य वा योजना। इह वसन्तसमये चेतः वियोगिनां चित्तादि दहति भस्मीकरोति हि प्रसिद्धौ। पीड़यति खल्वित्यर्थः पश्येति वाक्यशेषः। छेकानुप्रास-काव्यलिङ्ग-स्वभावोक्त्युपमाविशेषाणां संसृष्टिः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

अमी वसन्तसम्बन्धि ये वासरा पथिकैः कथं कथमपि महता कष्टेन नीयन्ते इति वाक्यार्थः। कीदृशाः वासराः, उन्मीलदित्यादिना उद्गीर्णकर्णज्वराः उन्मीलन्तश्च ते मधुगन्धाश्चेति कर्मधारयः। उन्मीलन्मधुगन्धेषु लुब्धाः ये मधुपाः, तैर्व्याधूता इति सप्तमी समासः। तद्व्याधूताश्च ते चूताङ्कुराश्चेति कर्मधारायः। तद्व्याधूतचूताङ्कु-

रेषु क्रीड़न्त इति सप्तमी समासः तद्व्याधूतचूताङ्कुरक्रीड़न्तश्च ते कोकिलाश्चेति कर्मधारयः। तद्व्याधूत चूताङ्कुरक्रीड़त्कोकिलकाकल्याः कलकला इति षष्ठीसमासः। तैस्तथा प्रोद्गीर्णः कर्णज्वरो येष्विति वहुव्रिहिः। तदेवं विकसन्मधुगन्धेषु लुब्धाः ये भ्रमरास्तैराकम्पितचूताङ्कुरेषु क्रीडतां पिकानां यः सूक्ष्मध्वनिः तदाबद्धकोलाहलैरुत्पन्नश्रवणव्याधय इत्यर्थः। कोऽसौ महाकष्टपूर्वप्रकार इत्याह। ध्यानेत्यादि। ध्याने यदविधानमेकाग्रचित्तता तेन क्षणं प्राप्तायाः प्राणसमायाः समागमरसोल्लासैः प्रहर्षविशेषैरित्यर्थः। "काकली तु कले सूक्ष्मे" "कोलाहलः कलकल" इत्यमरः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

सखि राधायै प्रकारान्तरेणापि वसन्तस्वरूपं कथयति। उन्मीलन् भासमानो यो मधुर्वसन्तः तत्र ये गन्धाः नानाविधकुसुमपरिमलाः तत्र लुब्धा आसक्ता ये मधुपाः मधुकराः अथवा मधु पुष्परसः तच्च गन्धश्च मधुगन्धौ उन्मीलन्तौ वसन्त समये प्रोज्म्भमाणौ यौ मधुगन्धौ तयोर्लुब्धा अथवा मधुशब्दस्तन्त्रेणोपात्तः। तदा मधौ वसन्ते यौ मधुगन्धौ इत्यन्वयः, शेषं समानम्। तादृशैर्मधुपैर्व्याधूताः मन्दान्दोलिताः ये चूताङ्कुराः सहकारपल्लवास्तत्र क्रीडन्तश्चर्वणार्थं विहरमाणार्थं ये कोकिलाः परिपुष्टास्तेषां तद्वा, चूताङ्कुरे क्रीड़न्तः भक्षणानुकूल-चूताङ्कुरार्थं विहरमाणा इत्यर्थः। काकलीकलकलैर्मधुरस्फुटध्वनिरूपकोलाहलैः "काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुट" "इत्यमरः "कोलाहलः कलकल" इति च।

तैर्हेतुभिरुद्गीर्णं अन्तरावस्थानं परित्यज्य स्फुटभावेन बहिर्गतः कर्णज्वरः वियोगिश्रोतृजनश्रोत्रतापो येषु तादृशाः। अत्रोद्गीर्णशब्दस्य गौणवृत्त्याश्रयणान्न ग्राम्यत्वम् तदुक्तं—

उद्गारोद्गीर्णं वान्तादिगौणवृत्तिव्यपाश्रयात्।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते॥ इति ॥

एतादृशाः अमी परिदृश्यमानाः वासराः वसन्तदिवसाः ध्यानं नाम कर्णज्वराविर्भावानन्तरं तन्निवर्त्तकत्वेन गृहस्थितस्वकामिनीचिन्तनम् । तत्रावधानं नाम चित्तैकाग्र्यं तस्य क्षणस्तत्समय इत्यर्थः तस्मिन् प्राप्ताः अपरोक्षत्वेनान्तःकरणे आविर्भूता या प्राणसमा निजकान्तास्तासां समागमरस आलिङ्गनसौख्यम्, अथवा प्राप्तो यः प्राणसम आसमागम इति वा योजना तस्योल्लास उदयो येषां ते तादृशाः तैः पथिकैः पान्थैः "पथः ष्कन्निति" (५-१-७५) ठन् प्रत्ययः । "इसुसुक्तान्तात्कः" (७-३-५१) इति ठस्य कादेशः । कथं कथमपीति कृच्छ्रेण नीयन्ते गम्यन्ते, अपनीता क्रियन्त इति यावत् । नयतेः कर्मणि लट् । सर्वथा वियोगिनामयं समयो मरणप्राय इति भावः । पश्येति वाक्यशेषः । उद्गीर्णकर्णज्वरा इत्यनेनेदं द्योत्यते—यथा लोके ध्याने दिव्यौषधिभावनायां यदवधानं चित्तैकाग्र्यं तत्क्षणे प्राप्तौ य प्राणसमः पञ्चप्राणकल्पः अतएवासमः प्राणव्यतिरेकेण तत्तुल्यवस्त्वन्तराभावादित्यर्थः ।

एतादृशो य आगमरसः विल्वादिदशद्रुममूलकषायरसः "पलाशीद्रुद्रुमागमाः" इत्यमरः । तस्य उल्लासः सन्तोषः स्युः सेवनं येषां ते तादृशाः तैः वसन्तकालपर्ववासरेषु कोकिलादिकोलाहलश्रवणेज्वरिणां ज्वराधिक्यं भवतीत्यत्रोद्गीर्णकर्णज्वरत्वोपपत्तिः । तदुक्तं—

वायुः प्रकोपमुपयाति घनागमेऽसौ
श्लेष्मः प्रकोपमुपयाति तथा वसन्ते ॥

श्लेष्मज्वरोऽपीत्यर्थः ।

तरुण्याः स्पर्शसंलापं चन्दनं मालिकास्तथा ।
उद्दीपकानि चान्यानि वर्जयेत् ज्वरितो नरः ॥

इति वर्जयेदित्युक्त्या तत्सेवने ज्वराधिक्यं भवतीत्यवगन्तव्यम् । एतादृशैर्ज्वरिभिर्वसन्तवासराः वसन्तकालदिवसाः कथं कथमप्यति प्रयासेन नीयन्ते, मरणकल्पेन

अनेकनारीपरिरम्भसम्भ्रम-

स्फुरन्मनोहारि विलासलालसम् ।

मुरारिमारादुपदर्शयन्त्यसौ

सखी समक्षं पुनराह राधिकाम् ॥ १० ॥

---

याप्यन्ते। तद्वदिति विशेषणसामर्थ्यादप्रस्तुतार्थप्रतीतेः समासोक्तिः । प्रकृताप्रकृत-श्लेषो वा न च तस्यैवाभावः। एकावलीकारमते तस्याभावेपि विद्या यथादिमतेषु तस्य भावात्। उक्तं च—प्रकृताप्रकृतोभयगतमुक्तं चेत् शब्दमात्रसाधर्म्यात्। श्लेषोऽयं श्लिष्टत्वं सर्वत्राद्यद्वयेनान्य इति। विल्वाद्यागमरससेवनस्य ज्वरनिवर्त्तकत्वम्।

विल्वकाश्मीरतर्कारी पाटलीतिन्दुकैर्महत् ।
ह्रस्वं बृहत्यशुमति द्वयं गोक्षुरकं तथा ।
उभयं दशमूलाख्यं दोषज्वरनिवारणम् ॥

इति वचनादवगन्तव्यम् ॥ ९ ॥

॥सर्वाङ्गसुन्दरी॥

असौ सखी समक्षं यथा स्यादेवं राधिकां पुनराह । आहेत्यव्ययं भूतकाले चादिपाठात्साधुः, कीदृशी, आरान्मुरारिमुपदर्शयन्ती, "आराद्दूरसमीपयोरित्यमरः"। अनेकनारीत्यादिकं मुरारेर्विशेषणम्। अनेकनारीणां परिरम्भे यः संभ्रमस्त्वरा तेन स्फुरन्त्युद्गच्छन्ति मनोहारिणि विलासे लालसा औत्सुक्यं व्यधिकरणे बहुव्रीहिः । 'लालसे प्रार्थनौत्सुक्ये" इत्यमरः ॥१०॥

॥ चतुर्थः प्रबन्धः ॥

राम किरीरागेण गीयते

**चन्दनचर्च्चितनीलकलेवर पीतवसनवनमाली ।**
**केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशाली ।**
**हरिरिह मुग्धवधूनिकरे,**
**विलासिनि विलसति केलिपरे ॥ध्रुवम् ॥१॥**

---

॥ श्रुतिरञ्जनी ॥

एवं वसन्तसमयमुपवर्ण्य तत्र समये नारीभिः सह विहरमाणं श्रीकृष्णं प्रत्यक्षेण प्रदर्शयन्ती सखी राधां प्राह । अनेकेति । अनेकासां नारीणां यः परिरम्भ आलिङ्गनं तत्र सम्भवस्त्वरा तेन स्फुरन् भासमानो मनोहारी चित्ताकर्षणशीलश्च यो विलासः विभ्रमः तत्र लालसः लम्पटः तत्परवश इति यावत् । "लोलुगो लोलुभो लोलो लालसो-लम्पटोऽपि चेति" प्रतापमार्त्तण्डः, तादृशम्, अनेकेत्यत्र सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पुंवद्भावः । स्त्रियाः पुंवत् ( ६ । ३ । ३४ ) इत्यादिना वा मनोहारी-त्यत्र "सुप्य जाताविति णिनिः ( ३ । २ । ७ ) एवंभूतं मुरारिं श्रीकृष्णं आरात् समीपे दूरे वा "आराद्दूरसमीपयोरित्यमरः" । समक्षं यथा तथा "प्रतिपर—समनु-भ्योऽक्ष्ण" इति समासान्तष्ट च्, उपदर्शयन्ती, प्रदर्शयन्ती सखी उपदर्शयन्तीति वा योजना । राधिकां पुनराह ब्रूते । "ब्रूवः पञ्चाना मित्यादिना (३ । ४ । ८४) लटि प्रथमपुरुषस्य णलादेशः, ब्रुव आहादेशश्च, नात्र भूतार्थत्वमाहसा उक्तेर्वक्ष्यमाणत्वात् । यत्र भूतार्थे किमिच्छसीति स्फुटमाह, वासव इत्यादौ स प्रयोगो भ्रान्तिमूल इत्यवगन्तव्यम् । ब्रुवणलादिविधानात्, तदुक्तं वामनेन, आहोभूते, अलं तु भ्रमादिति, भूतार्थे मुखप्रयोगस्तु तस्मात्तरपदत्वेनैव प्रयोगश्च आहस्मास्मितमदुमय्यदक्षरां गिरमिति ॥१०।

॥सर्वाङ्गसुन्दरी।

श्लोकोक्तमर्थं गीतेन वर्णयन्नाह । रामकिरीरागेण गीयते । अस्य ध्यानं यथा—

स्वर्णप्रभाभासुरभूषणा च नीलं निचोलं वपुषा वहन्ती ।
कान्ते पदोपान्तमधिश्रितेऽपि मानोन्नता रामकिरी प्रदिष्टा ॥

कृष्णं प्रति राधागमनप्रोत्साहनं प्रागुक्तं, तत्र कदाचित् कृष्णः स्वयमुपगतां मां नानुमंस्यत इति राधाप्रतिवचनमाशङ्क्याह । हे विलासिनि ! राधे ! इह वसन्ते मुग्धवधूनिकरे सुन्दरस्त्रीनिचये हरिर्विलसतीति वाक्यार्थः, "मुग्धः सुन्दरमूढयो-रित्यमरः ।" पक्षे मूढ इति व्याख्येयम् । तदयमत्रार्थः । तवाभावात् केलिपरे क्रीड़ामात्र-शालिन्यपि हावभावानभिज्ञे वधूसमूहे हरिः क्रीडति । यदि तु त्वमेष्यसि तदा ताः सर्वास्त्यक्त्वा त्वयैव सार्द्धं क्रीड़िष्यति । यतोऽसौ विलासी त्वं च विलासिनी, युक्तः उभयोर्विलासिनोः समागम इति राधिकागमनप्रोत्साहनं स्त्रीविलास पुं-विलासौ प्रागुक्तौ, हरिविलासितां प्रतिपादयन्नाह । चन्दनचर्चितेत्यादि । चन्दनचर्चितं नीलकलेवरं यस्येति विग्रहः । पीतं वसनं यस्येति विग्रहः । वनमाला अस्यास्तीति व्रीह्यादित्वादिनि च त्रयाणां कर्मधारयः । केलिचलन्नित्यादिः । केलिभिश्चलाभ्यां मणिकुण्डलाभ्यां मण्डितं गण्डयुगं यस्येति विग्रहः । स्मितमीषद्धसितं शालि तु गन्तु-शीलमस्य सस्मितशाली । शलद्मलपतृगतौ, द्वयोः कर्मधारयः ॥१॥

॥ श्रुतिरञ्जनी ॥

आहेत्युक्तं, तत्प्रकारमेव विशदयति । चन्देनेति । एकतालीतालेन गेयं, तल्लक्षणं तु "एकेनैव हतेन स्यादेकतालीति कथ्यते " "इति रामक्रियारागेण गीयते इत्युक्तम् । तस्यायमभिप्रायः वसन्तरागस्य पुरुषरागत्वात्, रामक्रियायास्तत्कलत्रत्वात्पतिसन्नि-धान एव कलत्रस्यावस्थानं न्याय्यमिति रामक्रियारागेण गीयत इत्युक्तम्, तदुक्तम्—

**पीनपयोधरभारभरेण हरिं परिरभ्य सरागम्।**
**गोपवधूरनुगायति काचिदुदञ्चितपञ्चमरागम् ॥ २ ॥**

---

"रामक्रिया वरालीच गौली वासन्तयोषित" इति । तत्र हरिरित्यारभ्य केलिपर इत्यन्तं ध्रुवपदमिदम् । तदादौ व्याक्रियते हे राधे ! विलासिनि ! केलिपरे ! एतद् द्वयं राधा सम्बोधनं वा, कीदृशो हरिर्विहरतीत्याकाङ्क्षायामाह । चन्दनेति । चन्दनेन पटीरेण चर्चितं रूषितं लिप्तमिति यावत् । एतादृशं नीलं श्यामवर्ण्णं च यत् कलेवरं शरीरं तत्र पीतं सुवर्ण्णवर्ण्णं वसनमम्बरं यस्य स चासौ वनमाली च । अथवा, नीलकलेवरश्चासौ वनमाली चेति वा, अनेन वर्ण्णत्रयसम्पत्त्यातिसौन्दर्य्यं सूचितम् । वनमालीत्यत्र व्रीह्यादित्वादिनिः । आन्ध्रदेशे वरशब्दस्य ग्राम्यत्वदोषः प्रयोगबाहुल्यात्परिहर्त्तव्यः । किञ्च, केलिषु विहारेषु चलति चलमाने ये मणिकुण्डले ताभ्यां मण्डितमलङ्कृतं यद्गण्डयुगं कपोलयुग्मं तत्र यत् स्मितं मन्दहासस्तेन शाली रमणीयः, एतादृशो हरिर्विलसतीत्यन्वयः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

इतो गोपीनां सौन्दर्य्यमविदग्धत्वं च प्रतिपादयन्नाह । काचित् गोपवधू पीनपयोधरभारभरेण परिरभ्य हरिमुदञ्चितपञ्चमरागं यथा स्यादेवमनुगायति कृष्णगानपश्चाद् गायति इत्यर्थः । कीदृशं हरिं सरागं गानपरमित्यर्थः "पञ्चमो रागभेदे स्यात्पञ्चानामपि पूरणे" । अत्र पीनपयोधरपदोपन्यासात् गोप्याः सौन्दर्य्यं प्राक्-

**कापि विलासविलोलविलोचनखेलनजनितमनोजम् ।**
**ध्यायति मुग्धवधूरधिकं मधुसूदनवदनसरोजम् ॥३॥**

---

स्वयम् अलिङ्गनादवैदग्ध्यम्। "वट्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे" इत्यमरः" ॥२॥

॥ श्रुतिरञ्जनी ॥

पीनेति। काचिद्गोपवधूः काचिद्वल्लवाङ्गना पीनौ यौ पयोधरौ कुचो तयोर्भारभरेण अत्यन्तभरेणेति वा, अथवा, पयोधरभारस्य भरस्तेन "अष्यथातिशयो भरः" इत्यमरः । आलिङ्गनसारस्यायैतदुपात्तमवगन्तव्यम् । सरागं साभिलाषं यथा तथा हरिं श्रीकृष्णं परिरभ्य आलिङ्ग्य अथवा सरागमिति हरिविशेषणम् । अन्यत्पूर्ववत् । उदञ्चितः प्रपञ्चितः पञ्चमरागः उद्दीपकपिकालापकल्पज्ञानविशेषो यस्मिन् कर्मणि तद् यथा तथा, अथवा पञ्चमः पञ्चमाख्यः स्वरविशेषः । "षड्जं मयूरो वदति पिकः कूजति पञ्चमम् ॥ उक्तं च—

रे रे कोकिल मा भज मौनं किञ्चिदुदञ्चय पञ्चमरागम्।
नोचेत्तामिह को जानीते काक कदम्बक नीते चूते ॥

इति गायति वदति तस्मिन् मुग्धवधूनिकरे हरिः विलसतीत्यन्वयः । एवमन्यत्रापि यच्छब्दाध्याहारेण ध्रुवपदान्वयः कल्पनीयः । अध्याहारप्रकारस्तु आदिमश्लोक-व्याख्यान एव स्फुटीकृतः । अञ्चित इत्यत्र अञ्चेः पूजायामितीडागमः । पीनेत्यत्र उदितश्चेति निष्ठा ॥२॥

॥ सर्वाङ्गसुन्दरी ॥

कापि मुग्धवधू मधुसूदनवदनसरोजमधिकं यथा स्यात्तथा ध्यायति । कीदृशं, विलासविलोलविलोचन खेलनजनितमनोजम् । विलासेन विलोलयोर्विलोचनयोः

कापि कपोलतले मिलिता लपितुं[1] किमपि श्रुतिमूले।
कापि चुचुम्ब नितम्बवती दयितं पुलकैरनुकूले ॥४॥

खेलनेन कटाक्षेण जनित उत्पादितः मनुजो येनेति विग्रहः । अत्र मुग्धशब्दोपादानात् गोप्याः सौन्दर्य्यं अवैदग्ध्यं तु तत्कालदर्शनयोग्ये मधुसूदनवदने ध्यानात् ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

कापीति । यस्मिन् मुग्धवधूनिकरे कापि काचिन्मुग्धवधूः अतिसुन्दरगोपकामिनी विलासेन विभ्रमेण विलोले चञ्चले ये विलोचने तयोः खेलनं विहरणं तेन जनितः उत्पादितः मनोजः कामो येन तत्तादृशम् । अत्यन्तमन्मथोद्दीपकमित्यर्थः । मधुसूदनस्य श्रीकृष्णस्य वदनसरोजं मुखकमलम् । अधिकमत्यन्तं ध्यायति । मधुसूदनवदनसौन्दर्य्यं बहिरिव लोकान्तरमपि तथा भाजयतीत्यर्थः । तस्मिन् वधूनिकरे हरिर्विहरतीत्यन्वयः । एतेन भगवति श्रीकृष्णेऽस्याः अत्यन्तानुरक्तिः सूचिता ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

कापि नितम्बवती प्रशस्तनितम्बा श्रुतिमूले किमपि लपितुं मिलिता सती कपोले चारु यथा स्यादेवं दयितं कृष्णं चुचुम्बेति वाक्यार्थः । कीदृशे कपोलतले पुलकैरनुकूले, सात्विकभावाद्रोमाञ्चित इत्यर्थः । अत्र नितम्बवतीपदोपन्यासात् गोप्याः सौन्दर्य्यं प्राक् स्वचुम्बनादवैदग्ध्यम् । "पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं पुरः" इत्यमरः ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

कापि कपोलेति । यस्मिन् वधूनिकरे कापि काचिन्नितम्बवती गोपाङ्गना श्रुतिमूले कृष्णस्य कर्णमूले किमप्यनिर्वाच्यमालपितुं व्यक्तं वक्तुं पुलकैः रोमोद्गमैः अनुकूले

१ । ख. आलपितुम् ।

केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले।
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेण दुकूले ॥ ५ ॥

---

चुम्बनयोग्ये अन्तरनुरक्ति सूचकत्वात् पुलकानां चुम्बनानुकूल्यमिति भावः । अत्र पुलकानां चुम्बनात्पूर्वमेव कपोले आविर्भावप्रतिपादनात्तस्यामत्यासक्तिः सूचिता, कपोलतले कृष्णस्य गण्डप्रदेशे मिलिता घटमाना आसक्ता सतीत्यर्थः । चारु सुखोदयं यथा तथा दयितं कृष्णं चुचुम्ब चुम्बनं कृतवती । रहस्यकथनव्याजेन कृष्णस्य कपोलचुम्बनं चकारेत्यर्थः। कपोलस्य चुम्बनस्थानत्वमुक्तं रतिरहस्ये—

नयनयुगकपोलं दन्तवासो मुखान्तः
स्तनयुगलललाटं चुम्बनस्थानमाहुः ।
तदनु जघन नाभीमूलकमाशु चुम्बेत्
व्यतिकरमुखमुच्चैर्देशसाम्येन लाटः ॥ इति ॥

तस्मिन वधूनिकरे हरिर्विहरतीत्यन्वयः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

काचिद्गोपवधूः केलिकलाकुतुकेनामुं श्रीकृष्णं दुकूले वस्त्रे विचकर्षेति। सप्तम्यन्ता दुकूलस्य, केचिदमुं दुकूले वस्त्रयुग्मं च विचकर्षेति द्विकर्मतामाहुः। तत्रात्मन् एकं वस्त्रं परं कृष्णस्य इत्युभयोर्वस्त्रस्य ज्ञेयम् । कीदृशं यमुनाकूले मञ्जुलवञ्जुले कुञ्जगतं "मञ्जु कान्तं मनोज्ञंच मनोज्ञं मञ्जुमञ्जुलं" "शीते वानीरवञ्जुलाः" । इत्यमरः छत्रिणो यान्तीति न्यायात् । गन्ध गर्दभन्यायेन च गोप्याः मुग्धवध्वन्तर्गताः। प्राक् स्वयं वस्त्राकर्षणादवैदग्ध्यम्। ॥ ५ ॥

**करतलतालतरलवलयावलिकलितकलस्वनवंशे ।**
**रासरसे सहनृत्यपरा हरिणा युवतिः प्रशशंसे ॥६॥**

॥ श्रुतिरञ्जनी ।

केलीति । किञ्च, यस्मिन् वधूनिकरे, काचिद्गोपिका केलिषु कामक्रीडासु याः कलाः तदर्थम् । यत्कुतुकं तेन, अथवा केलिषु विषये याः कलाः तेषु विषयेषु कुतुकेन कुतूहलेन हेतुना अमुं योषित्परिषद् परिदृश्यमानं श्रीकृष्णं यमुनावनकूले कालिन्दी-तटे विपिनसमीपे, अथवा, यमुनाया वनं जलं "जीवनं भुवनं वनमित्यमरः" । तस्य कूले तीरसमीपभूमौ अधिकरणसप्तमी । मञ्जुलो मनोहरो यो वञ्जुलः कुञ्जः वानीरलतागृहं तस्मिन्, "निकुञ्ज कुञ्जौ वा क्लीवे लतादिपिहितोदर" इत्यमरः । गतं गमनं यस्मिन् कर्मणि तद्यथा तथा करेण हस्तेन दुकूले क्षौमवसनं विचकर्ष आकृष्टवती, योषिन्मण्डलगतं श्रीकृष्णं वञ्जुललतामन्दिरे क्रीडार्थमागच्छेदित्याचक-र्षेत्यर्थः । कुञ्जगतमित्येतत्कृष्णविशेषणम् । तदा आकर्षणं यमुनाकूलं प्रत्यवगन्त-व्यम् । पूर्वव्याख्याने कुञ्जं प्रतीति विवेकः । तस्मिन् वधूनिकरे हरिर्विलसती त्यन्वयः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

रासरसे गोपक्रीडारसे सह नृत्यपरा युगपत् नृत्यन्ती कापि युवतिः हरिणा कृष्णेन प्रशशंसे प्रशंसितेति वाक्यार्थः । तेन तरलया वलयावल्या कङ्कणश्रेण्या कलितः सम्भक्तः कलस्वनवंशः यत्रेति विग्रहः ॥

शीतकालक्रियामाने तालः खड्गादि मुष्टिषु ।
द्रुमभेदे करास्फाले तालं तु हरितालके ॥ इति विश्वः ।

अत्रापि छत्रिणो गच्छन्तीति न्यायात् । गोप्यो मुग्धवध्वन्तर्गताः तात्तालयोग्यस्य हावादेरकरणात् रतिविधावकौशल्यादवैदग्ध्यम् ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

करतलेति । करतलयोः हस्ताग्रप्रदेशयोर्यौ तालौ मयूराण्डसदृशकांस्यपात्रविशेषौ ताभ्यां तरला चञ्चला तालघातव्यापारेण इतस्ततश्चलन्तीत्यर्थः । एवं विधा या वलयावलिः कङ्कणमालिका तया कलितः मिश्रितः अतएव कलः अव्यक्तमधुरस्वनो निनादो यस्मिन्, तादृशो वंशो वेणुनालं यस्मिन् तादृशे,ताललक्षणं तु वाद्यविवेके—

मयुराण्डार्द्धसदृशं कांस्यतालद्वयं शुभम् ।
घात्यः शिव इति ख्यातो घातकः शक्तिरुच्यते ॥

अथवा करतालाभ्यां जायमानो यस्तालश्च चञ्चपुटादिस्तन्निर्माणाय या तरला वलयावलिरित्यादि पूर्ववत् करतल एव तालौ कांस्यपात्रविशेषौ ताभ्यां तरलेत्यादि तुल्यं स त्वत्र तालोत्पादनाय बलमानवलयावलिभिरेवानुगृहीतवंशनिःस्वन सम्पन्न इत्यर्थः ।

एतादृशे रासे नृत्यविशेष तल्लक्षणं तु उक्तं लक्ष्मीविलासे, यत्र सम्भूय वलिताः परस्परमनोहरम् । दण्डैर्दण्डैश्च नृत्यन्ति नृत्यं तद्दण्डरासकमिति । रास एव दण्डरासकमित्यर्थः । सहनृत्यपरा हरिणा सह नृत्यासक्ता, यस्मिन् वधूनिकरे युवतिः काचिद्वल्लवतरुणी हरिणा कृष्णेन प्रशशंसे तुष्टाव, वेणुनादानुगुणकरतालस्त्वया सम्यगाचरित इति कृष्णेन स्तुतेत्यर्थः । संस्तुतावित्यस्मात्कर्मणि लिट् । तस्मिन् वधूनिकरे हरिर्विलसतीत्यन्वयः ॥ ६ ॥

**श्लिष्यति कामपि चुम्बति कामपि कामपि रमयतिरामाम् ।**
**पश्यति सस्मितचारुतरामपरामनुगच्छति वामाम् ॥ ७ ॥**

॥ सर्वाङ्गसुन्दरी ॥

यतः एता गोप्यो न विदग्धाः अतः कामपि श्लिष्यति, कामपि चुम्बति, कामपि रमयति, नत्वेकस्यां सर्वश्रृङ्गाररम्भः । रामामिति सर्वत्र योज्यम् । सुन्दरीरमणीरामेत्यमरः । पश्यतीत्यादिः । परामन्यां बालां प्रतिकूलवर्त्तिनीं स कृष्णः स्मितचारुः यथा स्यात्तथा पश्यति । त्रैलोक्यनाथेनापि मया सेव्यमानेयं प्रतिकूलतां न जहातीति । हरेः स्मितोद्गमः । वामामित्युभयत्र योज्यम् । "प्रतीपदर्शिनी वामेत्यमरः ।" संवृणोति खलु दोषमाज्ञतेत्यपरां वामामनुगच्छति । अज्ञता त्वस्या अस्थाने वाम्यकरणात् यदुक्तं —

या कुप्यति विनादोषैस्तुष्यत्यननुनयं विना ।
अहेतुकप्रवृत्तिश्च चलचित्तेति साधना ॥ इति ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

इत्थमनेन नारीश्रृङ्गारचेष्टितो हरिरेकदैव बहुभिर्विहरणैस्ताः सुखयति । श्लिष्यतीति हरिरस्मिन् वधूनिकरे कामपि काञ्चिद्वल्लवाङ्गनां श्लिष्यति आलिङ्गति विदलादिस्पृष्टकालिङ्गनादि कस्यांचित् करोतीत्यर्थः उक्तं च इति रहस्ये —

यद्योषितः सम्मुखमागताया
अन्योपदेशाद्व्रजतो नरस्य ।
गात्रेण गात्रं घटतेऽत्र तद्यद्-
ह्यालिङ्गनं स्पृष्टकमेतदाहुः ॥

आलिङ्गनं बाह्यमिह प्रयोज्य तत्रापि चालिङ्गनपूर्वमन्यत् ।

श्रीजयदेवभणितमिदमद्भुतकेशवकेलिरहस्यम् ।
बृन्दावनविपिने ललितं वितनोतु शुभानि यशस्यम् ॥ ८ ॥

---

तदालिङ्गनं वद्धकपीडितलतावेष्टितेत्यादिप्रकारेण संतबिधमिति । कामपि काञ्चिद्गोपकामिनीं चुम्बति। चुम्बनस्थानानि प्रागेव कथितानि। कामपि रामां रमयति क्रीडयति। स कृष्णः स्मितेन मन्दहासेन चारुतरामपरामत्यन्तमनोहरामथवा स्मितेन मन्दहासेन सहस्मिताः सस्मिता अतएव चारुतरा सस्मिता च सा चारुतरा चेति तादृशीमपरां गोपिकां पश्यति वीक्षते। "पाघ्राध्मेत्यादिना पश्यादेशः।" सस्मितचारुपरामिति केषुचित् पाठः। तदा स्मितेन चारु यथा तथा परमन्यां गोपिकां पश्यतीत्यन्वयः। अस्मिन् पक्षे स इति पृथक् पदं कृष्णविशेषणम्। अथवा चार्वित्यत्र भावप्रधानो निर्द्देशः। तदा स्मितं च तच्चारुत्वं च स्मितचारुत्वे, ताभ्यां सहितं यथातथा परामित्यन्वयः। अथवा स्मितेन सहिता अतएव चारुः सस्मिता चासौ चारुश्च, सा परा चेति च विग्रहः। तामित्यर्थः वामां सुन्दरीं "वामः सुन्दरवक्रयोरित्यमरः।" अपरामन्यां गोपकामिनीं अनुगच्छत्यनुव्रजति अनुसृत्य संकेतस्थलं प्रति यातीत्यर्थः। अनेन भगवतः श्रीकृष्णस्यातिसम्भोगचातुरी सूचितेति मन्तव्यम् ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

इदं श्रीजयदेवभणितमद्भुतं केशवकेलिरहस्यं शृण्वतां शुभानि वितनोत्विति वाक्यार्थः।

एकेनैवानेकस्यां प्रीणनात् केशवकेलिरहस्यस्याद्भुतत्वम्। "रहः स्यात् स्त्रीनदीभेदे गोपनीयेऽभिधेयवत्"। कीदृशं वृन्दावन विजने वलितमुत्पन्नम्। पुनः कीदृशं, निजयशस्यं यशसे हितं युगवादित्वात् यत् प्रत्ययः॥ ८ ॥

विश्वेषामनुरञ्जनेन जनयन्नानन्दमिन्दीवर–
श्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनङ्गोत्सवम् ।
स्वच्छन्दं वरसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः
शृङ्गारः सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीड़ति ॥११॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । अद्भुतानां लोकाश्चर्य्याणां केशवस्य श्रीकृष्णस्य केलीनां विहाराणां रहस्यं यत्र तत्तादृशम् । किञ्च वृन्दावनाख्यविपिने वने चरितानि कृष्णचरितानि यस्मिन् तादृशं, अतएव यशस्यं कीर्त्तौ साधु तत् "साधुरति" (४-४) य प्रत्ययः । श्रोतृ गातृ यशस्करीत्यर्थः । एतादृशं इदं जयदेवभणितं श्रोतृणां गातृणां शुभानं कल्याणानि वितनोतु । अत्र विधानन्यायेन उद्देश्यगुणविधानन्यायेन क्रियायोगोऽवगन्तव्यः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

गीतापेक्षितश्लोकाभ्यां सूचयति । हे सखि ! मधौ वसन्ते हरिः क्रीडतीति वाक्यार्थः । किं कुर्वन्, विश्वेषामनुरञ्जनेन जनयन्नानन्दम् । पुनः किं कुर्वन्, इन्दीवरश्रेणी श्यामलकोमलैरङ्गैरनङ्गोत्सवं उपनयन् इन्दीवराणां श्रेणय इव श्यामलानि कोमलानि चेति विग्रहः । इन्दीवरं नीलसरोजं स्यात् । स्वच्छन्दं यथा स्यादेवं प्रत्यङ्गमभितो व्रजसुन्दरीभिरालिङ्गितः । "गोष्ठाध्वनि वहा व्रजा" इत्यमरः । यत्र शृङ्गारो मूर्त्तिमानिवेति कविरुत्प्रेक्षांचक्रे ।

पुंसःस्त्रियां स्त्रियाः पुंसि संयोगं प्रति या स्पृहा ।
स शृङ्गार इति ख्यातः रतिक्रीडादिकारणम् ॥

इत्युक्तं शृङ्गारतिलके । शृङ्गाररसोऽपि श्यामवर्णो भवति । यदाह भरताचार्य्यः—
"श्यामो भवति शृङ्गारः सितो हासः प्रकीर्त्तितः । आद्योत्सङ्गेति पूर्वोक्तम् ॥ ११ ॥

॥ श्रुतिरञ्जनी ॥

प्रकारान्तरेणापि राधायै श्रीकृष्णचरितं कथयति। विश्वेषामिति। हे सखि! विश्वेषां सर्वप्राणिनाम् अनुरञ्जनेन स्वविषयानुरागेण सह आनन्दं निरवधिकप्रमोदं जनयनुत्पादयन्, अथवा विश्वेषां स्वनिष्ठालौकिक शृङ्गारचेष्टादर्शनेन यदनुरञ्जनम् अनुरागस्तेन हेतुना तत्परत्वेन तदानीमेव तेषामानन्दं जनयन्, किञ्च, या इन्दीवरश्रेणी नीलोत्पलसमूहस्तद्वत्श्यामलानि नीलवर्णानि उपमानानीत्यादिना समासः। कोमलान्यतिमृदुलानि आलिङ्गनसौख्यसम्पादकानित्यर्थः। तादृशानि यान्यङ्गानि च तैः बाहुप्रभृतिभिरवयवैरनङ्गस्य कामदेवस्य उत्सवः अङ्गहीनस्य मम कामिनी विषये एतैरेवाङ्गै रङ्गसम्पत्तिर्जातेति यः सन्तोषः तमुपनयन् सम्पादयन् तत्सूचनार्थमेव प्रकृतेऽनङ्गपदेन मन्मथकथनमित्यर्थः।

अनेन साक्षान्मन्मथ इवाभातीत्युक्तं भवति, अथवा अङ्गानामिन्दीवरश्रेणीकल्पता प्रतिपादनादिन्दीवरस्य च मन्मथसायकत्वान्ममेदानीं कामिनीजये बहुसायकसम्पत्तिर्जाता इत्यनङ्गस्य यः सन्तोषस्तमवयवैरुपानयन्नित्यर्थः। अतएव मुग्धः अतिसुन्दरः व्रजसुन्दरीभिर्वल्लवललनाभिः अभितः सर्वतः प्रत्यङ्ग प्रत्यवयवं स्वच्छन्दं यथेष्टं असंकोचमिति यावत्। तद् यथा स्यात्तथा आलिङ्गित आश्लिष्टः एतादृशो हरिः श्रीकृष्णः मूर्तिमान विग्रहवान्। "मूर्त्तिकाठिन्यकाययोरित्यमरः॥" शृङ्गारः शृङ्गाररस इव मधौ वसन्तसमये क्रीडति कामिनी कदम्बेन सह विहरतीत्यर्थः। पश्येति वाक्यशेषः अत्रेदं बोद्धव्यम्। आलम्बनोद्दीपनभेदेन द्विप्रकारकविभावकटाक्षादिरूपानुभाव निर्वेदादिव्यभिचारिभावस्तम्भादि सात्त्विकभावव्यङ्ग्यं रतिस्थायिकं ब्रह्मसुखमेव शृङ्गारादिरसशब्दार्थ इत्यभिनवगुप्तपादा उदाहरन्ति, तत्र प्रमाणम्। रसो वै सः रस ह्येवायं लब्धानन्दीभवतीत्यलौकिक चमत्काराभिधानन्दकारी शृङ्गारादिको रस इति काव्यप्रकाशकारः तदुक्तं काव्यप्रकाशे—"अलौकिक चमत्कारी शृङ्गारा-

अद्योत्सङ्गवसद्भुजङ्गकवलक्लेशादिवेशाचलं
प्रालेयप्लवनेच्छयानुसरति श्रीखण्डशैलानिलः ।
किञ्च स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षोदया-
दुन्मीलन्ति कुहुःकुहुरितिकलोत्तालाःपिकानां गिरः ॥ १२ ॥

दिकों रसः" इति चमत्कारानन्दयोरभेदस्तु यथा शृङ्गारादि रसस्य ब्रह्मानन्दरूपता तथा भगवतः श्रीकृष्णस्य साक्षाद्‌ब्रह्मस्वरूपत्वात् आनन्दरूपरसस्यापि, तथात्वेन उभयोरप्येतच्छृङ्गार इवेत्यनन्वयालङ्कारः तदुक्तम्—"एकस्योपमानोपमेयत्वेऽनन्वयो मतः" इति लक्षणात् द्वितीयपक्षे तु उभयोर्भेदादुपमाभेदः। अत्र रसस्य सिद्धत्वेनो-पादानान्न स्वशब्दवाच्यत्वदोषः। साध्यत्वेनोपादान एव दोष इति ॥ ११ ॥

॥ सर्वाङ्गसुन्दरी ॥

वसन्ते दक्षिणा वाता वान्त्येव ततोत्सङ्गवसद्भुजङ्गकवलक्लेशादिव प्रालेय पवने-च्छयाश्रीखण्डशैलानिलः ईशाचलमनुसरतीति कवेरुत्प्रेक्षांचक्रे। मलयपर्वतवातश्चन्द-नतरुकोटरवासिसर्पाणां मुखश्वासैर्मिश्रः सन् विषज्वालया सन्तप्तो हिमावगाहनाय उपयातीत्यर्थः। ईशाचल इत्यचलानामीश इति। राजदन्तादिः। ईशस्याचल इति वा विग्रहः। किंचेति न केवलमिदमेवेत्यर्थः। स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षोदया-त्कुहुः कुहुरिति गिरः पिकानाम् उन्मीलन्तीति द्वितीयो वाक्यार्थः।

गिरः कम्भूताः कलोत्तानाः मधुराः स्फुटत्वेनोद्भट्यः।

कलाधती कला प्रोक्तो ध्वनौ तु मधुरास्फुटे।
उत्तालं स्यादगम्भीरे किरीटोद्भटयोरपि ॥

अत्र स्थितशब्दमध्याहृत्य चूतमुकुलान्यालोक्य स्थितानां पिकानामित्यर्थः प्रतिपत्तव्यः

अन्यथा भिन्नकर्तृत्वात् क्त्वा प्रत्ययो दुरापः स्यात्। हरिरविदग्धाभिः सह क्रोडतीति प्रागुक्तं तत्कदाचिन्निमथ्या राधा मंस्यत इति दूतिप्रत्यक्षं दर्शयत्याह। ॥ १२॥

इति कविराजश्रीनारायणदासकृतायां सर्वाङ्गसुन्दर्यां श्रीगीतगोविन्दटीकायां सामोददामोदरे नाम प्रथमः सर्गः॥

॥ श्रुतिरञ्जनी ॥

वसन्तसमयमेव वर्णयति। अद्येति। अद्य अस्मिन् वसन्त समये श्रीखण्डशैलानिलः चन्दनगिरिसमीरणः उत्सङ्गे पटीरतरूपरिदेशे वसन्तः निषण्णाः ये भुजङ्गाः सुरतखिन्न-पवनाशनाः तैः कवलः ग्रसनं तेन यः क्लेशः सर्वाङ्गीणव्यथा तस्मादिव प्रालेयं हिमं तत्र प्लवनेच्छया ईशस्य परमेश्वरस्य श्वशुरत्वेन सम्बन्धीयोऽचलः हिमवान तम् अथवा ईशः सर्वेषामचलानां स्वामी यः शैलः हिमवान् तमनुसरति अनुगच्छति तदभिमुखेन यातीत्यर्थः। शीतजलावगाहने विषनिवृत्तिर्लोकायुर्वेदयोः प्रसिद्धैव। किञ्च, अस्मिन समय एव पिकानां कोकिलानां गिरः कूजितानि, स्निग्धानि कीटाद्यनुपहतानि रसाल-मौलिमुकुलानि चूताग्रभागस्थितकोरकान्। किञ्चिन् स्निग्धेति केषुचित् पाठः। तदा किञ्चिदीषत्स्निग्धानि विकसितमौलिमुकुलान्यालोक्य दृष्ट्वा हर्षोदयात् अस्माकं सहजसिद्धो यो ग्रासः सहकारकोरकादिः स इदानीमाविर्भूत इति यः सन्तोषस्तस्य उदयादुत्पत्तेः कुहुः इत्यनुकरणशब्दः लोकेऽपोह इष्टवस्तुजनितसन्तोषातिशयवशाज्जनानां कूनुकरणानि भवन्तीत्यनेन प्रकारेण कला अव्यक्तमधुराः उत्तालाङ्काभिराश्च सत्यः उन्मीलन्ति विरहिजनकर्णशूलायमानत्वेन प्रियलिङ्गितजनश्रुतिस्फुटसुधाधारायमाण-त्वेन च विलसन्तीत्यर्थः। आकर्णयेति वाक्यशेषः। उत्प्रेक्षालङ्कारः। ॥ १२ ॥

इति श्रीमदखिलविद्यापारावारदक्षिणामूर्त्तिमहादेवप्रसादलब्धविद्य पूर्वोत्तरमीमांसा शब्दतर्क साहित्य सार्वभौमचरकूरिकण्डुभट्टोपाध्यायानुजेन सर्वाम्बिकागर्भसूक्ति मुक्तामणिना सर्वविद्याकविमतेन लक्ष्मणसूरिणा विरचिते गीतगोविन्दव्याख्याने प्रथमः सर्गः॥

# द्वितीयः सर्गः

॥ अक्लेशकेशवः ॥

विहरति वने राधा साधारणप्रणये हरौ
विगलितनिजोत्कर्षादीर्ष्यावशेन गतान्यतः ।
क्वचिदपि लताकुञ्जे गुञ्जन्मधुव्रतमण्डली–
मुखरशिखरे लीना दीनाप्युवाच रहः सखीम् ॥ १ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

उत्तरगीतमवतारयति । दीना विरहखिन्नापि राधा सखीमुवाचेति योजना । सखीवचनात् कृष्णे जातानुरागा इत्यपि शब्दाद्वेद्यम् । कीदृशा ईर्ष्यावशेन अन्यतो गता कथमीर्ष्येत्याह । साधारणप्रणये हरौ विहरति विगलितनिजोत्कर्षादिति । "साधारणं तु सामान्यं प्रश्रयप्रणयौ समौ ।" पुनः कीदृशी क्वचिदपि लताकुञ्जे लीना । लताशब्दोऽत्र वासन्तीपरो बोद्धव्यः । लतागृहस्यैव कुञ्जत्वाल्लताशब्दोपादानव्यापत्तेः । "वासन्ती माधवीलतेत्यमरः ।" पुनः कीदृशी, लताकुञ्जे गुञ्जन्मधुव्रतमण्डलीमुखरशिखरे गुञ्जन्मधुव्रतमण्डल्या मुखरं शिखरमग्रभागो यस्येति बहुव्रीहिः । "मधुव्रतो मधुकर इत्यमरः ।" हरिणो नाम वृत्तम् ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

एवं सखीवाक्यमुखेन वसन्तसमयं तत्र भगवतः श्रीकृष्णस्य विहारांश्च उपवर्ण्यानन्तरं राधायाश्चरितं वर्णयति । विहरतीति राधाकर्त्री साधारणप्रणये स्वस्यामन्यासु च समानप्रेमणि हरौ श्रीकृष्णे वने वृन्दावने विहरति युवतिभिः सहक्रीडति आक्रीडति, अथवा असाधारणप्रणये स्वापेक्षयाऽन्यास्वतिशयितप्रेमवति हरौ वने विहरति सति विगलितस्तत्रस्तो निजोत्कर्षः अन्यकान्तापेक्षया स्वस्याः पूर्वतनात्यन्तापेक्षया सम्मानः

॥ पञ्चम प्रबन्धः ॥

गुर्ज्जरीरागेण गीयते

**सञ्चरदधरसुधामधुरध्वनिमुखरितमोहनवंशम् ।**
**चलितदृगञ्चल–चञ्चलमौलि–कपोलविलोलवतंसम् ॥**
**रासे हरिमिह विहितविलासम्,**
**स्मरति मनो ममकृतपरिहासम् ॥ ध्रुवम् ॥ १ ॥**

---

तस्मादिदानीं गलितस्वकीयपूर्वसम्मानाद्धेतोरित्यर्थः। अतो हेतो या ईर्ष्या अन्यसम्मानजनितासूयातद्वशेन तेन निमित्तेनेत्यर्थः। अथवा विगलितो यो निजोत्कर्षस्तेनातति सततमागच्छति इत्यात्। अतः सातत्यगमन इत्यस्मादाङ् पूर्वात्क्विप्। सा च ईर्ष्या तद्वशेनान्यतः विहरति। कृष्णसमीपादन्यत्रगता राधा, किंच गुञ्जन्ती झङ्कृतिं कुर्वती या मधुव्रतमण्डली रोलम्बकदम्बकं तेन मुखराणि शिखराणि अग्रभागा यस्मिन् तादृशे एतेन कुञ्जस्यात्यन्तोद्दीपकत्वं व्यज्यते क्वचिदपि कुत्रचिल्लताकुञ्जे लतानिर्मितकुटीरे लीना पूर्वं यस्तु सम्मानं कृतवान् तस्य पुरतः सावमानमवस्थानमनुचितमिति निलोयावस्थितेत्यर्थः न केवलं लीना अपि तु दीना अनन्यगतिव्यतिरेकेण तदवसालापकर्त्तिभावादिति भावः। एवंरूप विशेषणत्रयविशिष्टा सतीं सखीं रहः एकान्ते, अपिवा, रहः एकान्तमुवाच। अत्र ब्रूवो वचिरादेशः। ब्रुविशासीत्यादिना द्विकर्मकत्वम्। तथा प्रयोगोऽपि "नृपमुचेवचन वृकोदरः" इति। हरिणीवृत्तम् "रसनुगहयैर्नम्रो सो गौ यथा हरिणी तथा" इति लक्षणात् ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

गुज्जरीरागेण गीयते पडिताल‌ताले। किमुवाचेत्याकाङ्क्षाया माह सञ्चरदिति। मम मनोहरिं स्मरतीति वाक्यार्थः।

अभिलाषोऽथ चिन्ता च स्मृतिश्च गुणकीर्त्तनम् ।
उद्वेगोऽथ प्रलापः स्यादुन्मादोव्याधिरेव च ॥
जडता मरणं चेति दशमं जायते ध्रुवम् ॥ इति ॥

विरहे दशमावस्था अत्र उक्ता । तदत्र गुणोत्कीर्त्तनं वाच्यम् तल्लक्षणं यथा—

सौन्दर्य्यहसितालापैर्नास्त्यन्यस्तत्समो युवा ।
इति वाणी भवेद्यत्र तदत्र गुणकीर्त्तनम् । इति ॥

रुद्रटः । अधरसुधेति । अधरस्य सुधा, अधर एव सुधेति वा विग्रहः । अधरसुधया मधुरो ध्वनिरधरसुधामधुरध्वनिः सञ्चरन गच्छंश्च माधवाधरसुधामधुरध्वनिश्चेति कर्मधारयः । तेन मुखरितो मोहनवंशो येनेति विग्रहः । चलितेत्यादिः । "दृशो दृष्टेरञ्चलं चक्षुः प्रान्तदेशः कटाक्ष इति यावत् । चलितेन दृगञ्चलेन योऽसौ चञ्चला मौलिस्तेन कपोले विलोलोऽवतंसो यस्येति विग्रहः । चलितं दृगञ्चलं यस्य चञ्चलो मौलिर्यस्य कपोले विलोलौ अवतंसौ यस्येति विग्रहः । "पुंस्युत्तंसावतंसौ च कर्णपूरे दृशे खरे ।" "वष्टिभागोरिरल्लोपमवाच्योरुपसर्गयोरित्यत्रवतंसशब्दस्याकारलोपः ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

गुज्जरीरागेण गीयते । उवाचेत्युक्तम् । तत्प्रकारमेव विशदयति । सञ्चरदित्यादिना गुज्जरीरागेण गीयत इत्युक्तम् । तस्यायमभिप्रायः । पूर्वसर्गे रागद्वयस्यैकां पत्नीमुक्त्वास्मिन् सर्गे मालवरागस्य द्वितीयां पत्नीं सूचयितुमुपक्षिप्तामेव प्रथमां पत्नीं स्मारयितुमिति । रूपकतालेन गेयम् । तल्लक्षणं तु "द्रुतद्वन्द्वं विरामान्तं रूपकः परिकीर्त्तित" इति । तत्र रासे हरिमित्यारभ्य कृतपरिहासमित्यन्तं ध्रुवपदमिदम् । साधारणत्वात्तदादौ व्याक्रियते । रास इति, हे सखि ! रासक्रीड़ायां बिहिता मद्व्यतिरिक्तगोपकामिनीष्वाचरिताः विलासाः विभ्रमाः येन तादृशं, किञ्च, रास एव कृतः मद् व्यतिरिक्तगोपकामिनीषु कृतः परिहासे नर्मवचनं येन तादृशं हरिं श्रीकृष्णमिह कुञ्ज-

चन्द्रकचारुमयूरशिखण्डकमण्डलवलयितकेशम् ।
प्रचुरपुरन्दरधनुरनुरञ्जितमेदुरमुदिरसुवेशम् ॥ २ ॥

कुटीरे मम मनः स्मरति प्रत्यक्षतः सम्भोगाभावेऽपि चिन्तनेनात्र तत्सौख्यमनुभवतीत्यर्थः। अनेन राधायाः कृष्णे परमाशक्तिः सूचिता, व्यभिचारिभावश्च सूचितः। हरिमितिस्मरतीत्यत्र "अधिगथें त्यादिना २-३-५२ न षष्ठी शेषत्वस्याविवक्षणात्। रासक्रीडाप्रकारस्तु कृष्णकर्णामृते उक्तः—

अङ्गनामङ्गनामन्तरा माधवो माधवं माधवं चान्तरेणाङ्गना।
इत्थमाकल्पिते मण्डले मध्यगः सं जगौ वेणुना देवकीनन्दनः॥

कीदृशं कृष्णं स्मरतीत्याकाङ्क्षायां विशिनष्टि। सञ्चरदिति, सञ्चरन् ध्वन्युत्पादनार्थं व्यापारवान् योऽधर स्तत्र या सुधा अमृतं तया मधुरः श्रुतिसुखावहो यो ध्वनिस्तेनमुखरितः नादितः अतएव मोहनः स्वनादेन सर्वचित्ताकर्षकः वंशो वेणुनालं यस्य तादृशम्। किञ्च चलितौ कामिनीचित्ताकर्षणार्थः व्यापारवन्तौ कृतौ, अथवा, स्वरतालानुकर्षणार्थं चलितौ वा दृगञ्चलौ अपाङ्गप्रदेशौ येन तादृशम्, अतएव कपोलयाः गण्डप्रदेशयोः विलोलौ चलमानौ अवतंसौ कर्णाभरणे यस्य सः तथा विशेषणत्रयविशिष्टं हरिं स्मरतीत्यन्वयः। अनेन कृष्णस्य कामिनीपारवश्यसम्पादनसामर्थ्यं व्यज्यते वतंसेत्यत्र "वष्टिभागोरिरल्लोपमवाच्यारुपसर्गयोः" इत्यादिनाकारलोपः। भाषान्तरे शषयोरभेदादन्त्यानुप्रासोपपत्तिः॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

ह्रस्वचन्द्रश्चन्द्रकः चन्द्रकेण क्षीणार्द्धचन्द्राकारेण कालिमाभागेन चारुर्यो मयुरशिखण्डको मयूरपिच्छः तस्य मण्डलेन वलयिता वेष्टिता केशा यस्येति विग्रहः। "वेष्टितं स्याद्वलयितमित्यमरः।" उपमानोपमेयभावं विशेषणप्रतिपादयन्नाह। प्रचुरेत्यादि।

**गोपकदम्बनितम्बवतीमुखचुम्बनलम्भितलोभम् ।**
**बन्धुजीवमधुराधरपल्लवमुल्लसितस्मितशोभम् ॥ ३ ॥**

---

प्रचुरं च तत् पुरन्दरधेनुश्चेति कर्मधारयः । तेनानुरञ्जितश्चित्रितो मेदुरः स्निग्धो मुदिरो मेघस्तादृक् शोभनो वेशो यस्येति विग्रहः । "मुदिरः कामुके मेघे" इत्युत्पलमालिनी ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

चन्द्रकेति । चन्द्रकैर्मेचकैश्चारूणि रमणीयानि यानि मयूरशिखण्डानि बर्हिबर्हाणि तेषां मण्डलं संघातः तेन वलयितः संजातवलयः वेष्टित इत्यर्थः । तथाविधाः केशा यस्य तादृशं मयूरपिच्छालंकृतमौलिकमित्यर्थः । अतएव प्रचुरमायतं यत् पुरन्दरधनुरिन्द्रचापः तेन अनुरञ्जितः अलङ्कृतः मेदुरः स्निग्धश्च मुदिरोमेघः "घनजीमूतमुदिरजलमुग्धूमयोनय" इत्यमरः । तस्य सुवेशः शोभनो वेशः इव वेशो यस्य, तथाविधम्, इन्द्रचापसवर्णमयूरबर्हालङ्कृतत्वेन तस्येन्द्रचापालङ्कृतमेघसाम्यमित्यर्थः । एतादृशं हरिमित्यन्वयः । अत्र वृत्त्यनुप्रासोपमाविशेषयोः संसृष्टिः । देशान्तरशसयोरवैलक्षणदन्त्यानुप्रासोपपत्तिः ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

गोप्यो मुखे चुम्बयित्वा कृष्णं लोभं प्रापितवत्यः इत्यत्र वस्त्वर्थ । गोपकदम्बनितम्बवती मुखे चुम्बनेन लम्भितो लोभो यस्येति विग्रहः । अत्रावैदग्ध्यं गोपीनां प्राक् सूयं चुम्बनाद्वेद्यम् । अत्रापि णितिभव्युत्पन्ने धान्यपलालन्यायेन प्रयोज्या विवक्षायां लोभे कर्मणि वाच्ये क्त प्रत्ययः । पश्चाद्योज्यस्य "गतिबुद्धि"रित्यादिना-कर्मत्वात् प्रथमद्वितीये तयोरविभक्त्युत्पन्ने, पुनः कीदृशं, बन्धुजीवं मधुराधरपल्लवं "स्वादुप्रियौ तु मधुरौ बन्धुकौ बन्धुजीवकः ।" पुनः कीदृशम्, उल्लसितस्मितशोभम् ।

विपुलपुलकभुजपल्लवबलयितवल्लवयुवतिसहस्रम् ।
करचरणोरसि मणिगणभूषणकिरणविभिन्नतमिस्रम् ॥ ४ ॥

---

ईषद्विकसितैर्गण्डैः किञ्चिद्विकसितेक्षणः ।
ईषल्लक्षद्विज सोऽयमुत्तमानां स्मितं यथा ॥ इति रुद्रटः ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

गोपेति । गोपानां गोपकानां कदम्बकं समूहस्तस्य नितम्बवत्यस्तरुण्यः गोपकामिन्य इत्यर्थः । कदम्बग्रहणं तु सकलगोपिकासंग्रहसूचनार्थम्, अथवा, कदम्ब आसामस्तीति कदम्बाः, आर्शाद्यच् तादृशाश्च नितम्बवत्यश्च राशीकृत नितम्बवत्य इत्यर्थः, अथवा गोपकदम्बके गोप कुले याः नितम्बवत्यः तासाम्, अथवा कदम्बेकदम्बवने नितम्बवतीनां मुखचुम्बने वदनास्वादने स्तम्भित आसक्तः लोभो यस्य स तथाविधं सकलगोपकामिनी मुखचुम्बनलालसमित्यर्थः । अनेन श्रीकृष्णस्य दक्षिणनायकत्वं व्यज्यते किञ्च बन्धुजीवम् "बन्धुको बन्धुजीवन" इत्यमरः । तद्वन्मधुरो मनोहरो योऽधरपल्लवः दन्तवासः किशलयः तत्र कलितः प्रस्तुतः दरस्मितशोभः मन्दहासकान्तिर्यस्य तादृशं मन्दहास-भासुराधरबन्धूकमित्यर्थः । एतादृशं हरिमित्यन्वयः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

विपुलपुलकौ च तौ भुजपल्लवौ चेति कर्मधारयः । विपुलपुलकभुजपल्लवाभ्यां बलयितं वेष्टितं वल्लव युवतिसहस्रं येनेति विग्रहः । सर्वासामेकदैवालिङ्गनात्, तासु कृष्णस्य प्रेमातिरेकः । करचरणेत्यादिः । करौ चरणौ च उरश्च इति विग्रहे द्वन्द्वश्चेत्यादिना एकवद्भावः । करचरणोरसि स्थितानि मणिगणोपलक्षितानि यानि भूषणानि तेषां किरणैर्विभिन्नं तमिस्रं येनेति विग्रहः । "तमिस्रं तिमिरं तमः" इत्यमरः ॥ ४ ॥

जलदपटलचलदिन्दुविनिन्दकचन्दनतिलकललाटम् ।
पीनपयोधरपरिसर[1]मर्दननिर्दयहृदयकवाटम्[2] ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

विपुलेति, विपुला विस्तृता निरन्तरा अविरलाः सान्द्रा इति यावत्, तादृशाः पुलका रोमोद्गमा येषु तथाविधानाम्। अनेन तृतीयः सात्विकभावः सूचितः। भुजानां पल्लवैरग्रभागैरत्रावस्थानसाम्यात्पल्लवशब्देनाग्रभागव्यवहारः। करतलपल्लवयोः साम्याद्वा, अत्र करतलस्य पल्लवत्वरूपणाद्भुजानां शाखात्वरूपणमवगन्तव्यम्। अतएवैकदेशविवर्त्तिरूपकम्। बलयितं क्रोड़ितं वेष्टितालिङ्गितमिति यावत्। तादृशवल्लवयुवतिसहस्रं गोपकामिनी षोड़शसहस्राणि येन, तादृशम्, अत्र सर्वेश्वरस्य भोगचातुर्य्यं सूचितम्, किञ्च कराश्च चरणाश्च उरश्च करचरणोरः प्राण्यङ्गत्वादेकवद्भावः, अथवा करौ चरणौ उरश्चेति, क्रमदीपिकादिग्रन्थेषु भगवतो बहुभुजवत्ताया अपि प्रतिपादनात्तथा व्याकृतमित्यवगन्तव्यम्। तस्मिन् यानि मणिगणभूषणानि नवरत्ननिर्मितालङ्करणानि तेषां किरणैर्मयूखैः विभिन्नमपाकृतं तमिस्रं रतिसारस्य पतिपादकान्धकारः स्वोपासकनिर्मोहान्धकारो वा येन तं तथाविधं हरिमित्यन्वयः॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

जलदपटले चलन् चासौ इन्दुश्चेतिकर्मधारयः। जलदपटलचलदिन्दुविनिन्दकं चन्दनविन्दुर्यत्र इदृशं ललाटं यस्येति वा विग्रहः। पीनपयोधरयोः परिसरमर्द्दनाय निर्दयहृदयकवाटं यस्येति विग्रहः। द्रुतत्वात् प्रसारितत्वाच्च हृदयस्य कवाटत्वं यस्येति विग्रहत्वे निरूपितम्। "पर्य्यन्तभूः परिसरः," "कवाटमररं तुल्ये" इत्यमरः॥ ५ ॥

---

१। छ. पीनघनस्तनमण्डल ।   २। ग. घ. कपाटम्।

**मणिमयमकरमनोहरकुण्डलमण्डितगण्डमुदारम्।**
**पीतवसनमनुगतमुनिमनुजसुरासुरवरपरिवारम् ॥ ६ ॥**

---

॥ श्रुतिरञ्जनी ॥

जलदेति। रासे, किञ्च, जलदपटलेन वारिवाहनिवहेन उपाधिना चलन् चञ्चल इवावभासमानो य इन्दुः पूर्णचन्द्रः तस्य विनिन्दकास्तिरस्कर्त्ता यश्चन्दनविन्दुः पटीर-तिलकं तल्ललाटे यस्य तादृशं चलदग्रहणं चन्द्रस्यातिप्रकाशद्योतनार्थम्। निश्चल-नीर-न्ध्रजलदे तत्प्रकाशस्याभावात्। सुरतसमये चलत्कुण्डलालङ्कृतललाटभासुरचन्द्रचन्दन-तिलकमित्यर्थः। अथ तद् विनिन्दकश्चन्दनविन्दुर्यस्मिन् तथाविधं ललाटं यस्य तादृशं नीलजलदाभललाटसमीपभासमानचन्दनतिलकमिति वार्थः। अथवा चलन्निन्दुर्यस्य तच्चलदिन्दु, जलदपटलं च तच्चलदिन्दुं च निन्दति वा चन्द्रविम्बसहित मेघनिन्दक इत्यर्थः। पीनौ पयोधरौ तयोः परिसरः "पर्य्यन्तभूःपरिसर" इत्यमरः। तस्य मर्द्दनं पीड़नं वामनीकरणमित्यर्थः। तत्र निर्द्दयं पराङ्मुखं हृदयकवाटं कवाटवद्विस्तीर्णं हृदयं यस्य तादृशम्। गाढ़ालिङ्गनतत्परमित्यर्थः। परिसरग्रहणं पयोधरयोरत्यन्त-काठिन्यसूचनार्थम्। अन्यथा तयोरेव मर्द्दने तत्काठिन्यं हीयते। तथा च सति रस-भङ्गप्रसङ्ग इतिभावः। अत्र कुचपरिसरमर्द्दन एव भगवतो निर्द्दयत्वप्रतिपादनादन्यत्र-सदयहृदयत्वमवगन्तव्यम्। गोपिकानां वहुत्वेऽपि पयोधरेत्यत्र द्विवचनेनैव विग्रहः कार्य्यः। तदुक्तं वामनेन—स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति। पीनेत्यत्र प्यायः पीति पीभावः, स्विदितो निष्ठायामिति निष्ठा, तस्य नत्वम्॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

मणिमयो मणिविकारो यो मयूरस्तेन मनोहराभ्यां कुण्डलाभ्यां मण्डितौ गण्डौ यस्येति विग्रहः। पुनः कीदृशं, अनुगतमुनिमनुजसुरासुरवरपरिवारं अनुगताः मुनि-

**विशदकदम्बतले मिलितं कलिकलुषभयं शमयन्तम् ।**
**मामपि किमपि तरङ्गदनङ्गदृशा मनसा रमयन्तम् ॥ ७ ॥**

---

मनुजसुरासुराणां वराः परिवाराः परिजनाः यस्येति विग्रहः । "परिवारः परिजने खड्गकोषे परिच्छदे" । यद्यप्येतद्वस्तुतोपकारकरवर्णनं तथा विरहिण्याः गुणोत्कीर्त्तनत्वात् अदुष्टम् ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

मणिमयेति । मणिमये रत्नविकारे मकराकृती मनोहरे चित्तानन्दकरे च ये कुण्डले अथवा मकरेण मकराकारेण मनोहरे ये कुण्डले ताभ्यां मण्डितावलङ्कृतौ गण्डौ कपोलौ यस्य तथाविधं किञ्च उदारं गम्भीरं इष्टार्थदानसामर्थ्यमितियावत् । किञ्च पीतवसनं सुवर्णवर्णाम्बरं. किञ्च अनुसृता अनुसृत्य गता ये मुनिमनुजसुरासुरवरास्त एव परिवाराः परिचारका यस्य तादृशम् अथवा तैः परिवारः परिवेष्टनं यस्य तादृशम् । इदं तु भूतगत्या भाविवृत्त्या वा हरिविशेषणम् । न तु रासक्रीडासमयो तदानीं मुनिमनुजादिसन्निधाने रसाभासोपपत्तेः । अथवा भगवतः श्रीकृष्णस्य विश्वरूपत्वात्तादृशं रूपान्तरमङ्गीकृत्य वा विरोधः समाधेयः । अनेनामुष्मिक सौख्यसम्पादनात्मकत्वमपि तस्यैवेति सूच्यते । मनुहरेत्यत्र " हरतेरनुद्यमनेऽचित्यच् (३-२) प्रत्ययः ॥ ६ ॥

सर्वाङ्गसुन्दरी

विशदश्चासौ कदम्बश्चेति विग्रहः । स्फीतत्वात् विशत्वं विशदत्वं तस्य तले "धवलो विशद शुक्लः "स्वरूपानूर्द्ध्वयोस्तलः", पुनः कीदृशं, कलिकलुषं भयं शमयन्तं एतदपि गुणोत्कीर्त्तनत्वात् अदुष्टं पुनः कीदृशं मामपि मनसा रमयन्तं, विदूरवर्त्तिनीमपि इत्यपि शब्दार्थः, एतेन सूत्रान्तरे प्रेमातिरेकः । इति ध्वनितम् । किंभूतेन मनसा इत्याह । तरङ्गदनङ्गदृशेति । तरङ्ग इवाचरति तरङ्गति सर्वप्रातिपदिकेभ्य सच्चिवा तरङ्गतमनङ्गं करोतीत्यर्थे णिच् पचाद्यन्तौ तरङ्गदनङ्गदृक् येनेति विग्रहः ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

विशदेति। किञ्च अत्र कदम्बशब्देन केलिकदम्बो ग्राह्यः न कदम्बमात्रम्। वसन्तकाले तस्य पुष्पोद्गमाभावत्। अथवा सर्वर्त्तुसमागमस्य सम्भवात्सामान्यं वा ग्राह्यम्। विशदं पुष्पोद्गमेन मनोहरं यत्कदम्बतलं कदम्बवनप्रदेशः तस्मिन् मिलितं गोपीकाभिः परिवेष्टितं कलिना कलियुगेन यत्कलुषं कलौ यत् कलुषं वा तस्माद्यद्भयं भीतार्थानां भयहेतुरित्यपादानसंज्ञायां पञ्चमी। तत्शमयन्तं स्वचरितश्रवणेन निवर्त्तयन्तं सकलकलिमलापहमित्यर्थः। उक्तं च श्रीभागवते—

एतं निशम्य भृगुनन्दनसाधुवादं वैयासकिः स भगवानथ विष्णुरातम्।
प्रत्यर्च्य विष्णुचरितं कलिकल्मषघ्नं व्याहर्त्तुमारभत भागवतप्रधानः॥

किञ्च तरङ्गति तरङ्ग इवाचरन्ती तद्वत्सा मन्यमाना या अनङ्गदृक् मन्मथोद्दीपकदृष्टिः तया, अथवा, तरङ्गन्ती अनङ्गदृक् यस्मिन् मनसि तत् तादृशं, तेन मनसाद्दृक् सहायचित्ताख्येन हेतुना दृक् सहायत्वं बहिरस्वतन्त्रं मन इति न्यायादवगन्तव्यं, किमपि किञ्चित्। मामपि दवीयसीमपि रमयन्तं सन्तोषयन्तं निकटस्थगोपिकां रमयत्येव सदृशा मनसा च, वामामपीत्यपि शब्दार्थः। अथवा परिसरे वर्त्तमानां मामपि सन्तप्यमानानङ्गोद्दीपकदृशा मनसा च रमयन्तमित्यर्थः। दूरस्थवस्तुदर्शनं श्रीकृष्णस्य च विरुद्धं विश्वतश्चक्षुरिति श्रुतेः, अथवा भगवतः श्रीकृष्णस्याचिन्त्य महिमत्वेन रासक्रीडासमय एव प्रधाननायिकां सन्निहितां मां लक्ष्मीमपि उक्तविध दृक् सहायेन मनसा द्वाभ्यां वा रमयन्तमित्यर्थः। एतादृशं हरिमित्यन्वयः तरङ्गदित्यत्र सर्वेभ्यः प्रादिपदिकेभ्यः क्विवाचर इति वचनात् क्विप्। शमयन्तमित्यत्र " जानीदृषुदृषक्नसृक् योस्यामन्थाश्चेत्यमन्तत्वेनमित्सञ्ज्ञायां शमोदर्शने इतिनियमात्। अत्र "मित्वमितांह्रस्व" इति ह्रस्वः॥ ७॥

श्रीजयदेवभणितमतिसुन्दरमोहनमधुरिपुरूपम् ।
हरिचरणस्मरणं प्रति सम्प्रति पुण्यवतामनुरूपम् ॥ ८ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

सम्प्रतीदं जयदेवभणितं पुण्यवतां हरिचरणस्मरणं प्रत्यनुरूपं, कीदृशम्, अतिशय-सुन्दरं मोहनं मधुरिपुरूपं येनेति विग्रहः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

तदिदं गीतं फलेन योजयति । श्रीजयदेवेति । श्रीजयदेवेन कविना भणितं कथितं अद्भुतं सर्वाश्चर्य्यकरम् अतएव मोहनं सर्वचित्ताकर्षकं मधुरिपोः श्रीकृष्णस्य रूपं शृङ्गारादिरूपं यस्मिन्, तत्तादृशम्, अतएव सम्प्रतीदानीं हरिचरणस्मरणं प्रति श्रीकृष्णस्य पदारविन्दस्मृतिं प्रति अनुरूपम् अनुकूलसाधनमिदं गीतं पुण्यवतां पूर्वपुण्यपरिपाक-शालिनां गातॄणां च श्रोतॄणां च श्रियः साधनं भवत्विति शेषः । अथवा विशेषण विशिष्टमिदं गीतं पुण्यवतां हरिचरणस्मरणं प्रति अनुरूपं अगुणसाधनं भवत्विति शेषः । अस्ति भवत्योः साधारणत्वात् अथवा मधुरिपुरूपमित्यत्र रूप्यते ज्ञाप्यते परोक्षत्वेन वस्त्वति रूपमपरोक्षज्ञानं यस्मात्तथाविधम् इदं गीतं, अथवा हरिचरण स्मरणं प्रति अनुरूपम्, अथवा रूपं हरिचरणस्मरणं प्रति चानुरूपमितियोजना । अत्रेदमवश्यं श्रोतव्यं गातव्यं चेति भावः । अस्मिन् गीते द्वितीयावस्था प्रतिपादिता ॥ ८ ॥

गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते
बहति च परितोषं दोषं विमुञ्चति दूरतः।
युवतिषु बलत्तृष्णे[1] कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामं करोति करोमि किम् ॥ २ ॥

॥सर्वाङ्गसुन्दरी॥

हे दूति ! मम मना वामं प्रतिकूलमनायत्तचित्तमिति यावत्। यतो युवतिषु बलतृष्णे मां विना विहारिण्यपि कृष्णे पुनरपि कामः वामं करोति, तदत्र किंविधेयं तदुपदेशेति वाक्यार्थः। किं प्रकारकं कृष्णे मनः कामं करोतीत्याह। गणयतीत्यादि। भ्रमं भ्रमादपि नेहत इति। भ्रान्त्यापि क्रोधं न चेष्ट इत्यर्थः। पुनरुत्कण्ठिता भूत्वा राधा सखीं प्राह हे सखि ! केशिमथनमुदारमित्यादि ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

अथ स्वपरित्यागिनि कृष्णे विरहमाणा स्वकीयं मन उपालभते। गणयतीति। हे सखि! मनः मदीयं चेतः कर्त्तृ श्रीकृष्णे युवतिषु मद्व्यतिरिक्तगोपकामिनीषु अत्र कामिनी कामत्याज्यता सूचनार्थं युवतिग्रहणं कथञ्चित्त्यागे सम्भवत्यपि कस्याश्चित्त्यागो भवेन्न सर्वासां त्याग स्वस्यापि त्यागप्रसङ्गात्। तदा राधाया अवकाश एव नास्तीति सूचयितुं बहुवचनमितिभावः। बलत्तृष्णे प्रवर्द्धमानानुरागे सति इदमेकमागः सूचकत्वम्। अतएव मां विना मां परित्यज्य तास्वेव युवतिषु विहारिणि क्रीडाशीले सति इदमन्यदपराधसूचकम्। अथवा बलत्तृष्णे मयि चञ्चलप्रेमणि अतएव मां विना

१। चलत्तृष्णे इतिपाठान्तरम्।

युवतिषु विहारिणि मयि एवमपराधद्वयशालिन्यपि कृष्णे गुणग्रामं गुणसमूह मेव गणयति संख्याति नत्वगुणलेशमित्यर्थः। अत्र मनसः अत्यनसूयत्वसूचनार्थं ग्रामशब्दनिवेशत्यवगन्तव्यम्। अत्रापराधकारित्वेन गुणगणनार्हे वस्तुनि वस्तुना वस्तुध्वनिः। न केवलं कृष्णे पक्षपातित्वं अपि तु तं परित्यज्यान्यत्र मनसोगमनमपि नास्तीत्याह भ्राममिति। मनः कर्त्तृ भ्रामं भ्रमणं परित्यागमिति यावत्। भ्रमशब्दात् स्वार्थेऽण् प्रत्ययः। भ्रमात् प्रमादादपि किमुत यत्नादितिभावः नेहते नाकाङ्क्षते तादृगवस्थायामपि कृष्णं परित्यज्य मम मनोऽन्यत्र भ्रमं नेच्छतीत्यर्थः। अथवा भ्रम-मनवस्थानम् अततिसततमाप्नोतीतिभ्रमात् अतसातत्यगमन इत्यस्माद्धातोः क्विप् सर्वदा चञ्चलस्वभावमित्यर्थः। मनो विशेषणमेतत्। तादृगपि मनो भ्रामं नेहत इत्यर्थः, स्वयं सर्वदा चञ्चलस्वभावं, विषयोऽपि महापराधशाली अतएव त्याग-समयश्च प्राप्तः। न त्यजतीत्यहो मनसो दार्ढ्यं भगवति पुरुषोत्तमे श्रीकृष्ण इति भावः भ्राममित्यत्र नोदात्तोपदेशस्येत्यादिना वृद्धि प्रतिषेधात् कृदन्तप्रयोगमसाधुं मत्वा भ्राममिति। केचिन् पठन्ति तदायमर्थः न केवलं कृष्णगुणगणनामात्रं करोति किन्तु तस्मिन भामं क्रोधं भ्रमादपि त्यजति भ्राम क्रोध इत्यस्मात् क्विप् घञ् वा अत्रापि ध्वनि पूर्ववदूहनीयः। न केवलं कृष्णेऽवस्थानमात्रमपि तु तस्मिन् सन्तोषमपि भजती-त्याह वदतीति, अपराधशालिन्यपि कृष्णे परितोषं सर्वदा सन्तोषमेव वहति, न कदापि वैमुख्यमित्यर्थः। न केवलं गुणगणनाकारित्वादिरूपं गुणसम्पन्नत्वम् अपितु इदानीं दोषारोपार्हे दोषारोपमपि न करोतित्याह दोषमिति दोषं दोषारोपणं दूरतः एव विमुञ्चति त्यजति महानुभावे दोषारोपणस्य महापातकीत्व स्मरणादिति भावः एतन्म-नसि निधायोक्तं दूरत इति, उक्तं च कालिदासेन कुमारसम्भवे "निवार्य्यतामालि किम प्ययं वटुरित्यादिना। अत्रापि ध्वन्यूह प्रकारः पूर्ववत् पूर्वपरिचयवासना महिम्न गुणगणनादिकं करोति नाम इदानीमेवमनुचितकार्य्यं करोतीति तन्निवर्त्तने ममोपायस्तु

॥ षष्ठः प्रबन्धः ॥

गुण्डकिरीरागेण[१] गीयते

निभृतनिकुञ्जगृहं गतया निशि रहसि निलीय वसन्तम् ।
चकितविलोकितसकलदिशा रतिरभसवशेन[२] हसन्तम् ॥
सखि हे केशिकथनमुदारं, रमय मया सह
मदनमनोरथभाविनया सविकारम् ॥ ध्रुवम् ॥ १ ॥

---

न स्फुरतीत्याह । पुनरपीति हे सखि ! वामं वक्रं अनुचितकार्य्यकरमितिं यावत्, एतादृशं मन्मनः पुनरपि आरनालीप्रक्षेपेऽपि दुग्धदधिभाण्ड यन्त्रमार्गदर्शनन्यायेन कृष्णेन परित्यक्तमपि पुनर्भूयोऽपि अत्र कृष्णस्य सुतरां कामना विषयतानर्हतार्थमपिशब्द इत्यवगन्तव्यम्। अस्मिन्नेव कृष्णे काममनुरागं करोति किं करोमि "अतश्च वक्रगतिशालिनो मम मनसः समाधानार्थं त्वया महानुपायः कल्पनीय इतिभावः। गणयतीत्यत्र नोपधावृद्धिः। अवन्तत्वे साल्लोपस्य स्थानिवत्वात्। परितोषमित्यत्र उपसर्गस्य घञ् मनुष्ये बहुलमिति। परि उपसर्ग दीर्घः। मां विनेत्यत्र पृथग् विनेत्यादिना विकल्पेन द्वितीया।

विहारिणीत्यत्र "सुप्यजाता विति" (३-२-१८) णिनिः। अथवा विहारोऽस्यास्तीति विहारी, तस्मिन विहारिणी न चात्र एकाक्षराकृतो जाते सप्तम्यां च नमस्कृताविति निषेधः तस्य पायिकत्वात्, तथा काव्यप्रकाशकारप्रयोगश्च " इदमुत्तममतिशयिनीति ।" बलदित्यत्र नात्मनेपदम्। अनुदात्ते तामात्मनेपदस्यानित्यत्वात्। तदनित्यत्वं च क्षङोङिन्करणात् ज्ञापयतीत्येतदुक्तं वामनेन बलतेरात्मनेपदमनित्यं ज्ञापकादिति विशेषोक्तिरलङ्कारः। हरिणीवृत्तम् ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

गुण्डकिरीरागेण गीयते। अस्य ध्यानस्वरूपम्—

---

१। घ. मालवगौडरागेण।
छ. मालवरागेण।

२। ग. रतिरभसरसेन।
घ-छ. रतिरभसभरेण।

रणोत्सुका कान्तपथं प्रतीक्ष्य मालापयन्ती मृदुपुष्पतल्पे ।
इतस्ततः प्रेरितदृष्टिरार्त्ता श्यामातनुर्गुण्डकिरी प्रदिष्टा ॥

हे सखि ! केशिमथनं केशवं मया सह रमयेति वाक्यार्थः। मया कीदृश्या मदन-मनोरथभावितया, मदनमनोरथेन भावितेति विग्रहः। लब्धं प्राप्तं "विन्नभावितमासादितं च भूतं च" इत्यमरः। "वाञ्छा लिप्सा मनोरथः" इत्यमरः। मदन मनोरथभावः संजातोऽस्या इति तारकादिर्वा। कृष्णं कीदृशं सविकारं "विकारो-मानसोभावः" इत्यमरः। अत्रगीते केशिमथनशब्दमुपादाय पुनरपि मधुसूदनस्योपादानं बलवत्ताप्रतिपादनार्थं बलवत्सु स्त्रिया रतिरित्युक्तेः"। निशङ्केलिता प्रतिपादनार्थं वा "निःशङ्केलिर्नपराङ्गनासु" "इत्युक्तेः निभृतेत्यादि। निभृतं च तत्कुञ्जगृहं चेति कर्मधारयः निर्जनताप्रतिपादनार्थमत्र निभृतशब्दोपादनम्। निकुञ्जस्य रम्यता प्रति-पादनार्थो गृहशब्दोपादानम्। कीदृशं केशिमथनं निशि रहसि निलीय वसन्तम्। कश्चिन्मां द्रक्ष्यतीति शङ्काज्ञया रात्रौ निर्जने संकुचितमात्मानं कृत्वा तिष्ठन्तं निलीयेति लङ् श्लेष्मणे क्वानर्थया चकितेत्यादि। चकितविलोकितसकलदिशा, चकितं यथा स्यादेवं विलोकिताः सकलदिशः ययेति विग्रहः। यदृच्छाभ्रमणादागमिष्यतां जनानां सन्दर्शनं सम्भवतीत्युपयुक्तं चलित सकलदिशः प्रतीक्षणं, कृष्णं किम्भूतं रतिरभस-वशेन हसन्तं, रतेः सम्भोगरूपो यो रभसोवेगस्तद्वशेन तदायत्ततया हसन्तम्। "मनोऽनुकूलेष्वर्थेषु सुखं सम्वेदनं रतिः" इति भरताचार्य्यः ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

गुण्डकिरीरागेण गीयते। एवं रासक्रीडासक्तं श्रीकृष्णं स्मृत्वा तज्जनितविरहवेदनां षोढुमशक्ता तमानयेत्याह। निभृतेति। गुण्डक्रियारागेण गीयते इत्युक्तम्। तस्याय-मभिप्रायः। प्रथमसर्गे मालवरागस्यैकां पत्नीमुक्त्वा अस्मिन् सर्गे प्रथमकलत्र स्मरणानन्तरं द्वितीयां वल्लभां सूचयितुं गुण्डक्रियेत्युक्तम् तत्स्वरूपं तु—

रणोत्सुका कान्तपथं प्रतीक्ष्यगाघासयन्ती मृदुपुष्पतल्पे।
इतस्ततः प्रेरितदृष्टिरार्त्ता श्यामातनुर्गुण्डकिरी प्रदिष्टा॥

एकताली तालेन गेयम्। "एकेनैव द्रुतेन स्यादेकतालीति कथ्यते" इति तल्लक्षणं पूर्वसर्गे कथितम्। तत्र सखि हे इत्यारभ्य सविकारमित्यन्तं ध्रुवपदम्। तत्साधारणत्वादादौ व्याक्रियते। सखीति। हे सखि! मदनमनोरथः कामभोगवाञ्छा तया भावितया अधिवासितया, अथवा गृहीताग्न्यादिष्विति निष्ठायाः पूर्वनिपाते भावित मनोरथयेति जातम्। तदा अनुसंहितकामभोगविलापयेत्यर्थ। एतादृश्या मया सह उदारं वाञ्छितार्थ वितरणधुरन्धरं केशिमथनं केशिनाम दानव हन्तारं श्रीकृष्णं सकलपीडापनोदनसामर्थ्यसूचनार्थमनेन कृष्णाभिधानमित्यत्रगन्तव्यम्। सविकारं विकारेण सहितं यथातथा रमय विहारय। मया सह क्रीडापरायणं कुर्वित्यर्थः। शिष्टेषु पदेषु तृतीयान्तं मयेत्यनेन योज्यम्।

द्वितीयान्तं केशिमथनमित्यनेन योजनीयम्। कीदृश्या मया कीदृशं केशिमथनमित्याकाङ्क्षायामाह। निभृतेति। निभृतं निश्चितमेकान्तयोग्यमित्यर्थः। यन्निकुञ्जगृहं लतागृहं तद्गतया प्राप्तवत्या अनेन सम्भोगयोग्यमिदं स्थानमिति सूचितम्। किञ्च चकितं, वाताहतिजनित शुष्कपर्णारवश्रवणेन तद्ध्यानवशात् कृष्ण एत्रागत इति यद्भयं तेन, अथवा कृष्णं विना एकाकितयावस्थितां मां को वा हरिष्यति वेति यद्भयं तेन, अथवा उक्तलक्षणंचकितं यथा तथा वा विलोकिताः वीक्षिताः सकलदिशो यया तादृशया मया सह कीदृशं कृष्णं निशि निशायां रहस्येकान्ते निलीय यद्भयवशात् स्त्रीकदम्बे विरहमाणस्य गोपनं कृत्वा वसन्तं तिष्ठन्तं किञ्च रतिः गोपिकाभिः कृता या कामक्रीड़ा तत्र यो रभसः गोपिकासम्बन्धिनिधुवननिर्माणवेगः हर्षो वा "रभसो वेगहर्षयोरित्यमरः" हासं कुर्वन्तम्। काममष्टगुणं भवेदिति यद् वाक्यं तस्यार्थं इदानीमपरोक्षात् ज्ञात इति गोपकामिनीहसन्तमित्यर्थः। एतादृशं मया रमयेत्यन्वयः॥ १॥

**प्रथमसमागमलज्जितया पटुचाटुशतैरनुकूलम् ।**
**मृदुमधुरस्मितभाषितया शिथिलीकृतजघनदुकूलम् ॥ २ ॥**

---

॥ सर्वाङ्गसुन्दरी ॥

प्रथमसमागमे हि कामिन्यो लज्जिताः भवन्ति । यथा—

श्लिष्टः कण्ठे किमिति न मया मूढया प्राणनाथ-
श्चुम्बत्यस्मिन् वदनविनतिः किं कृता किं न दृष्टः ।
नोक्तः कस्मादिति नवबधूचेष्टितं चिन्तयन्ती
पश्चात्तापं बहति तरुणी प्रेम्णि जाते रसज्ञा ॥

इति विश्वप्रकाशः । पुनः कीदृशं, पटुचाटुशतैरनुकूलं चाटुश्चातुरीति ख्यातः । उक्तं च—

प्रथममिहतदेतत्पूगपुष्पादिदानै-
मृदुमधुरवचोभिर्योजयेत्सन्निधाने ।
करतलमथ गात्रे भ्रामयेच्छश्वदस्याः-
सुरतमहरपूर्वं मन्दमालिङ्गनं च ॥ इति ॥

शृङ्गारतिलके मृदुमधुरेत्यादि, मृदुनि मधुराणि स्मितभाषितानि यस्या इति विग्रहः । कृष्ण चाटुना जाते शृङ्गारभावे राधायाः स्मितोद्गमः । यदुक्तं हासो भवति शृङ्गारादिति । राधाभाषणेन प्राप्तप्रणयस्य हरेर्विशेषणमाह । शिथिलीकृतजघनदुकूलमिति । शिथिलीकृतं जघनदुकूलं येनेति विग्रह ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

प्रथमेति । प्रथमसमागमेन नूतनसम्भोगेन लज्जितया लज्जाकर्मीकृतया अथवा

किशलयशयननिवेशितया चिरमुरसि ममैव शयानम् ।
कृतपरिरम्भणचुम्बनया परिरभ्य कृताधरपानम् ॥ ३ ॥

---

संजाताल्लज्जया वा प्रथमसमागमलज्जा च। हृदयसङ्गमदाढ़्यभावकृतेत्यवगन्तव्या। एतादृश्या मया पटूनि परहृदयावर्जनसमर्थानि यानि चाटूनि प्रियवचनानि तेषां शतैः अनुकूलं सङ्गतं ममानुगतमिति यावत्, अत्र चाटुशतानां कृष्णकर्त्तृकत्वमेव न राधा-कर्त्तृकत्वम्। प्रथमसमागमलज्जितयेत्येतद् विरोधात् मनोरञ्जनचतुरैरालापैः प्रथमसम्भोगकालीनां मदीयां लज्जातिरस्करिणीमपाकृत्य मया सङ्गतमित्यर्थः। न केवलं तनुसङ्गतिमात्रम् अपितु तत्कृतं कार्य्यान्तरमपि सूचयति। मृद्विति। मृदु कोमल पदघटितम् अतएव मधुरं श्रुतिसुखकरं सस्मितमन्दहाससमेतं यथा तथा भाषितुं वक्तुं शीलमस्येति भाषितस्य भावः भाषिता तया चातुरी धुरिणत्वेनेत्यर्थः।

इदं राधाविशेषणं वा अस्मिन् पक्षे भाषितमिति [ भावे निष्ठा बहुव्रीहिसमासः। णिनिपक्षे त्वतलोर्गुणवचनस्येति पुंवद्भावः। कृष्णपक्षे अनेन हेतुना शिथिलीकृतं सम्भोगार्थमपाकृतं जघनदुकूलं लज्जासंरक्षकत्वेनश्रोणीभागे दृढघटितं दुकूलं मृदु-मधुरालापैर्मच्चित्तद्रवीकरणपूर्वकमपाकृत्य मां भुक्तवन्तमित्यर्थः। एतादृशं केशि-मथनं रमयेत्यन्वयः। अनेन धृष्टनायकत्वं सूचितम्॥ २॥

॥ सर्वाङ्गसुन्दरी ॥

किशलयेति।

अश्लेषं प्रथमं कुर्य्याद्द्वितीयं चुम्बनं तथा।
तृतीयं नखदानं च दंष्ट्राघातं चतुर्थकम्॥
पञ्चमं क्षोभणं प्रोक्तं षष्ठं प्रहरणं तथा।
सप्तमं कण्ठशब्दं च बन्धनं चाष्टमं रतम्॥ इति॥

नागरसर्वस्वे प्रोक्तम् । तदत्र किशलयशयने निवेशितयेत्यनेन दुग्धजलाभिधान-मालिङ्गनं प्रकटितम् । यदुक्तम्—

अङ्के तथा प्रणयिनो मृगशावकाक्षी
गात्रे क्रमेण विशतीव नितान्तरागात् ।
गाढोपगूहनवशेन निरन्तरं यत्
संश्लेषमाहुरिह दुग्धजलाभिधानम् ॥ इति ॥

निवेशितयेति गायितयेति भावः । जघनवस्त्रशिथिलीकरणस्य किशलयशयननिवेशितस्य च कृष्णकर्तृकत्वाद्राधायाः सौभाग्यातिरेकः । पुनः कीदृशं, चिरमुरसि ममैव शयानमित्येतेन तिलतण्डूलाख्यमालिङ्गनमुक्तम् । यदुक्तं —

तल्पे रतिं तदुपगूहनकेलिमुच्चैः-
र्या निस्तरङ्गमिथुनं घटयाच्च रागात् ।
रागातिरिक्त परिवर्द्धितगौरवेण
तत्कीर्तितं मुनिजनैस्तिलतण्डुलाढ्यम् ॥ इति ॥ १

कृतपरिरम्भणेत्यादि, कृते परिरम्भणे चूम्बने ययेति विग्रहः । आलिङ्गनमत्र जघनोपगूढाख्याम् । यदुक्तम्—

आक्रम्य यत्र जघनं जघनस्थलेन
संलंघये प्रियमोयतमानताङ्गीम् ।
व्यक्तिर्भवन्नखपदास्खलितोत्तरीया
प्राज्ञैस्तदेवकथितं जघनोपगूढम् ॥ इति ॥

चूम्बनमित्युक्तं नागरसर्वस्वे ।

१ अङ्केऽथ तल्पेऽथ सुखोपविष्टां गाढं पतिः श्लिष्यति सापिकान्ताम् । अन्योऽन्यगात्रे विशतीवरागाद्वन्द्वं तदा दुग्धजलाभिधानम् ॥ इति पाठान्तरम् ॥

अलसनिमीलितलोचनया पुलकावलिललितकपोलम् ।
श्रमजलसकल[1]कलेवरया वरमदनमदादतिलोलम् ॥ ४ ॥

नेत्रे कपोलफलके वदने ललाटे
नाभिस्तलेऽधरपुटे स्तनयोश्च गुह्ये ।
कक्षोरु वक्षसि हृदि प्रवदन्ति चुम्बं
दन्तक्षतं च वदनान्तरनेत्रबर्जम् ॥ इति ॥

पुनः कीदृशं परिरभ्य कृताधरपानम् अन्योऽन्य रागातिशयाम् पृथङ्-निर्दिष्टेम् ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

किशलयेति । हे सखी ! किशलयशयनं कृष्णरतिपल्लवतल्पं तत्र निवेशितया कृष्णनैव सादरं स्थापितया अनेन राधायां कृष्णस्यात्यन्तानुरागः सूचितः । कृते कृष्णेनैवा-चरिते परिरम्भणे चुम्बने आलिङ्गनाधरस्वादने यस्यास्तथाविधया कर्त्र्यां परिरभ्यालिङ्ग्य, कृतं चरितमधरपानं यस्य तादृशम् । अत्र कृतपरिरम्भेणेति, परिरभ्य कृतेतद्वाभ्यामुभयोर-नुरागसाम्यं सूचितम । किञ्च ममैवोरसिपयोधरोपरिन्यासमित्यर्थः । चिरं बहुकालं शयनं निद्राणम् अनेन मय्येवातिप्रीतिः पूर्वपरिचयवासनापि वर्त्तते इति सूचयित्वा तादृशं केशिमथनं मया रमयेत्यन्वयः । ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

अलसेन निमीलिते लोचने ययेति विग्रहः । एतेनाङ्गिकः कामविकारः सूचितः । पुलकावलिललितकपोलम् अनेकसात्त्विककामविकारः । श्रमजलेत्यादि । श्रमजले

[1] । ग. जलसिक्त ।

घर्माम्बुनि क्लिन्नं सकलकलेवरं यस्या इति विग्रहः। गत्यादित्वात्परनिपातः। एतेनापि सात्त्विकः। निवृत्तेत्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके" इत्यमरः॥ श्रृङ्गारतिलके-ऽप्युक्तम् --

स्मरणे सङ्गमे चैव प्रियस्यालोचने तथा।
हेतुत्रयं समासाद्य सात्विकः सम्प्रवर्त्तते॥
स्तम्भःस्वेदोऽथरोमाञ्चःस्वरभङ्गोऽथवेपथुः।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विकाः स्मृताः॥

पुनः कीदृशं वरमदनमदादतिलोल, वरश्चासौ मदनमदश्चेति कर्मधारयः। "मदो-रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति विश्वः। तस्माद्धेतोरतिशयेन लोलम्। कामकृताद्गुरुहर्षादिति सतृष्णमित्यर्थः॥ ४॥

॥ श्रुतिरञ्जनी ॥

अलसेति। हे सखि! अलसेन सुखपारवश्येन भावप्रधानो निर्देशः। निमीलिते मुकुलिते लोचने ययोः तया अथवा अलसेन रतिखेदेन सुखपारवश्येन मन्दीकृतस्वव्यापारे अतएव निमीलिते लोचने यस्यास्तया सकलकलेवरया सर्वाङ्गीणस्वेदोदकया आविर्भूत-कामबलया चेत्यर्थः। चथवा कलया कान्त्या सहितं सकलमिति वा। अनेन सम्पूर्ण-सात्त्विकभावः सूचितः। कलेवरशब्दस्य ग्राम्यत्वदोषो देशभेदात् परिहर्त्तव्यः। श्रमजल-शकलेति क्वचित्पाठः। तदा श्रमजलशकलानि कणाः कणाविन्दव इति यावत् तानि यस्मिन् तादृशं कलेवरं यस्याः तया सकलेति मध्यपदलोपो वा, एवं विधया मया सह पुलकावल्या रोमोद्गमपरम्परया ललितौ रमणीयौ कपोलौ गण्डभागौ यस्य तम्। अनेनापि सम्पूर्णसात्त्विकभावः सूचितः। अतएव वरः सर्वाङ्गीणसात्त्विकभावोदय पर्यन्तं प्रबलो यो मदनमदः कन्दर्पकृतदर्पः अत्यन्त सुरतोद्योगः इति यावत् तस्मा-द्धेतोः अतिलोलम् अत्यन्तचञ्चलं सर्वाङ्गीणसात्त्विकभावोदयपर्यन्तसुरतव्यापार-शालिनमित्यर्थः। एतादृशं केशिमथनं मया सह रमयेत्यन्वयः सात्त्विकभावस्तु -

कोकिलकलरवकूजितया जितमनसिजतन्त्रविचारम् ।
श्लथकुसुमाकुलकुन्तलया नखलिखितघनस्तनभारम् ॥ ५ ॥

---

"स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू ।
अश्रु वैस्वर्य्यमित्यष्टौ सात्विकाः परिकीर्त्तिताः ॥ इति ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

कोकिलस्येव कलरवः कूजितं यस्याः सा तया, कोकिलः पिकः कलरवः पारावतः तयोरिव कूजितं यस्याः सा इति विग्रहः । एतेन कण्ठशब्दः प्रतिपादितः –

दात्यूहलावकमयूर कपोत हंस
पारावतादि रुतबद्ध्वनितं रतेषु ।
तस्मिन्नकृतेऽपि पुनरूक्तमनोजभावः
संयोजयेद्बहलचुम्बनमैथुनानि ॥ इति ॥

पुनः कीदृशं, जितमनसिजतन्त्रविचारं जितोऽभिभूतो मनसिजतन्त्रस्य इति भावः श्लथकुसुमेत्यादि । श्लथानि बन्धाद्गलितानि कुसुमानि येषां कुन्तलानापदार्थश्लथ-कुसुमा आकुलाः केशाः यस्या इति विग्रहः । आकुलकुन्तलानामन्यपदार्थता । उक्तं च— "ग्रहणमथ विदध्यात्कण्ठकेशस्तनादेरिति" रसिकसर्वस्वे । पुनः कीदृशं नखलिखित घनस्तनभारं गुरुत्वात् स्तनस्य भारत्वे निरूपणे

पादजंघोरुदेशेषु स्तने कक्षे गले श्रुतौ ।
नखमत्र प्रदातव्यं भगे नाभौ च मर्दनम् ।
इति स्मरदीपिकायाम् ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

कोकिलेति । हे सखि ! कोकिलानां पिकानां कलरवः अव्यक्तमधुरध्वनिः तत्कल्पं

**चरणरणितमणिनूपुरया परिपूरितसुरतवितानम् ।**
**मुखरविशृङ्खलमेखलया सकचग्रहचुम्बनदानम् ॥ ६ ॥**

कूजितं अव्यक्तकण्ठरुतं यस्यास्तया कलरवकूजितयेत्यत्र मध्यपदलोपी समासः । अन्यस्य. तद्विधायकस्याभावात् । तद्धि तमिति भावे-ष्ठा अनेन विशेषणेन राधायाः कामशास्त्र-प्रसिद्धरतिकूजितप्रामाण्य सूचितम् । उक्तं च रतिरहस्ये—

हुंकृतं स्तनित फुत्कृते कृतं
फुत्कृत श्वसित रोदनादिकम् ।
मुञ्च पीडय गृहाण जीवय
त्राहि हा धिगिति शीत्कृतं विदुः ॥

तच्च भावुककपोलकोकिलहंसकेलिसदृशैः रतिक्रमैः ।
मिश्रितं प्रहरणे प्रयुज्यतेऽप्यन्यथाविरुतमिष्यते बुधैः ।

उर्द्धवमुच्चलितकण्ठनासिकाहूंकृतमब्जघोषवत् तच्च विस्फुट नवफुत्कृतं कदर यातवज्जले, तदतिध्वनिकरं करातं हृत्प्रयुज्ममपहस्तकं विदुरिति । किञ्च श्लथानि सम्भोगमर्दने श्रस्तानि यानि कुसुमानि तैरकुलाः व्याप्ताः कुन्तलाश्चिकुराः यस्या तया श्लथशब्दस्य कुन्तलविशेषणत्वं वा । एतादृश्या मया सह नखैर्करजैर्लिखितोऽङ्कितः घनस्तनभारः पृथुकुचमण्डलं येन तादृशं नखक्षतालंकृतमदीयकुचमित्यर्थः ।

अनेन पूर्वोपभोगस्वारस्यं च जानातीत्युक्तं भवति । किञ्च, जितः स्वायत्तीकृतः मनसिजतन्त्रे कामशास्त्रे विचारः पद्मिन्यादिस्त्रीजातिचतुष्टयपरिज्ञानं भद्रकान्तादि पुंजातिपरिशीलनं मण्डूकबन्धादिसकलबन्धद्रावकस्तम्भनादि साधनसकलौषध-षोड़शकलादिसकल प्रतिभा यस्य तादृशम् । अनेन रसिकाग्रणीरित्युक्तम् । एतादृशं केशिमथनं मया सह रमयेत्यन्वयः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

बाह्यरतमुक्त्वा सम्प्रत्यभ्यन्तरसुरतमाह । चरणयोः रणितौ मणिनूपुरौ मणियुक्त-

मञ्जीरौ यस्या इति विग्रहः । एतेनाष्टमं बन्धाख्यं प्रतिपादितम् ।

द्वौ पादौस्कन्धसंलग्नौ क्षिप्त्वा लिङ्ग भगे लघुः ।
कामयेत् कामुकः कान्तां बन्धः काकपदो मतः ॥

इति स्मरदीपिकायाम् । कीदृशं हरिं, परिपूरितसुरतवितानं, परिपूरितकाकपदाख्य बन्धस्य सुरतस्य वितानं येनेति विग्रहः । इत्थं कृष्णश्रृङ्गारमुक्त्वा सम्प्रति विपरीतरतमाह मुखरेत्यादि । पूर्वं मुखरा पश्चाद्विश्रृङ्खला कटिभागस्यान्दोलनात् छिन्नगुणा मेखला रसना यस्या इति विग्रहः । एतेन राधायाः हंसलीलाख्यो विपरीतबन्धः । यदुक्तं -

नारी पादद्वयं दत्वा कान्तस्योरुयुगोपरि ।
कटिमान्दोलयेत्याशु बन्धोऽयं हंसलीलकः ॥ इति ॥

कीदृशं हरिं, सकच ग्रहचुम्बनदानं यस्येयि विग्रहः । विपरीते तथाविध चुम्बनस्य सुखदत्वात् ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

चरणेति । हे सखि ! चरणयोः रणिते रतिरभसेन सिञ्चाने मणिनूपुरे रत्नमञ्जीरे यस्यास्तया रत्यर्थव्यापारचरणनूपुरयेत्यर्थ । किञ्च मुखरा रतिरणसमये रणन्ती, मुखानिरत्यादत्ते स्वायत्तीकरोतीति मुखरा, निरन्तरं सर्वजनप्रेक्षणीयेत्यर्थः । अद्य व्याख्याने अतएव विश्रृङ्खला रव प्रतिबन्धनीविवन्धादिर्यस्यास्तया तादृशी द्वितीयव्याख्याने अतएव विश्रृङ्खला दर्शनप्रतिबन्धकरहिता मेखला यस्यास्तादृशया मुखरितश्रृङ्खलेति पाठे, मुखरिता रतिसमयेनादिता श्रृङ्खलवत् श्रृङ्खलया श्रोतृणां श्रवणनयनयो र्निनदरूपाभ्यां विपक्षान्तरसञ्चारप्रतिबन्धकेत्यर्थः । श्रृङ्खलशब्दोऽप्यस्ति । स्तम्बेरमा मुखरश्रृङ्खलकर्षिणस्ते"—इति कालिदासप्रयोगात् एवं बिधया परिपूरितः सङ्गीकृतः सुरतवितानः सम्भोगविस्तारः सम्भोगयागो वा यस्य तादृशम् यागपक्षे चरणरणितादीनां यागाङ्गमन्त्रोच्चारणध्वन्यादि साम्यमवगन्तव्यम् । अनेन सम्भोगयज्ञ सम्यग्-

रतिसुखसमयरसालसया दरमुकुलितनयनसरोजम् ।
निःसहनिपतिततनुलतया मधुसूदनमुदितमनोजम् ॥ ७ ॥

ज्ञानात्युक्तं भवति। अतएव सकचग्रहं कचग्रहः पुरोभागे कुन्तलग्रहणं यथातथा तत्सहितं यथातथा चुम्बनदानं मत्सम्प्रदानं मदीयकपोलादिकं कर्मकं चुम्बनदानं यस्य तादृशं, मम सम्भोगकरणकौशलमालोक्य तस्य पारितोषिकत्वेन तदानीमेव त कच ग्रहः मदीयकपोलादि चुम्बनं कृतवन्तमित्यर्थ. अनेन भगवतः श्रीकृष्णस्य तस्यां महती दया वर्त्तते इति सूचितम्। एवं विधं केशिमथनं मया सह रमयेत्यन्वयः॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

रतेः शृङ्गाररूपायाः यत्सुखं तस्य यः समयः कालस्तत्र यो रसोऽनुरागस्तेनालसया मन्यतेऽत्यर्थः। एतेन च्युतिः सान्निध्यसूचनम्। यदुक्त रसिकसर्वस्वे—

मुहुः स्वजघनाश्लेषः सीत्कारो वीतलज्जता।
हुंकारः श्वसितं नार्य्याश्च्युति. सान्निध्यसूचकम्॥

पुनः कीदृशं दरमुकुलितनयनसरोजम् अर्द्धनिमीलितनेत्रपद्ममित्यर्थः। एतेन च्युतिकालः सूचितः। "मूर्च्छा निमीलनं चाक्ष्णोश्च्युतिकालस्य लक्षणमिति", निःसहेत्यादि। निःसहोऽसहनमबलत्वमिति यावत्। " निर्निश्चयनिषेधयोरित्यमरः। निःसहे निपतिता तनुलता यस्या इति विग्रहः। तनुलतायाः कान्तवक्षसि निपातने च्युतिसमयानन्तरमवस्थाविशेषमाहुः।

अङ्गे स्वेदः श्लथत्वं च केशवस्त्राद्यसंवृतिः।
जाते रतिसुखे नार्य्या विरामे सा च दृश्यते॥ इति॥

कीदृशं मधुसूदनं, उदितसरोजं विगलितवसनायास्तनुलतायाः दर्शनादित्यभिप्रायः। अत्रार्थे सरस्वतीकण्ठाभरणम्—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा नान्येन वासो विगलितकबरीभारमंसं वहन्त्याः।
भूयस्तत्कालकान्ति द्विगुणितसुरत प्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहुलक्ष्म्याः पुनातु ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

एवं वाह्यसम्भोगश्रृङ्गारमुपवर्ण्यान्तरसम्भोगश्रृङ्गारमुपवर्णयति । रतीति । हे सखि ! रतिः सुरतं तत्र यत्र सुखं अथवा रतिस्थायिकतरुणं तस्य समयः आविर्भावकालः तत्र यो रसः विभावादिव्यङ्ग्यालौकिकसुखास्वादलक्षणः उक्तं च—" अलौकिकसुखास्वादो रस इत्यभिधीयते" इति एवंविधेन रसेन अलसया परवशया तत्कालविगलितवेद्यान्तरया इत्यर्थः । हेतुगर्भविशेषणं चैतत् अत्रैव बोद्धव्यम् । " रत्यादिस्थायिको विभावादि व्यङ्ग्यालौकिकसुखजनका निराश्रयपदार्थविशेषो रस इति केचित् । तदुक्तम्—

रामादेर्हृदिकारणोपजनितः काव्यैः प्रतीतिं गतः
संपुष्टः सहकारिभिर्जनयति स्थायी सुखं वासुखम् ।
भावेनाथ च वर्णनानुकरणैः काव्येऽपि नाट्येऽपि च
व्यक्तोऽयं तु निराश्रयः सुखकरः सभ्यैःरसश्चक्ष्यते ॥ इति ॥

रत्याधारान्तःकरणाभिव्यक्तविभायाद्यान्तरकरणवृत्तितिरस्कृतावरणकं ब्रह्मस्वरूपमेव रस इत्यभिनवगुप्तपादा उदाहरन्ति । अतएव श्रुतिप्रमाणयन्ति "रसोवै सः रसञ्ह्येवायं लब्धानन्दी भवन्तीति" । रसपारवश्यादेः निसत्त्य ( जीवन ) प्रयत्नधारण-योग्या अतएव निपतितशय्यायाऽवस्थिता परिवर्त्तनादिपरिज्ञानशून्यतयेत्यर्थः । एतादृशी तनुलता गात्रलतिका यस्यास्तया एवंविधया मया सह दरमुकुलिते सुखपारव-श्येन ईषन्निमीलिते नयनसरोजे सरोजकल्पनयने यस्यतम् । अतएवोदितः दृष्टिसम्भो-गादिनोत्पन्नः मनोजः कामो यस्य तादृशं परिपूर्णसम्भोगवाञ्छमित्यर्थः । एतादृशं मधुसूदनं मधुनामदैत्यघातुकं केशिमथनं मया सह रमयेत्यन्वयः । अत्रोभयोः समरतिः सूचिता ॥ ७ ॥

**श्रीजयदेवभणितमिदमतिशयमधुरिपुधुवनशीलम् ।**
**सुखमुत्कण्ठितगोपवधू[1] कथितं वितनोतु सलीलम् ॥ ८ ॥**

॥ सर्वाङ्गसुन्दरी ॥

अतिशयमधुरिपुनिधुवनशीलं कर्त्तुं सुखं वितनोत्विति वाक्यार्थः । उत्कण्ठा गोपबधूकथितं यन्मधुरिपुरतं तत् श्री जयदेवभणितमित्यर्थः । "शीलं स्वभावे सद्वृत्ते रतं निधुवनं च तत्" इत्यमरः ।" पुनः कीदृशं सलीलं "हेलालीलेत्यमीहावाः क्रियाशृङ्गारभावजाः" इत्यमरः । उत्कण्ठिता लक्षणं यथा—

उद्दाममन्मथमहाज्वरवेपमानां
　　रोमाञ्चकण्ठकितमङ्गतलं बहन्तीम् ।
सस्वेदवेपथुघनोत्कलिकाकुलाङ्गी-
　　मुत्कण्ठितां बदति तां भरतः कवीन्द्रः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । अतिशयमाधिक्यमस्यास्तीति अतिशयं, अर्श आद्य चत्प्रत्ययः, सातिशयमित्यर्थः । अनेन सर्वातिशायितं व्यज्यते । एतादृशं यन्मधुरिपुनिधुवनं श्रीकृष्णसुरतं तस्य शीलं स्वभाववर्णनं यस्य एतादृशम् । उत्कण्ठिता सुरतसंजातोत्कण्ठा विरहोत्कण्ठिता नायिका या राधिका तया च, कथितं सख्ये निवेदितं च, यदतिशयमधुरिपुनिधुवनशीलं तद्वा कत्त्र्, अत्र प्रतिपाद्येन प्रतिपादकलक्षणा तथा च शीलप्रतिपादकप्रबन्धकर्त्तेत्यर्थः । सुखं श्रोतृणां गातृणां च निरन्तरसौख्यं वितनोतु विस्तारयतु । इदानीमियं राधिकाष्टविधशृङ्गारनायिकासु विरहोत्कण्ठिताख्या, तल्लक्षणं तु- "चिरयत्यधिकं कान्ते विरहोत्कण्ठिता मता" इति तस्याः नायिकाया आनुकूल्यसम्पादने सहायत्वेन सख्येव ग्राह्या तदुक्तं शृङ्गारतिलके—

---

१ । ख-च. राधिकया ।

हस्तश्रस्तविलासवंशमनृजुभ्रूवल्लिमद्वल्लवी-
वृन्दोत्साहदृगन्तवीक्षितमतिस्वेदार्द्रगण्डस्थलम् ।
मामुद्वीक्ष्य विलक्षित[1]स्मितसुधामुग्धाननं कानने
गोविन्दं व्रजसुन्दरीगणवृतं पश्यामि हृष्यामि च ॥ ३ ॥

दूती दासी सखि चैव धात्रेयी प्रतिवेशिनी ।
लिङ्गिनी शिल्पिनी चेति सहाया परिकीर्त्तिताः ॥ इति ॥

एतन्मनसि निधायैवात्र गीते श्रीजयदेवेन सखीशब्देनैव सम्बोधनव्यवहारः । न दूत्यादि शब्दैरिति ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

हस्तेति । हे सखि ! गोविन्दं व्रजसुन्दरीगणवृतं पश्यामि हृष्यामि चेति योजना । ननु मूढासि त्वं, यतस्त्वां विहायान्याङ्गनया सह विहरन्तुमपि हरिं पश्यामि हृष्यामीत्येतदुद्देशमपाकर्त्तुमाह, मामुद्वीक्ष्य विलक्षितस्मितसुधामुग्धाननं, हस्तश्रस्त-विलासवंशमिति, विलक्षितेन लज्जया या स्मितसुधा ईषद्धासामृतं तया मुग्धं सुन्दर-माननं यस्येति विग्रहः । अत्यन्तस्पृहणीयस्य वस्तुनो दर्शनमुपयुक्तमेवेत्यभिप्रायः । हस्तश्रस्तविलासवंशमिति भयादवगन्तव्यम् । व्रजसुन्दरीगणवृतोऽहं राधया दृष्ट इति सापराधमात्मानं मन्यमानस्य हरेर्लज्जाभयं च उपयुक्तं भयेन हस्तात् वस्तुश्रंसनं भवत्येव । यथोक्तं कुमारसम्भवे—

"नालक्षयत्साध्वसन्नहस्तः शस्त्रशरं चापमपि स्वहस्तात् ।" त्रैलोक्यनाथो व्रज-सुन्दरी मध्ये मां दृष्ट्वा विभेतीति राधायाः हर्षोद्गमः । पुनः कीदृशं, अतिस्वेदा-र्द्रगण्डस्थलं, अत्र दर्शनं हर्षश्च द्वयमत्युपयुज्यते । तत्र ददर्श अतिसौन्दर्य्यात् । हर्ष-

१ । विलज्जितमिति पाठान्तरम् ।

स्त्वनन्तरानुरागादिति व्यञ्जकेसा त्विकभावविशेषणत्वात्, पुनः कीदृशं, अनृजुभ्रूवल्लिमद्वल्लवीवृन्दोत्साहदृगन्तवीक्षितम्। अनृजुभ्रूवल्लि मद्वल्लवीनां यद्वृन्दं तस्य उत्सारी उर्द्ध्वगमनशीलो दृगन्तः कटाक्षः तेन वीक्षितं दृष्टम् अनृजुत्वं भ्रूवल्या विस्मयाद्वेदम् कथमस्य राधामालोक्य हस्तविलासवंशश्रंसनं भवतीति विस्मयहेतुः। "गोपगोपालगोसंख्यागोधुगाभीरवल्लवा" इत्यमरः॥ ३॥

॥ श्रुतिरञ्जनी॥

केशिमथनं रमयेत्युक्तेर्निर्भीकः स्त्रीगणासक्तश्च केशिमथनः कथमाने इत्याशङ्क्य। राधेवतस्योत्तरमाह। हस्तेति। हे सखि कानने वृन्दावने बिहारदेशं दैवादागतां मामावलोक्येत्यर्थः। अनन्तरमेव हस्ताभ्यां मद्भयाद्गलितः बिलासवंशः वल्लवीगणबिलासमूलकारणवेणुनालं यस्य तादृशम्। अनेन राधासकाशात् कृष्णस्यभीतिः सूचिता, किञ्च, मामुद्वीक्ष्येति स्वेदेनाधिकश्रमजलेनार्द्रे परिप्लुते गण्डस्थले कपोलभगौ यस्य तादृशम्। अनेनापि राधासकाशात्कृष्णस्य भीतिः सूचिता। लोकेऽपि हि यथा भयादतिस्वेदोद्गमदर्शनात्। किञ्च, मामुद्वीक्ष्यैव विलक्षितं प्राप्तवैलक्षण्यं स्मितसुधासुग्धं चाननं यस्य, अनेन कृष्णस्य भयं सूचितम्, अतएवानृजुः कृष्णसम्बन्धिदर्शनजनितभयावलोकने वक्राकारा या भ्रूवल्लिः सा आसामस्तीति भ्रूवल्लीमत्यः तादृशीनां वल्लवीनां वृन्दं समूहस्तस्य या उत्साहदृशः मन्मथोद्दीपकदृष्टयः तासामन्तःनाशकल्पः संकोचो यस्मात्तादृग वीक्षितं वीक्षणं यस्य तादृशं, मद्भयेन निवारितगोपिकाविलासदृष्टिः वीक्षणशालिनमित्यर्थः। अथवा अनृजुपदं दृगन्तविशेषणम्। अत्यन्त चञ्चलैः पूर्वोक्तप्रकारेण वक्राकारैदृगन्तैरपाङ्गैर्वीक्षितमवलोकनकर्मीकृतं शेषं समम् अनेन कृष्णं प्रति तासां तत्कालिन ईषत्प्रेमभङ्गः सूचितः आद्यव्याख्याने न कर्मधारयान्मत्वर्थाय दोषः तस्यानित्यत्वात्। तदनित्यत्वम्। एकदेशानैकाधिकरण इति ज्ञापकात् सर्वधनी सर्वकेशीत्यादि भाष्यकारवचनाच्च। महाकवि

दूरालोकस्तोकस्तवकनवकाशोककलिका[1]
विकासः कासारो पवनपवनोऽपि व्यथयति।
अपि भ्राम्यद्भृङ्गीरणितरमणीया न मुकुल-
प्रसूतिश्चूतानां सखि शिखरिणीयं सुखयति ॥ ४ ॥

प्रयोगश्च " आ कैलासाद्बिशकिशलयच्छेदपाथेयवन्तः" इति । कोकप्रीतिचकोरपारण-पटुज्योतिष्मती लोचने, इति, च, एतादृशं व्रजसुन्दरीपरिवृतं गोविन्दं पश्यामि, समनन्तरपूर्वकाले दृष्टवत्यस्मि ।

अथच द्रक्ष्यामि सन्तुष्टवत्यस्मीति, अत्र वर्त्तमानसामीप्ये वर्त्तमानवदेति भूतार्थे उभयत्रापि लट् । अन्यथा लीये कुञ्जलीयावस्थितायाः राधायाः दवीयसं कृष्णप्रतीति पश्यामीत्युक्तिविरोधात् । कृष्णसमीपवर्त्तिनि कुञ्जे निलीयावस्थानाङ्गीकारे वर्त्तमानप्रयोग एवाङ्गीकार्य्यः । अत्र कृष्णस्य राधाकर्मनिरीक्षणजनितं यद्भयं तस्य दर्शनाद्राधाया हर्षोऽवगन्तव्यः । तथा च मत्सकाशात्तस्य श्रीकृष्णस्य भीते वर्त्तमानत्वात्तद्दर्शनेन वल्लवीजनस्यापि तत्कालिके प्रेमभङ्गस्य सम्भवाच्च, मया सह रन्तुं सत्वरं सत्वनिःशङ्कमाने तव्य इति । काव्यलिङ्गमलङ्कारः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

स्तोकस्तबकोऽल्पगुच्छ ईदृशो नवकाशोककलिकाशोक तस्य विलासः इति । "समे शाखालते स्कन्धशाखाशाले शिफा जटा" इत्यमरः । दुरालोकस्तोक इति दुःखनालोक्यते, अशोकोऽपि विरहेऽसुखदायी स्यादित्यभिप्रायः "कासारोपवनेपवनोऽपि व्यथ-

१ । ख. छ. लतिका ।

यतीति ॥" "आरामः स्यादुपवनम् ।" "कासारः सरसी सर" इत्यमरः । पुनातीतिपवनः पावकी परोपकारकः इति यावत् । विरहे पवनोऽप्युवेजक इत्यभिप्राय । अपीत्यादि । हे सखि ! चूतानां मुकुल प्रसूतिरपि न सुखयति, कीदृशी, शिखरणी अग्रभागयुक्ता, साग्रत्वेना प्रतिदर्शनीयत्व मध्यातिरेकत्वं चोक्तम् । अतएव भ्रामद्भृङ्गीरणितरमणीयेति रमणीयमपि विरहे अन्य अनर्थहेतुरित्यभिप्रायः । वृत्तं चास्य शिखरिणी । "रसैरुद्रैश्छिन्ना यमनसभलागः शिखरणी" ॥ ४ ॥

इति कविराजश्री नारायणदासकृतायां सर्वासुन्दर्य्यां अक्लेशकेशवो नाम द्वितीयः सर्गः ।

॥ श्रुतिरञ्जनी ॥

इतोऽवश्यं कृष्ण आनेतव्य इत्याह । दुरालोकेति । हे सखि ! स्तोकानि स्वल्पानि स्तवकानि गुच्छा यासु तादृशा नवकाः कोमलाश्च या अशोकलतिकास्तासां विकासः पुष्पोद्गमः दुरालोकः विरहिजनस्य द्रष्टुमशक्यः । अस्योद्दीपकत्वादिति भावः । दुरालोक इत्यत्र "ईषद्दुःसुष्वी" ( ३-३-१२६) त्यादिना खल् प्रत्ययः । दुरालोके इति समस्तं वा पदम् । तस्य विकाश इत्यनेनान्वयः । अस्मिन् पक्षे एतादृशो विकासः व्यथयति पीडयति मामिति शेषः । किञ्च कासारः सरः "कासारः सरसी सरः" इत्यमरः । तस्योपवनं समीपवर्त्ति यद्वनं तत्सम्बन्धी यः पवनः शीतसुगन्धिमन्दमारुतः सोऽपि व्यथयति तटस्थोद्दीपकत्वेन मलयमारुतस्यापि विरहिणा दुःसहत्वादिति भावः । उक्तं च—"मलयानिलचन्द्राद्यास्तटस्थोद्दीपकाः क्रमादिति ।" किञ्च, शिखराण्यग्राणि यस्याः तादृशी तीक्ष्णाग्रप्रदेशा इत्यर्थः । भ्राम्यन्तीनां गन्धलोभेन परिभ्रमन्तीनां भृङ्गाणां भ्रमरीणां यानि रणितानि झङ्कारास्तैः रमणीया मनोहराः अत्र भृङ्गीति स्त्रीव्यक्तिग्रहणं तद्रणितस्यादिति श्रुतिसुखकरत्व द्योतनार्थम् ।

लोकेऽपि रसिकाः स्त्रीगानश्रवणार्थमेव पुनः पुनः प्रवर्त्तमानाः दृश्यन्ते। एतादृशीयं परिदृश्यमाना चूतानां सहकारतरूणां मुकुलः प्रसूति मन्मथसायकरूपकुड्मलोद्‌गमः सोऽपि न सुखयति सुखं न करोति। तथा च वर्णितोद्दीपनप्रभावेन कृष्णं विना मया क्षणमात्रमपि स्थातुं न शक्यते। अतस्तदानयनार्थं त्वयातिक्षिप्रमेव गन्तव्यमिति भावः। भ्राम्यदित्यत्र "शमामष्टमानां दीर्घः श्यनी ति (३७-३-७४) शमादित्वात् भ्रमतेर्दीर्घः। शिखरिणीत्यत्र कविवाग्वैभव द्योतनार्थं निक्षिप्तं वृन्दोऽपि शिखरणीयमुक्तार्थप्रतिपादिका सती सुखयतीत्यर्थः। शिखरिणीलक्षणम्—"रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणीति"। अपि भ्राम्यदित्यत्रापि शब्दः पादादौ न प्रयोक्तव्यः न पादादौ खल्वादयः प्रयोक्तव्या इति निषेधात्। प्रयोगबाहुल्यात् स दोषः परिहर्त्तव्यः, यद्वा, समुच्चयार्थत्वात्तु न दोषावहः॥ ४॥

इति श्री गीतगोविन्दव्याख्याने द्वितीयः सर्गः।



# तृतीयः सर्गः

॥ मुग्धमधुसूदनः ॥

**कंसारिरपि संसारवासनाबद्धशृङ्खलाम्।**
**राधामाधाय हृदये तत्याज ब्रजसुन्दरीः॥ १ ॥**

---

॥सर्वाङ्गसुन्दरी॥

अस्मिन् समये श्रीकृष्णः किं चकारेत्याशयेनाह। हरिरिहेत्यादिना प्राप्तवैदग्ध्यं गोपीना प्रतिपादितम्। अविदग्धानां चाप्ययुक्त एव परित्याग इत्याह। कृष्णाभिप्रायः प्रकटयन् उत्तरगीतार्थं श्लोकाभ्यां गृह्णाति।

कंसारिः राधां हृदये हरिः आधाय ब्रजसुन्दरीः तत्याजेति योजना। कदाचिद्राधा अप्यन्यगोपीसदृशी स्यादिति अपाकर्त्तुमाह। संसारवासनाबद्धशृङ्खलामिति पूर्वानुभूतस्मृत्युपस्थापितविषये स्पृहा। वासना संसारे वासनैव बन्धो बन्धनं तदर्थं शृङ्खलां निगडरूपामित्यर्थः। एतेन राधायाः सौन्दर्य्यवैदग्ध्यं चोक्तम्। "शृङ्खला पुंस्कटीवस्तुबन्धेऽपि बन्धाने निगडे त्रिष्विति मेदिनीकरः।" अपरं किं चकार तदर्थमाह॥ १ ॥

॥ श्रुतिरञ्जनी ॥

अथ कृष्णस्य पूर्ववर्णितराधाविरहवेदनाप्रतिज्ञापनाय तस्यैकान्तावस्थानं सम्पादयितुं कामः प्रथमं गोपिकाकदम्बत्यागं घटयति। कंसारिरिति। कंसारिः श्रीकृष्णोऽपि यथा राधाकृष्णविरहखिन्ना तथा कृष्णोपि राधाविरहखिन्नोऽन्यत् सर्वं तत्याज, तथा राधायां प्रेमातिशयवशात्तद्विरहखिन्नः कंसारिरपीत्यपि शब्दार्थः। अथवा कंसघातकत्वेन कृष्णावतारः परमात्माऽपीत्यपि शब्दार्थः। संसारवासनाभि-

**इतस्ततस्तामनुसृत्य राधिकामनङ्गबाणव्रणखिन्नमानसः ।**
**कृतानुतापः स कलिन्दनन्दिनीतटान्तकुञ्जे विषसाद[१] माधवः ॥ २ ॥**

---

रसंसारिणो भगवतः श्रीकृष्णस्य कल्पिता अध्यारोपिता वल्लवाङ्गनाभिः सहस्रं श्रुति-सौख्यप्रतिपादिका या वासना ताभिर्बद्धा निर्मिता या शृङ्खलेव शृङ्खला तत्कल्पा विषयप्रमुखस्यापि कृष्णस्य निरन्तरं वैषयिक सुखसम्बन्धे दृढशृङ्खलायमानामित्यर्थः, अथवा संसारवासनायै बद्ध शृङ्खलायमानां कृष्णस्य संसारवासनां राधाप्रमुख-वल्लवाङ्गनामूलकत्वादितिभावः। एवंविधां राधां हृदये आधाय स्मृतेत्यर्थः। व्रज-सुन्दरी वल्लवाङ्गना तत्याज त्यक्तवान्। फलोन्मुखराधाभोगादृष्टप्रेरितः सन् गोपिका कदम्बमत्याक्षीत्। न तु स्वतो राधाभोगलोलुपः सन्नित्यर्थः। काव्यलिङ्ग-मालङ्कारः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

कलिन्दनन्दिनी यमुना तस्यास्तटान्तकुञ्जे माधवः विषसादेति योजना। कीदृक् किं कृत्येत्याहइतस्ततस्तां राधिकामनुसृत्य राधिकाकृतानुताप इति। "पश्चात्तापोऽनुतापः स्यादित्यमरः" कथमेवेत्याह। अनङ्गबाणव्रणखिन्नमानस इति। "व्रणोऽस्त्रियामीर्ममरुरित्यमरः" ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

कामिनीकदम्बत्यागानन्तरकृत्यमाह। इत इतिकृतः प्राप्त: अनुतापः निष्कारणमेव मत्प्राणसखी राधामेतावन्तं कालं किमिति त्यक्तवानस्मीति यः पश्चात्तापः स यस्य

---

१। निषसाद इति पाठान्तरम्।

तादृशः स माधवः श्रीकृष्णः अनङ्गस्य ये बाणाः अरविन्दादयः सायकाः, उक्तं च—

अरविन्दमशोकञ्च चूतञ्च नवममालिका ।
नोलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥ इति ॥

तैर्व्रणाः क्षतानि " तृतीया तत्कृतेत्यादि" (२-१-३०) समासः । तैः खिन्नं दुखितं मानसं मनो यस्य स तादृशः सन्, उक्तं च—

अप्रत्यक्षं लक्ष्यं चेतश्चापोऽपि पुष्पनिष्पन्नः ।
मौर्वी मकरन्दवशा शिव शिव कुसुमशर समरसन्नाह ॥

इति विरहा तुरस्य मन्मथशरपीडायाः युक्तत्वादितिभावः अतएव तद्वेदना निवृत्तये इतस्ततस्तां राधिकां "प्रत्ययस्तात्का" ( ७-३-४४) दित्यादिनाऽत्र इत्वम् । अनुसृत्यान्वितस्या मार्गणं कृत्वेत्यर्थः । कलिन्दनन्दन्याः यमुनायाः तटान्तकुञ्जे तीरसमीपलतागृहे विषसाद दुःखितवान् । यमुनातटे सर्वत्र राधिकां परिमृश्य कुत्रापि तामदृष्ट्वा श्रान्तः सन् कुत्रचिद् वानीरकुञ्जे व्याकुलितमना अवतस्थे इत्यर्थः । नन्दनीत्यत्र कृत्यल्युट्यो बहुलमिति बहुलग्रहणसामर्थ्यान्नन्द्यादि ल्यु प्रत्ययमपोह्य ल्युटिटित्वा ङीप् प्रयोगश्च । अम्बरमनम्बरणमासीत्कलिन्दनन्दन्या इति । अत्रापि केचिच्छाब्दिकंमन्याः कलिन्दनन्दनेति पाठं कल्पयन्ति । तदति साहसम् । उक्तविधयागतेः सम्भवात् । अनङ्गबाणव्रणखिन्नमानसामिति केषुचित्पाठः । तदा राधिकाविशेषणम् । काव्यलिङ्गम् ॥ २ ॥

॥ सप्तमः प्रबन्धः ॥

गुर्जरीराग गीयते

मामियं चलिता विलोक्य वृतं वधूनिचयेन ।
सापराधतया मयापि न वारितातिभयेन[1]।
हरि हरि हतादरतया गता सा कुपितेव ॥ ध्रुवम् ॥१ ॥

॥सर्वाङ्गसुन्दरी॥

गुर्जरी रागेण गीयते । हरि हरि इति खेदे पुत्रकलत्रादिवियोगदुःखा तैर्ज्ञानिभिः "संसारतारको हरिः मुहुः स्मर्यते" तद्दर्शना ज्ञानिनामपि जागर्य्येष व्यवहारः, तद्दर्शनादयमपि भगवानान्मानुषत्वमापन्नः कदाचिदात्मानमजानन् तथाऽकरोदित्यभिप्रायः। सा राधा हतादरतया गता कुपितेव। गीतेनानेन हरेर्विलापावस्था वाच्या। तल्लक्षणं –

सम्भ्रमाति मनो यत्र रतौत्सुक्यादितस्ततः ।
वाचः प्रियाश्रया एव स विलापः स्मृतो यथा ।। इति ॥

इयं राधा वधूनिचये वृतं मां विलोक्य चलिता मयाप्यसावति भये नैव न वारितेति त्रि स्वगति एष विलापः। यदेवं कथमेनानुनयसीत्याह ॥ १ ॥

॥श्रुतिरञ्जनी॥

तटान्तकुञ्जे विषसाद माधव इत्युक्तं तत्प्रकारमेवाभिनीय दर्शयति मामियमित्यादिना। गुर्जरीरागेण गीयते इत्युक्तम्। तस्यायमभिप्रायः गुण्डक्रियोपस्थानानन्तरं तत्सपत्न्या एवोपस्थानं युक्तमिति अथवा, कवेः प्रियत्वाद्वा पुनरवस्थानमिति। रूपकतालेन गेयम्। तल्लक्षणं तु—

"द्रुतद्वन्द्वं विरामान्ते रूपकः परिकीर्त्तित"

१। ग. निवारितातिभयेन।

इति। तत्र तत्र हरि हरीत्यारभ्य कुपितेवेत्यन्तं ध्रुवपदम्। इयं वधूनिचयेन वृतमावृतं मां विलोक्य चलिता चलमानास्मत्समीपं परित्यज्यान्यत्र निर्गता इति मयापि राधायामतिप्रेमशालिनापीत्यपरोऽर्थः।

अथवा समो पतिना वधूनिचयेन न वारितैव दक्षिणेन मया तु नितरामित्यपि शब्दार्थः। अपराधेन सह वर्त्तत इति सापराधस्तस्य भावस्तद्वा तया, प्राणसमां राधां परित्यज्यान्यासम्भोगरूपो योऽपराधः तत्सहचरभावेनेत्यर्थः। अतएवातिभयेन अपराधनिष्पन्नं यद्भयं तेन हेतुना न निवारिता, किमिति गच्छसीति न निरुद्धा अपराधिनैव साक्षादपराद्धचित्तसन्तोषकरणस्य प्रायशो लोकविरुद्धत्वादितिभावः। अतएव हृतः प्रतिहतः अपगत इति यावत्। तादृश आदर आश्वासो यस्याः सा तादृशी तस्याभावस्तत्ता तया "त्वतलोर्गुणवचनस्येति" पुंवद्भावः। मत्कृतादररहितयेत्यर्थः।

अतएव कुपितेव कोपनशीलसम्पन्नेव वस्तुगत्या मयि कोपस्याभावादितिभावः। अतएवोत्प्रेक्षणम्। गता अनुचितकारिणं मामनादृत्य एतादृशस्य मम पुरतोऽवस्थानम् अनुचितमित्यन्यत्र निर्गतेत्यर्थः। निर्गमजनितखेदमभिनयन्तीत्यर्थः। हरिहरीति द्विरुक्तोऽयं शब्दः प्रक्रान्तखेदद्योतकः, अयं प्रयोगो लोकानुसारीति केचित्। स्नानकाले हरो हरिरितिवत्। इङ्गालशब्दवद्देशभाषानुसारी प्रयोग इत्यपरे। अव्ययगतपठित इत्येन्ये, व्याकरणान्तरसिद्धि इति केषांचित् संप्रदायः, वयं तु "ओर्गुण" (६-४-१४६) इतिज्ञापकात्संज्ञापूर्वक विधेरनित्यत्वाद्ध्रस्वस्य गुण इति नात्र गुणः किन्तु "एङ्ह्रस्वादिति" (६-१-६९) सुलोप इति ब्रूमः। सर्वत्र पक्षे प्रकृते खेदद्योतकोऽयं न विष्णुवाचकः॥ १॥

**किं करिष्यति किं वदिष्यति सा चिरं विरहेण।**
**किं धनेन किं जनेन किं मम जीवितेन गृहेण[1]॥ २ ॥**

॥सर्वाङ्गसुन्दरी।

सर्वमेतत्प्रियाविरहितस्याकिञ्चित्करमित्यभिप्रायः॥ २ ॥

॥ श्रुतिरञ्जनी ॥

प्रकारान्तरेणापि खिद्यति किं करिष्यतीत्यादि। सा राधा चिरं विरहेण मद्वियोगेन हेतुना किं किं कार्य्यं करिष्यति विरहवेदनामसहमाना विषादिना प्राणत्यागादि कार्य्यं करिष्यति किमित्यर्थः। किं किं वचनं वदिष्यति प्राणसमं मां परित्यज्य विदीर्णहृदया कथं वर्त्तते इति मां शप्स्यते किमित्यर्थः। अत्र मम धनेन किं कार्य्यं राधां विना मम केयूरादि भूषणरूपेण कस्तूरिकादिपरिमलद्रव्यरूपेण क्षौमादिदिव्य-वस्त्ररूपेण ताम्बूलादि भोगसाधनरूपेण धनेन किमपित्यर्थः। मम सुखेन किम्।

राधां परित्यज्य विपञ्चिस्वरश्रवणादि साधनजनितसुखेन मम किं प्रयोजनमित्यर्थः। अथवा, सुखेनालौकिक सुखसाधनेन गृहेणेति वा योजना, अनुकूलकामिनी समागम-हीनस्य मण्डनादिभोगस्य व्यर्थत्वात् इति भावः। उक्तं च, किं मण्डनैः किं रमणी-यवस्त्रैः किं माल्यताम्बूलसुगन्टलेपैः। "विना प्रिया मात्ममनोऽनुकूलां पुं भोगसाराहि मृगायताक्षी" इति। अत्र भावसन्धिरनुसन्धेयः॥ २ ॥

---

१। ग. किं मम सुखेन गृहेण।

चिन्तयामि तदाननं कुटिलभ्रु कोपभरेण ।
शोणपद्ममिवोपरि भ्रमताकुलं भ्रमरेण ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

कोपभरेण कुटिलभ्रु तदाननं चिन्तयामि । राधाया अभावे नान्यत्किंचित् सुखावहमित्यभिप्रायः । वाक्यार्थोपमामाह । उपरि भ्रमता भ्रमरेण आकुलं शोणपद्ममिवेति । "शोणः कोकनदच्छविरित्यमरः ।" ह्रस्वो नपुंसके प्रातिपदिकस्येति भ्रूशब्दस्य ह्रस्वः ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

चिन्तयामीति । कोपभरेण कोपाधिक्येन "अन्यथातिशयो भरः" इत्यमरः । अथवा कोपधारणेन वा कुटिले वक्रे भ्रुवौ यस्मिन् तादृशं मदुपेक्षा जनितकोपकुटिलीकृत्य भ्रूसमेतं तस्या राधाया आननं मुखम् उपरि ऊर्द्ध्वभागे भ्रमता सञ्चरता भ्रमरेणाकुलं व्याप्तं शोणपद्ममरुणपद्ममिव चिन्तयामि ध्यायामि । अथवा शोणपद्ममिव स्थितं तदाननमिति वा अत्र कुटिलभ्रुवो भ्रमरसाम्यम् । कोपभरेणेत्येतन्मुखस्य रक्तिमसम्पादनार्थं गृहीतम् । लोके कुपितं मुखं रक्तवर्णं दृश्यते । अत्र शोणपद्ममिवेत्युपमा । उपरि भ्रमणं भ्रमरयोः साधारणम् । शोणपद्ममिवेत्येकं पदम् । अत्र भावोदयः प्रत्येतव्यः ॥ ३ ॥

तामहं हृदि सङ्गतामनिशं भृशं रमयामि ।
किं वनेऽनुसरामि तामिह किं वृथा बिलपामि ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

तां हृदि सङ्गतामहमनिशं रमयामीति प्रागेव विचिन्त्य पुनर्ज्ञानं लब्ध्वा प्राह । किं वनेऽनुसरामि तां किंवा वृथा विलपामीति । "करविनिहितरत्नं मृग्यते नीरमध्ये" इत्यभिप्रायः ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

विरहातुरः सन् भ्रान्तवदाह । तामिति । हृदि हृदये सङ्गतां स्थिताम्, अथवा सङ्गतां पूर्वं मया सन्त्यक्तां तामिदानीं मया त्यक्तां राधिकाम् अनिशं सदाभृशमत्यर्थं हृदि हृदये रमयामि । अनुभवामि । ततः इह वने लताकुञ्जे तां राधां किं किमर्थम् अनुसरामि अन्वेषयामि तस्याः मार्गणं किमिति करोमित्यर्थः । ग्रीवास्थग्रैवेयकान्वेषणवत् सङ्गतमार्गणस्य लोकविरुद्धत्वादिति भावः । इह वने वृथा निष्प्रयोजनं किं किमर्थं बिलपामि । तस्य बाह्यनिमित्तं परिवेदनं किमिति करोमीत्यर्थः । लोके हि आन्तराशक्तिपूर्विकाया एव बाह्याशक्तेः श्लाघनीयत्वात्तादृशीमान्तराशक्तिमनादृत्य बाह्यरत्यर्थं मया कृतं भावः अन्तरासक्तेः श्लाघनीयत्वं मालतीमाधवे—

व्यतिषजति पदार्थानान्तरः कोऽपि भावो
न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति हि हिमरश्मावुद्गते चन्द्रकान्तः ॥

अत्राप्युक्तं—

अहमिहैव वसन्नपि तावक-
स्त्वमपि तत्र वसन्नपि मामकः ।

तन्वि ! खिन्नमसूयया हृदयं तवाकलयामि।
तन्न वेद्मि कुतो गतासि न तेन तेऽनुनयामि ॥५ ॥

---

न तनु सङ्गम एव सुसङ्गमो
हृदयसङ्गम एव सुसङ्गमः ॥ इति ॥ अत्र द्वितीयावस्थावगन्तव्या। रमयामीत्यत्र चौरादिकोणिजवगन्तव्यः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

असूयया हे तन्वि ! तव हृदयं सूयाय खिन्नमाकलयामि वेद्मि। यद्येवं कथं मे नानुनयसीत्याह। तन्न वेद्मि इत्यादि। त्वं कुतो गतासि तन्न वेद्मि तेन कारणेन ते तव नानुनयामीत्यर्थः। कुत इति तव द्वितीयान्तात् तसिः। किं देशं प्रसीसीत्यर्थः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

विरहातुरः सन्नेव प्रकारान्तरेणापि प्रलपति। तन्विति। हे तन्वि ! हे राधे ! मोहवशादसन्निहिताया अपि सन्निहितसम्बोधनम्। कुतः कस्मात्कारणाद्गतासि। तत्कारणमहं न वेद्मि न जाने। अतस्तव केवलमसूयया ईर्ष्यया खिन्नं दुःखितं 'न तु मत्कृतापराधेन खिन्नमिति आकलयामि निश्चिनोमि। तेनासूयया कलुषितकारणेन त्वां नानुयामि प्रियं न करोमीत्यर्थः। "असूयाविष्टचेतनाः प्रियवचनासाध्यत्वादिति भावः।" ते इत्यत्राद्यख्याने कर्मण्यपीति वचनात् भजे शम्भोश्चरणयोरितिवत् कर्मणि षष्ठी। द्वितीय व्याख्याने तु क्रियामात्रयोगे चतुर्थी व्याख्यान्तरं वा हे तन्वि तवहृदयमसूयया ईर्ष्यया कामिनीकदम्बभोगलोलुपमत्तिरस्कारजनितेर्ष्या खिन्नमाकलयामि, जाने, तर्हि तां परिमृग्य तस्या असूयाजनित खेदस्योपकरणं किमिति न किम्भूत इत्याकाङ्क्षायामाह। असीति, हे तन्वि ! असीत्वमर्थेऽव्ययं असत्वं कुतः कुत्रगता

दृश्यसे पुरतो गतागतमेव मे विदधासि ।
किं पुरेव ससंभ्रम[1] परिरम्भणं न ददासि ॥ ६ ॥

---

मां परित्यज्य कस्मिन् स्थले स्थिता तत्स्थलमहं न वेद्मि, न जाने, तेन स्थलापरिज्ञानरूपकारणेन त्वां नानुनयामि । अनुसृत्य नानुगतोऽस्मि । अज्ञातस्थलस्थितानुसरणस्याशक्यत्वादिति भावः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे प्रिये ! मम पुरतस्त्वं गतागतं विदधासीति दृश्यसे तत्किं पुनरेव ससम्भ्रममालिङ्गनं न ददासि, पुरो गतायाः प्रियायाः नैष्ठुर्यमेतादृश न युक्तमित्यभिप्रायः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

अथ निरन्तभावनाजनित राधा सा आकारः प्रलपति । दृश्यसे इति । हे तन्वि ! पुरतः समाग्रभागे दृश्यसे । साक्षाद्वीक्ष्यसे । पुनः किमर्थं गतैव । मदग्रभागावस्थानं विहायान्यत्र निर्गतासि । अथवा गतं पुनरागमनमेव किं किमर्थं विदधासि करोषि । पुरेव प्रागिव विप्रयोगावस्थातः पूर्वमिवेत्यर्थः । ससम्भ्रमं ससन्तोषं यथातथा परिरम्भणं किं किमर्थं न ददासि प्रयच्छसि । अग्रतो दृश्यसे । प्रयोजनवशादन्यत्रापि गच्छसि । अनन्तरमागच्छसि । अथवा पुरतो दृश्यसे । प्रयोजनवशादन्यत्रापि गच्छसि, अथ गाढालिङ्गनादिकं प्रयच्छसि, इदानीं तु तद्विपरीतं किमिति विदधासीत्यर्थः ॥ ६ ॥

---

१ । ग. सभ्रमं ।

**क्षम्यतामपरं कदापि तवेदृशं न करोमि।**
**देहि सुन्दरि ! रमणं मम मन्मथेन दुनोमि ॥ ७ ॥**

---

॥ सर्वाङ्गसुन्दरी ॥

हे सुन्दरि ! क्षम्यतामयमपराधः। इत्येको वाक्यार्थः। तवेदृशमपरं न करोमीति द्वितियः। "विभाषाया कदा कर्ह्योः" इति भविष्यदर्थे लट् प्रत्ययः। देहि सुन्दरि ! दर्शनं मयीत्यत्र कारणमाह। मन्मथेन दुनोमीति "भवन्ति वरवर्णिन्यो दुःखिनां वेदनाच्छिदः"। इत्यभिप्रायः ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

मदनव्यथातुरः सन् तां प्रार्थयते। क्षम्यतामिति। हे राधे ! क्षम्यतां मत्कृतापराधः सह्यतामित्यर्थः। अमर्यादस्य पुरुषस्यापराधः किमिति क्षन्तव्य इत्याकाङ्क्षायामाह। ईदृशमिति, हे तन्वि ! ईदृशं भवदुपेक्षारूपं अपरं कृतापराधादन्यमपराधं तव कदापि न करोमि। अनेन कृष्णस्योन्मर्य्यादत्वं निरस्तमित्यमवगन्तव्यम्। अपराध-सहनफलं किमित्याकांक्षायामाह। देहीति। हे सुन्दरि ! अनवद्यसर्वाङ्गं प्रार्थ्यमान-दर्शनानुकूलं हेतुगर्भमिदं सम्बोधनम्। मम दर्शनं त्वदीयदिव्यरूप-साक्षादीक्षणं देहि प्रयच्छ, तद्दर्शनेन किं साध्यमित्यत आह। मन्मथेनेति। मन्मथेनान्वर्थसंज्ञेन कामदेवेन मयि दुनोमि परितापं प्राप्नोमि। इति स्वस्मिन्नेव साक्षात्परितापमनुभवामि न तु परितापेन तापमनुभवामीत्यर्थः। अनेन महती व्यथा सूचिता। तथा च मदन-स्तुतसर्वाङ्गीणमदीयशरीरतापं निरवद्य भवदीयमदर्शनेन निवारयेत्यर्थः ॥ ७ ॥

वर्णितं जयदेवकेन हरेरिदं प्रवणेन[1]।
किन्दुविल्व[2] समुद्रसम्भवरोहिणीरमणेन॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

हरेः प्रवणेन आयत्तेन जयदेवकेनेदं गीतरूपं वर्णितम्। "प्रवणः क्रमनिम्नोर्व्यामायत्ते च चतुष्पथः" इत्यमरः। किन्दुविल्वेत्यादि। किन्दुविल्वाख्यं शासनं तच्च महत्वात् समुद्रत्वेन रूपितम्। किन्दुविल्वसमुद्रसम्भवश्चासौ रोहिणीरमणश्चेति कर्मधारयः। अन्यकुलोद्भूतस्याप्यन्यकुलोन्नतिकारकत्वदर्शनात् सम्भवशब्दोपादानम्। तत्कुलोत्पत्तिकताख्यापनार्थं दृष्टान्तोऽत्र युधिष्ठिरः, तदेवं किन्दुविल्वशासनाज्जातस्तस्यैवोन्नतिकारको यथा सागराज्जातश्चन्द्रः सागरवृद्धिकारक इत्यर्थः संपद्यते॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

वर्णितमिति। हरेः श्रीकृष्णस्य प्रवणेन तत्परेण तद्भक्तेनेत्यर्थः। तिन्दुविल्वो नाम जयदेवस्य जन्मवंश इति केचित्। जन्मग्राम इत्यपरे। समुद्र इव तद्वत् विपुल इत्यर्थः। तस्मात् सम्भवन्तीति सम्भवाः वंशाख्यसमुद्रसमुत्पन्ना इत्यर्थः। तेषां रोहिणरमणश्चन्द्रः तेषां चन्द्रवदाल्हादकारीत्यर्थः। अनेन वंशोन्नतिमूलकारणं भवतीत्युक्तम्। तेन अथवा सम्भवत्यस्मादिति सम्भवो जन्मकारणं तिन्दुविल्वसमुद्र एव जन्मकारणं तस्य रोहिणीरमणः यथा चन्द्रः स्वजनकसमुद्रोल्लासकरस्तद्वदयमपि वंशोल्लासकर इत्यर्थः

१ ।ग. प्रणवेन । ख. तिन्दुविल्व।
२ ।तिन्दुविल्व केन्दुविल्वइति पाठौ। ग. छ. केन्दुविल्व।

हृदिबिसलता हारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि ॥ ३ ॥

एतादृशेन जयदेवकेन स्वार्थे कः, निरहंकारित्वद्योतनार्थमल्पार्थे वा क प्रत्ययः। वर्णितं हरिविरहाकारेण प्रथितमिदं गीतं श्रोतॄणां गातॄणां च ऐहिकामुष्मिकसुखं करोतीत्याशयः। अथवा उक्तविशेषणविशिष्टेन जयदेवेनेदं गीतं वर्णितं हरिप्रीत्यर्थं रचितमित्यर्थः॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे अनङ्ग! हरभ्रान्त्या प्रियारहिते मयि न प्रहरेति वाक्यार्थः। पुरा महादेवेन कामो दग्ध इति वैरबोधार्थमनङ्गेति सम्बोधनम्। हरभ्रान्ति प्रतिपादयन्नाह हृदि बिसलतेत्यादि। दैर्घ्यात् धीवल्याच्च मृणाललतायां वासुकिभ्रमः। कुवलयदलश्रेणीकण्ठेन सा गरलद्युतिरिति कृष्णवर्णत्वात् कण्ठदेशावस्थितत्वाच्च नीलपद्मे विषभ्रमः। मलयजरजो नेदं भस्मेति धावल्यात्, रजोरूपत्वाच्चन्दने भस्मः भ्रमः। विरहसन्तप्ते हृदये दत्तमात्रं चन्दनं शुष्यतीति रजशब्दोपादानं तत्त्वाख्यानोपमेयम्। यदुक्तम्—"न पद्ममुखमेवेदं न भृङ्गौ चक्षुषी इमे" इति विस्पष्टं सादृश्यात्तत्त्वेनोपमा यथेति मृधा किमु धावसि निवर्त्तस्वेत्यभिप्रायः। "व्यर्थके तु वृथा मृधेत्यमरः" ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

अथ विरहतापो निवर्त्ततामिति विपर्य्ययबुद्ध्या धृतमुद्दीपकं कामिनीकदम्बभोगार्थं धृतशिवं विसहारादिकं वा हरपरिकर इत्यवबुध्य भ्रान्त्या प्रहर्त्तुमुद्युक्तं कामदेवं तत्परिकरापदेशेन हरिर्निवर्त्तयति। हृदिति। हे अनङ्ग! कामदेव! अत्रानङ्गपदेन

प्राणौ मा कुरु चूतसायकममुं मा चापमारोपय
क्रीड़ानिर्जितविश्वमूर्च्छितजनाघातेन किं पौरुषम् ।
तस्या एव मृगीदृशो मनसिजप्रेङ्खत्कटाक्षाशुग-
श्रेणीजर्जरितं मनागपि मनो नाद्यापि संधुक्षते ॥ ४॥

सम्बोधनं हरविषय प्रहरणस्यावश्यम्भाविता सूचनार्थम्। तेनैवास्याङ्गहन्यापादनात् अतएव प्रहरणनिवृत्तप्रार्थनार्थमनङ्गतोपपद्यते।

यस्माद्धृदि वक्षस्थले अयं परिदृश्यमानः पदार्थः भुजङ्गमनायकः हरहारविशेषरूपो न भवति। किन्तु भवत्परिकरः विसलताहारः विरहतापनिवृत्त्यर्थं धृतमृणालखण्ड-मालिका यस्मात् कण्ठे या परिदृश्यते सा गरलद्युतिः कालकूटकालिमा न भवति। किन्तु भवत्परिकरकुवलयदलश्रेणी विरहतापनिवृत्त्यर्थं धृता नीलोत्पलपत्रमालिका, यतश्चेदं सर्वाङ्गीण-तया परिदृश्यमानं वस्तु भस्मभसितं न भवति।

किन्तु भवत्परिकरो मलयजरजः तापापनोदाय कृतश्चन्दनाङ्गरागः, तस्मात्कारणात् हरभ्रान्त्या हर इति विपरीतबुद्ध्या हेतुना प्रियारहिते वल्लभवियोग दुःखिते असहाय इत्यर्थः। एवंविधे मयि विषये न प्रहर प्रहारं न कुरु। असहायस्य दुःखितस्य च प्रहारे शूरं मस्यस्यातिलाघवाधायकत्वादितिभावः। अतश्च क्रुधा हरभ्रान्त्या संजातकोपो-पलक्षितः सन किमु किमर्थं धावसि, मां ग्रहीतुं शीघ्रमायासीत्यर्थः। सर्त्तेर्धावादेशः। अथ विषलताहारादीनां मन्मथपरिकरत्वं विरहि विजयसाधनत्वादवगन्तव्यम्। भुजङ्गत्वादि निषेधेन विषलताहारत्वादारोपणादपह्नुत्यलङ्कारः। "निषिध्य विषयं साम्यदन्यारोपो ह्यपह्नुतिरिति लक्षणात्।" काव्यलिङ्गं भ्रान्तिमांश्च ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

न केवलमङ्गदाहनात् शिवो मम वैरीभावानष्युज्झितशासनत्वात् ततस्त्वय्यपि

प्रहरिष्यामीति कामस्य प्रतिवचनमाशङ्क्याह। पाणाविति तत्र कन्दर्पः प्राह।

हे मनसिज पाणौ चूतसायकममुं मा कुर्वीत्येको वाक्यार्थः। यदि पाणौ कृतवानसि तदा पाणावेवास्तां, मा चापमारोपयेति द्वितीयः। चापनिहितत्वाद्बाणः प्राणान् हरतीत्यभिप्रायः। कथमेदं विधेयमित्याह। हे क्रीडानिर्जितविश्व! मूर्च्छित जनाघातेन किं पौरुषमिति। क्रीडया निर्जितं विश्वं येन इति कामोऽन्यपदार्थः कथं भवान् मूर्च्छित इत्याह। तस्या एवेत्यादि। तस्याः सर्वोत्कृष्टत्वेन प्रसिद्धायाः मृग्याः दृशाविव दृशौ यस्याः कुरङ्गनयनायाः प्रेङ्खन्त्या उद्गच्छन्त्याः कटाक्षवाणश्रेण्याः जर्जरितं मम मनो मनागल्पमपि न संधुक्षते दीप्ता जीवतीत्यर्थः। सन्धुक्षत इति। धुक्ष सन्दीपने ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

इतोऽपि मद्विषये भवादृशस्य ग्रहणधारणं प्रहारश्च न युक्त इत्याह। पाणाविति। क्रीड़या लीलया अनायासेनेत्यर्थः। निर्जितं विश्वं येन तादृश, उक्तं च जगज्जेतृत्वं रति रहस्ये—

परिजल्पते भृङ्गश्रेणी पिकाः पटुवन्दिनो
　　हिमकरसितछत्रं मत्तद्विपो मलयानिलः।
कृशतनुधनुर्वल्ली लीलाकटाक्षशरावलि-
　　मनसिज महावीरस्योच्चैः जयस्त्रिजगद्गतः॥ इति

इदं तु हेतुगर्भविशेषणम्। एतादृशं हे मनसिज! कामदेव! अत्रानेन पदेन मन्मथसम्बोधनं जनककलत्रस्य मनसप्रहरणमनुक्तमितिद्योतनार्थम्। मद्विषये चूतसायकं सहकारकोरकरूपं शरं पाणौ मा कुरु सायकं हस्तेन तूणानगृहाणेत्यर्थः। प्रयोगस्तु चूतसायकत्वं च तस्य—

अरविन्दमशोकञ्च चूतं च नवमालिका।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः॥

इति वचनादवगन्तव्यम्। चापं शरासनमारोपय नाधिज्यं कुर्वित्यर्थः। यदि

भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां
श्यामात्मा कुटिलः करोतु कवरीभारोऽपि मारोद्यमम् ।
मोहं तावदयं च तन्वि तनुतां विम्बाधरो रागवान्
सद्वृत्तः स्तनमण्डलस्तव कथं प्राणैर्मम क्रीडति ॥ ५ ॥

कुत्सितदर्पत्वेन चापारोपणं शरप्रयोगं च करोषि, तथापि तस्य कृत्यं नास्तीत्याह मूर्च्छितेति । मूर्छितजनस्य निश्चेष्टितजनस्य घातेन प्रहरणे न किं कियत् पौरुषं पुरुषकार स्यादित्यर्थः क्रीडानिर्जितविश्वभवादृशस्य महावीरस्य मूर्च्छितजनाघातो न केवलं पौरुषान्यधायकः अपि त्वयशस्करोऽपीतिभावः । प्रकृतलक्षणस्य मूर्च्छितत्वं कथमित्याशङ्क्य उपपादयति तस्या इति मृग्या मृगाङ्गनाया दृशाविव विशालौ दृशौ यस्यास्तद्विधायाः तस्या एव राधायाः प्रेङ्खन्तश्चलन्तो ये कटाक्षा अपाङ्गा एवाशुगाः वाणास्तेषां श्रेणी परम्परा तया जर्जरितं बहुधा च्छिन्नं परिभावितराधाकटाक्षशर-परम्पराविच्छिन्नमित्यर्थः । एतादृशं ये मनः अद्यापि इदानीमपि जर्जरितसमयमारभ्य वहुकालव्यापिनि वर्त्तमानकालेऽपीत्यर्थः । यनागपीषदपि सर्वं तु दूर इति भावः न संधुक्षते सन्धानं प्राप्स्यति । तत्कटाक्षच्छिन्ना मनो त्रय वा इदानीमपि परस्परं न मिलन्तीत्यर्थः । अतः पिष्टपेषणवद्वृथैव मन्मनः पीडनम् । अतिपातककरं तत्रेति-भावः । संधूक्षत इति केषुचित् पाठः । तदा संधुक्षणं सन्धानं न प्राप्नोति । स्वास्थ्यं न लभते इत्यर्थः । पूर्वपाठे संपूर्वादुहे लट् । द्वितीये धूक्षतेर्लटि ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

राधां प्रत्याह । भ्रूचापे निहितः कटाक्षविशिखो निर्मातुर्मर्मव्यथामिति नात्रानौचि-त्यम् । चापारोपितवाणस्य दुःखजनकस्वभावत्वात् । "पृषत्कवाणविशिखा अजिह्मग

खगाशुगा" इत्यमरः श्यामात्मा कुटिलः करोतु कवरी भारोऽपि मारोद्यममिति। नात्राऽप्यनौचित्यं मलिनस्य कुटिलस्य च क्रूरस्वभावत्वात्। कामः मारणतयोर्मारः कुटिलं कुञ्चवक्रयोः। कवरी केशवेशे स्यात् श्यामो मलिन कृष्णयोः इति कोशः॥

मोहं तावदयं च तन्वि! तनुतां बिम्बाधर इति नात्राऽप्यनौचित्यम्। यतोऽयं रागवान् मात्सर्य्ययुक्तः। तेन श्लेषोक्त्या लोहित्ययुक्तः। तौ न कुरु फले बिम्बे प्रतिबिम्बे दर्पणे। "रागोऽनुरक्तौ मात्सर्य्ये क्लेशादौलोहितेऽपिचेत्"। इति विश्वः। सद्वृत्तस्तनमण्डलस्तव कथं प्राणैर्मम क्रीडतीति। सद्वृत्तस्य परप्राणहरणमनौचित्यमित्यभिप्रायः श्लेषोक्त्या वर्त्तुलः। "वृत्तं पद्ये चरित्रे च वर्त्तुले चाभिधेयवत्," इति विश्वः॥ ५॥

॥ श्रुतिरञ्जनी॥

अथ विरहातुरः सन्नेव परिभावितः राधाङ्गसौन्दर्य्यसंजातव्यथातुरस्तदीयमङ्गलावण्यजातं निन्दति। भ्रूचापे इति।

भ्रूरूपे चापे कार्मुके निहितः न्यस्तः तव कटाक्ष एव विशिखो बाणः मर्मव्यथां मम जीवनहेतुभूतस्थानपीड़ां निर्मातु कुरुतात् नात्र खेदः। प्रयुक्तस्य विषमसमभेदकत्वस्य स्वाभाविकत्वादिति भावः। अत्र कटाक्षस्य मर्मभेदकबाणत्वरूपणान्निन्द्यत्वम्। किं च श्यामात्मा नीलवर्णः मलिनचित्तश्च कुटिलः भङ्गुरः वक्रस्वभावश्च उत्कलदेशकेशपाशस्य वक्राकारत्वात्तथोक्तमित्यवगन्तव्यम्। तादृशः कवरीभारः धम्मिल्लभारोऽपि मारोद्यमं मम मारणोद्योगं व्यन्तादवत्, अथवा मारस्य कामदेवस्य उद्यमं मम व्यथाकरेण उद्योगं कवरीभारस्य उद्दीपकत्वेन मन्मथोद्यमकारित्वस्य सम्भवात, अन्यत्र, मारो घातुकः तस्य उद्यमं करोतु, तनुतात्। लोकेऽपि यस्तु मलिनचित्तः कुटिलस्वभावश्च स तु परस्य मारणे मारके वा उद्योगं करोति कवरीभारस्यापि तादृग्गुणसम्पन्नत्वेन स्वोचितकार्य्यकारित्वन्नात्रापि मम खेद इति भावः। हे तन्वि! अयं च परिदृश्यमानः रागवान् अरुणरूपवान् अनुरागवांश्च यस्तव बिम्बाधरः बिम्बकल्पदशनच्छदः, बिम्बाधर

इत्यत्र मध्यपदलोपो समासः। अन्यमतविधायकस्याभावात्। उक्तं वामनेन-विम्बाधरादौ वृत्तौ मध्यपदलोपी स्यादिति। तमहं तावत् अज्ञानं विवेकराहित्यमित्यर्थः। तावदिति वाक्यालङ्कारे तनुतां धत्ताम्। लोकेऽपि हि यस्तु बुद्धिनाशकः राग सहितश्च स तु परं मोहयन्ति अयमपि तादृक् गुणत्वेन स्वानुगुणकार्य्यकरणेनास्माकं मनः क्लिश्यतीति भावः। अत्र विम्बाया मोहकारित्वात्तत्पत्वेनाधारस्यापि मोहकारित्वमवगन्तव्यम्। विम्बाया मोहकारित्वं वाहटेनोक्तम्—

सद्यो बुद्धिहरा विम्बा सद्यो बुद्धिकरा वचः।
सद्यः प्राणहरा वृद्धा सद्यो बलकरं पयः॥ इति॥

विम्बशब्दस्य फलपरत्वेऽस्त्रीलिङ्गता। "विम्बोऽस्त्री मण्डले देहे छायायां विम्बिका फले" इत्यभिधानात् हे तन्वि। सद्वृत्तः सन दर्शनस्पर्शनयोग्यः स चासौ वृत्तो वर्त्तुलश्च अन्यत्र समीचीनवर्त्तिनः एतादृशोऽपि सन् तवस्तनमण्डलः कुचभारः मम प्राणैः कथं क्रीडति। मदनभीत्या मम देहे निलीयावस्थितान् प्राणान् गृहीत्वा तव वक्षस्थले कथं विहरतीत्यर्थः।

सद्वृत्तस्य परप्राणापहरणस्यायशस्करत्वादितिभावः। किन्तु दुष्टानां कटाक्षादीनां प्राणहानिपर्य्यन्तो व्यापारो जात इति महदेतदाश्चर्य्यमिति भावः। आद्यपादे मर्मभेदनिर्माणे चापनिहितत्वलक्षणपदार्थस्य हेतुत्वप्रतिपादनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। "हेतुर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति लक्षणात्।" एवमश्लिष्टपादद्वये काव्यलिङ्गसमम्। आद्यपादे भ्रूचाप कटाक्ष विशिख इत्यत्र रूपकं च। "आरोपविषयं स्यादिति रोहितरूपणः। उपरञ्जकमारोप्यमाणं तद्रूपकमतमितिलक्षणात्। द्वितीय तृतीययोश्च श्यामात्मा कुटिलरागवानित्यत्र च श्लेषः, विम्बाधर इत्यत्रोपमाभेदः। चतुर्थचरणे सद्वृत्त इत्यत्रापि श्लेषः। सतोऽसत्पुरुषकृत्यरूपविरुद्धकार्य्योत्पत्ते विषमालङ्कारः।

तानि स्पर्शसुखानि ते च तरलाः स्निग्धा दृशोर्विभ्रमा-
स्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा।
सा विम्बाधरमाधुरीति विषयासङ्गेऽपि चेन्मानसं
तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्त्तते ॥ ६ ॥

---

विरुद्धकार्य्यस्योत्पत्तिर्यत्रानर्थश्च वा भवेत्।
विरूपघटना चासौ विषमालङ्कृतिस्त्रिधा ॥ इति

लक्षणात्। एतेषां यथायोगं संसृष्टिसङ्करौ द्रष्टव्यौ। सङ्करलक्षणं तु—

क्षीरनीर नयाद् यत्र सम्बन्ध स्यात्परस्परम्।
अलंकृतीनामेताषां सङ्कर स उदाहृतः ॥

इति लक्षणात् ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

श्रीकृष्णस्य मनोगतमाह । तस्यां यदि मनो लग्नसमाधिः कथं तर्हि विरहव्याधिः वर्त्तते। हन्तेति स्वगतसम्बोधने युक्तयोरेव विरहः स्यादत्र तु मनः संयोगो वर्त्ततेऽभिप्रायः स्यादेतन मनः संयोगेऽपि चक्षुरादीनां पञ्चेन्द्रियाणां संयोगाभावाद्विरह उपयुक्त इत्याह। "रूपं गन्धो रस स्पर्शगन्धाश्च विषया अमी"। इत्युक्तप्रकारेण विषयासङ्गे पञ्चेन्द्रियसुखेऽनुभूयमानेपीत्यर्थः। कोऽसौ प्रज्वर इत्याह। तानीत्यादिः। तानि स्पर्शसुखानि पूर्वमनुभूतानीत्यर्थः। एतेन त्वगिन्द्रियनिवृत्तिः। ते च तरलाः स्निग्धाः दृशोः विभ्रमा. ये पूर्वमनुभूता इत्यर्थः। एतेनच क्षुरिन्द्रियनिवृत्तिः। तद्वक्त्राम्बजसौरभं यच्च पूर्वमनुभूतमित्यर्थः। एतेन घ्राणेन्द्रियनिवृत्तिः। स च सुधास्यन्दी गिरां वक्रिमा यः पूर्वमनुभूत इत्यर्थः। एतेन श्रवणेन्द्रियनिवृत्तिः सा विम्बाधरमाधुरी या

पूर्वमनुभूतेत्यर्थः । एतेन रसनेन्द्रियनिवृत्तिः । ध्यानतः प्रत्यक्षीकृत्य कान्तया विरहिणो रमन्त इत्यभिप्रायः। विरहव्याधि रिति विरहो व्याधिरेव, विरहेण व्याधिरिति वा विग्रहः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

अथ विरहातुरः सन् प्रकारान्तरेणापि प्रलपति । तानीति । सहजसम्भोगकाले यानि स्पर्शसुखानि आलिङ्गनसौख्यावहानि तत्रेदानीमपि तान्येव भावनयाऽनुभूयन्त इति शेषः। तरलस्निग्धाश्चञ्चलनिर्मलाश्च ये दृशोर्विभ्रमाः प्रत्यक्षसम्भोगकालीनापाङ्ग-विलासाः इदानीमपि ते चेत एव चकारोऽवधारणार्थः । भावनयानुभूयन्ते यद्वक्त्राम्बुज-सौरभं सम्भोगकालिनमुखकमलसौरभं तदेतदिदानीं भावनयानुभूयते । सुधास्यन्दी अमृतस्रवणशीलो या गिरां वक्रिमा सारस्यापादकवाक्यादेवं च स एवात्रापि चकारो-ऽवधारणार्थः, इदानीमप्यनुभूयते । या विम्बाधरमाधुरी प्रत्यक्षास्वादकालीनविम्ब-कल्पाधरमाधुर्यं अधुना भावनया स्वाद्यते एवं विरहकालेऽपि भावनया वाह्येन्द्रियाणां साफल्यं सम्पादयति । तदनुग्राहकमानसस्य विशेषतः साफल्यं सम्पादयति । मानसं चेति । मनस्तु तस्यां लग्न आसक्तः समाधिः समाधानं यस्य तत्तादृशं विषयान्तरं परित्यज्य यदेकायत्तं विरहताप निवर्त्तके सर्वेन्द्रियसम्बन्धे सत्यपि अथवा विषयेन राधाविषयेन असङ्गे पूर्वोक्तसम्बन्धे सत्यपि विरहव्याधिः विरहेभ्यो व्याधिः विरहजनित-व्याधिर्वा कथं वर्त्तते, हन्तविरहव्याधिनिवर्त्तकः विषयासङ्गरूपौषधिसेवायामपि तद्व्याधिनिवर्त्तनं महाकष्टमित्यर्थः।

श्लोकस्य व्याख्यान्तरम् । स्पर्शसुखानि तान्येव तदानीं तनान्येव प्रत्यक्षकालीना-न्येव नेदानीं तनानीत्यर्थः । एवमन्यत्रापि योजनीयम्, इति पूर्वोक्तप्रकारेण विषयैः स्पर्शादिभिः राधाया वा । असङ्गे सङ्गाभावे विरहव्याधिः कथं वर्त्तते । हन्त लोके हि विषयभोगाधिक्यवशाद्व्याधिर्भवते । इदानीं तादृशविषयभोगाभावेऽपि विरहव्याधि-र्वर्त्तत इति महदेतत्कष्टमित्याश्चर्यं चेत्यर्थः । ननु मनःसङ्गाभावकृतोऽयं व्याधिरित्या-

भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि
बाणा गुणः श्रवणपालिरिति स्मरेण ।
तस्यामनङ्गजयजङ्गमदेवताया-
मस्त्राणि निर्जितजगन्ति किमर्पितानि ॥ ७॥

शङ्करमानसं चेतः मनस्तु तस्यां लग्नसमाधितदेकायत्तमेवमपि विरहव्याधिर्वर्त्तत इति महदेतत्कष्टमित्यर्थः । सुधास्यन्दीत्यत्र "सुप्यजाताविति णिनिः" (३-२-७८) । वक्रिमेत्यत्र "पृथ्वादितीमन्" (५-१-१२२) । विम्बाधरेत्यत्र मध्यपदलोपप्रकारो व्याख्यात एव माधुरीत्यत्र ब्राह्मणादित्वादूघञ् षत्वाङ् क्यप् । विरहनिवृत्तिसामग्रीं सत्यामपि तदनिवृत्तेर्विशेषोक्तिरलङ्कारः ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

भ्रूपल्लवमित्यादि इत्यनेन प्रकारेण तस्यां राधायां स्मरणास्त्राणि किमर्पितानि इति मन्ये, कथमस्त्राणि तत्रापि तानि इत्याह । भ्रूपल्लवं धनुरित्यादि । अपाङ्गतरङ्गितानीति कटाक्ष इत्यर्थः । बाणाः श्रवणपालिरिति श्रुत्योर्भागः पालिः । गुणाः "वेधित श्रुत्यधोभागे पालिरस्त्र्यङ्क्पंक्तिषु" इति विश्वः । कथं तस्यामेवास्त्राणि अर्पितानीत्याह । अनङ्गस्य जयजङ्गम देवतायामिति शिलामयी देवता यत्र तिष्ठति तत्र स्थाने च जयति । नान्यतस्त्वमिति जङ्गमेत्युक्तम् ॥ ७ ॥

इति श्रीकविराजश्रीनारायणदासकृतायां श्रीगीतगोविन्दटीकायां सर्वाङ्गसुन्दर्यां मुग्धमधुसूदनो नाम तृतीयसर्गविवरणम् ॥

---

॥ श्रुतिरञ्जनी ॥

प्रकारान्तरेणापि प्रलपति । भ्रूपल्लवं भ्रूकिशलयं भ्रूरेखेत्यर्थः । "पल्लवोऽस्त्री किशलयमित्यमरः" । उत्पत्तिकाले पल्लवस्यापि वक्राकारत्वात्तथारूपणम् । भ्रूपल्लवमेव धनुः तद्वद्वक्रत्वात्तथारूपणम् । किञ्च अपाङ्गतरङ्गितानि अपाङ्गयोर्नेत्रप्रान्तयोः "अपाङ्गौ नेत्रयोरन्तावित्यमरः ।" तयो तरङ्गितानि तरङ्गवदाचरितानि परम्परा इत्यर्थः । अन्येव बाणाः शरा अपाङ्गयोरपि स्मृतिदर्शनाभ्यां मर्मोत्तजकत्वात् । परम्परारूपकत्वात् तथारूपणम् । तथा श्रवणपालिः श्रवणमण्डलं गुणः मौर्वीश्रयणपालेः कर्णसमीपवर्त्तित्वाद् तथारूपणम् । इत्येवं रूपाणि निर्जितानि जगन्ति यैस्तादृशानि एवंरूपाण्यशस्त्राणि बाणाः स्मरेण कामदेवेन अङ्गहीनस्यापि कामदेवस्य जये सकललोकपरात्पादने मङ्गलदेवतायामधिदेवतायां मदनकर्त्तृकसकललोकजयस्य मूलकारणभूतायामित्यर्थः । जङ्गमदेवतामिति केषुचित् पाठः । जङ्गमदेवतायां स्थावरेतरदेवतायामित्यर्थः । एवं रूपायां राधायामर्पितानि किम् ? स्थापितानि किमित्यर्थः । नोचेदेतानि ब्रह्मचारिणोऽपि मम मनः कथमाकर्षन्तीति भावः ॥ ७ ॥

इति श्री गीतगोविन्दव्याख्याने तृतीयः सर्गः ॥



# चतुर्थः सर्गः

॥ सुस्निग्धमाधवः ॥

## यमुनातीरवानीरनिकुञ्जे मन्दमास्थितम् ।
## प्राह प्रेमभरोद्भ्रान्तं माधवं राधिकासखी ।। १ ॥

॥ सर्वाङ्गसुन्दरी ॥

राधिकासखी माधवं प्राहेति वाक्यार्थः। यमुनातीरवानीरनिकुञ्जे मन्दं यथा स्यादेवमास्थितं "शीतवानीरवञ्जुला इत्यमरः"। पुनः कीदृशं प्रेमभरोद्भ्रान्तं स्नेहातिशयेनावस्थितमित्यर्थः ॥ १ ॥

॥श्रुतिरञ्जनी॥

अथ राधाविरहवेदनापारकरणाय तत्सखी कृष्णमानेतुं मृगयमाणा भाग्यवशेन एकान्तावस्थितं तमालोक्य स्योचितमाचरति। यमुनेति। राधिकायाः सखी यमुनातीरे-कालिन्दीतटे वानीरनिकुञ्जे वेत्र मन्दिरे आस्थितं भ्रान्त्यावस्थितं प्रेम्णा राधाविषय-प्रणयेन राधाव्यतिरिक्तकामिनीकदम्बसम्भोगरूपापराधजनितसाध्वसेन च तद्भ्रान्त-माकुलम्। अथवा प्रेमवशादपराधजनितं यदधिकं भयं तेनोद्भ्रान्तं त्रस्तं लोके बहिः प्रेमास्पदवस्तु विषयापराधस्यातिभीतिकरत्वादिति भावः। प्रेमभरोद्भ्रान्तमिति केषुचित् पाठः तदा प्रेमभरः प्रेमाधिकां तद्वशाद्भ्रान्तं राधाविषयप्रेमातिशयेन तस्याः परिमार्गणं कृतवन्तमित्यर्थः। एतादृशं श्रीकृष्णं माधवं मन्दं शनैः यथा तथा प्राह ब्रूते। अत्र वक्ष्यमाणवचनस्य रहस्यरूपत्वेन इतरश्रवणायोग्यत्वान्मन्दमित्युक्त-मित्यवगन्तव्यम्। आहे इत्यत्र णलन्तत्वेन भूतत्वं भ्रान्त; तदुक्तं वामनेन—"आहे भूते णलन्तभ्रमादिति ॥ १ ॥

॥ अष्टमः प्रबन्ध ॥

कर्णाटरागेण[१] गीयते

निन्दति चन्दनमिन्दुकिरणमनुविन्दति खेदमधीरम् ।
व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम् ।
सा विरहे तव दीना,
माधव मनसिजविशिखभयादिव भावनया त्वयि लीना ॥

॥ ध्रुवम् ॥ १ ॥

---

॥सर्वाङ्गसुन्दरी॥

कर्णाटरागेण गीयते । अस्य स्वरूपम्—

कृपाणपाणिर्गजदन्तपत्रमेकं वहन् दक्षिणकर्णपूरम् ।
संस्तूयमानः सुरचारणौघैः कर्णाटरागः शिखिकण्ठनीलः ॥

अस्यां गाथायां विरहोत्कण्ठिता वर्णनीया । तथा चोक्ता नायिकालक्षणे—

प्रणयः परिणामेन गीतकाव्येषु दर्शिता ।
एकैव नायिका चापि हरमूर्त्तिरिवाष्टधा ॥
वासकसज्जा समुत्कण्ठा स्वाधीनभर्तृका तथा ।
कलहान्तरिता चापि विप्रलब्धाभिसारिका ॥
खण्डिता प्रोषिता चैव नायिका शुद्धसम्मताः ॥

अत्रसमुत्कण्ठालक्षणं तत्रैवोक्तम्—

---

१ ख.। कर्णाटगौल रागेण ।

ग्रामैव वर्त्तिन्येकावस्तुनान्यददर्शने।
तत्रस्थं काङ्क्षिते कान्तं विरहोत्कण्ठता मता ॥

उद्दामनन्मथ महाज्वरवेपमानां रोमाञ्चकञ्चुकितमङ्गकमावहन्तीम्।
गाढानुरागवचनां पुरतः सखीनामुत्कण्ठितां वदति तां भरतः कवीन्द्रः ॥

पुनश्च—

आगन्तुं कृतचित्तोऽसौ दैवान्नायाति यत्प्रियः।
तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा ॥

किं रुद्धः प्रिययान्ययाचिदथवा संख्या ममोद्वेजितः
किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः।
इत्यालोच्य मृगदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥

तथाहि विरहो लोहसज्ञ इति आशाबन्धेन वल्लभजनस्य एकग्रामप्रवासो मा दुर्मरणं विशिष्यते॥ मरणादपि गुरुतरमपि एकग्राम प्रवास कार्य्य व्यग्रं प्रियमुन्मादवस्तुदर्शने। उत्कण्ठिता मातरि सम्बोधनाम्। लज्जाप्रमाणा सलक्षणा सप्तमामदनावस्था सखीजनं हरयति।

हे माधव ! सा राधा तव विरहे लीनेति वाक्यार्थः। उत्प्रेक्षते मनसिजविशिखभयादिव भावनया त्वयि लीनेति। हे हरे ! त्वच्चरणगतो जनः कामेन हन्तुं न शक्यते, यतस्त्वं शार्ङ्गधन्वा कामस्तु पुष्पधन्वेत्येवं ध्यानेन त्वय्युपश्लिष्टेत्यभिप्रायः। अत्रगीते प्राथमिकपदत्रयेण राधिकोद्वेगावस्था प्रतिपाद्या। तल्लक्षणम्—

यस्मिन् रम्यमरम्यं स्यान्न च हर्षाय किंचन।
प्रद्वेषप्राणितव्येऽपि स उद्वेगोऽभिधीयते ॥

निन्दतीत्यादि । सा राधिका चन्दनमिन्दुकिरणं च निन्दतीति प्राक् वाक्यार्थः। स्वभावात् शीताविमौ यन्मां दहेते ममैव दुर्दैवमित्यनुपश्चादधीरं मन्दमन्दं तत्तन्मनुविन्दतीति द्वितीयः । व्यालनिलयेत्यादि । व्यालनिलयश्चस्दनतरुरुच्यते । चन्दनतरुषु भुजङ्गा इत्युच्यते । चन्दनतरुसम्पर्कात् मलयपर्वतवायुः कामवर्द्धकत्वात् विषमिवेत्युत्प्रेक्षते ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

• उक्तप्रकारमेव व्यक्तीकरोति । निन्दतीत्यादिना कर्णाटगौलरागेण गीयते इत्युक्तं तस्यायमभिप्रायः । मित्रेष्वपि पुरुषारागाः सन्तीति सूचयितुं तथोक्तमिति तद्ध्यानं तु –

कृपाणपाणिर्गजदन्तपत्रमेकं वहन् दक्षिणकर्णपूरे ।
संस्तूयमान सुरचारणौघैः कर्णाटरागः शिखिनीलकण्ठः ॥

एकतालेन गेयम् । तल्लक्षणं तु प्रागेव लिखितम् । तत्र सा विरहेत्यादि लीनेत्यन्तं ध्रुवपदम् । प्रथमं व्याक्रियते हे माधव ! श्रीकृष्ण ! अत्र माधवपदेन कृष्णसम्बोधनं तस्य नायिकान्तरसम्भावनया विरहाभावनया विरहभवरूपमर्म्मोद्घाटनमित्यवगन्तव्यम् । तव विरहे विप्रयोगे या सती अनन्यपतिका सा राधिका मनसिजस्य कामदेवस्य विशिखेभ्यः शरेभ्यो भयादिव शरप्रहरणसाध्वसादिवेत्यर्थः । शरेभ्य इत्यत्र भीतार्थानां भयहेतुरित्यपादानसंज्ञायां पञ्चमीभावनया हृदयावस्थितभगवदनुसन्धानेन त्वयि लीना, मदनशरपतनभयादिव तल्लक्ष्यभूत मनसा सह तव हृदये निलीय वसतीत्यर्थः ।

अथवा त्वयि लीना भावनया भवत्क्यं गतेत्यर्थः । अनेनान्यानुरक्तिः सूचिता । निरन्तरं तदेकायत्तचित्ता सती स्थितेति तात्पर्यार्थः । अत्र निलीयावस्थाने भयादिवेति हेतूत्प्रेक्षणादुत्प्रेक्षा, तया च भयातुर साम्यं ध्वन्यत इत्यलंकारेणालङ्कारध्वनिः ।

लीना सती किं करोतीत्याकाङ्क्षायामाह । शिष्टैः पदैः तत्कृत्यमाह । निन्दतीत्यादि । हे माधव ! सा राधिका तव विरहे सति चन्दनं अङ्गलेपनार्थमानीतं मलयजरजः तनुलिप्तं वा निन्दति धिगिति दूषयतीत्यर्थः । तत्त्वोद्दीपकत्वा देतिभावः । अनु पश्चादि-न्दुकिरणं सर्वलोकश्लाघनीयं चन्द्रकिरणं च निन्दति । किरणमिति जातावेकवचनम् । अनु अनन्तरम् अधीरं धियं बुद्धिं राति गृह्णातीति धीरं बुद्ध्यनुकूलं रा आदाने इत्यस्माद्धातोऽनुपसर्गे क इत्यर्थः । तादृशं न भवतीत्यधीरम् प्रतिकूलतयावेदनीय-मित्यर्थः । तादृशं खेदं दुःखं विन्दति लभते ।

अथवा अधीरं चञ्चलं सर्वत्र प्रसरणमित्यर्थः । एतादृशमिन्दुकिरणममुं नु चन्द्र-किरणमभिलक्षीकृत्य विन्दति प्राप्नोतीति वा योजना । अनुर्लक्षणे कर्मप्रवचनीयसंज्ञा अथवा धीरमिति क्रियाविशेषणम् । तदाभावप्रधानो निर्देशः । अथवा न विद्यते धीरो नास्मिन विषये यस्मात् सकाशात् इति व्युत्पत्त्या खेदविशेषणम् अथवा अधीः विरहे वेदनावशाद्बुद्धिहीना सती अं विष्णुरूपं त्वामनुखेदं विन्दतीत्यनुभवं भवन्निमित्त-खेदमनुभवतीत्यर्थः । बुद्धिहीनत्वं सर्वश्लाघ्यचन्दनेन्दुनिन्दकत्वादवगन्तव्यम् ।

अथवा अधीरमिति मन्दपवनविशेषणं वा तदा अधीरं चञ्चलमित्यर्थः । विरहिणां प्रतिकूलमिति वा एतादृशं मलयसमीरं दक्षिणपवनं व्यालानामुरगाणां निलया आवा-सभूता ये मलयद्रुमास्ते मिलनेन सम्पर्केण हेतुना गरलमिव विषमिव "क्ष्वेडस्तु गरलं विषमित्यमरः" कलयति मनुते यथा सर्पसम्बन्धाद्विषमिव प्रतिकूलतया पश्यति तथा मलयानिलमपीत्यर्थः । चन्दनतरुषु व्यालास्तिष्ठन्तीति लोकप्रसिद्धिः । मिलनेत्यत्र इगुपध लक्षणक प्रत्ययान्तान्मिलशब्दात्करोति णिचि ल्युट् प्रत्ययः । अथवा घञ् । ठक् प्रत्ययान्मिलशब्दात्पूर्वप्रक्रिया ॥ १ ॥

अविरत[1] निपतित मदनशरादिव भवदवनाय विशालम् ।
स्वहृदयमर्मणि वर्म करोति सजलनलिनीदलजालम् ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

सा राधिका स्वहृदयमर्म्मणि सजलनलिनीदलजालं वर्मसन्नाहं करोतीति वाक्यार्थः । असमस्तरूपकमिव ।

नलिनी स्यात्पङ्कजिनी पद्मिनी च सरोजिनी ।
कङ्कटं वर्मसन्नाहं विशालं पृथुलं महत् ॥

इत्यमरः । उत्प्रेक्षते अविरतनिपतितमदनशरादिव भवदवनायेति । तस्याः हृदये भवान् तिष्ठति हृदयं च, कामो विध्यति मर्मस्थलत्वात् । हृदयव्यवधानाच्च भवतोऽपि वेधः स्यादिति भवद्रक्षणार्थं सा सन्नह्यत इत्यर्थः । एतेन भवद्रक्षार्थमात्मनिरूपे निरपेक्षा वृत्तिस्तस्या इति सूचितम् । गात्रे निपतित इति धनुषश्चूतो ज्ञेया । नतु गीते स्फुटितः । गीते स्फुटितस्य बाणस्य सन्नाहेन परित्रातुमाशङ्क्यत्वात् । किम्वा निपतिते इति भावे क्तः । अविरतं निपतितं निपातनं यस्य इति विग्रहः ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

अविरतेति । हे माधवः ! सा राधिका अविरतमनवरतं निपतितः समागतो यो मदनशरः कामबाणः तस्मात्सकाशात् शरादितिजातावेकवचनम् । निपतितमिति भावे निष्ठा । भवतः निरन्तरं निजहृदयस्थितस्य तव अवनाय संरक्षणायैव विशालं विपुलं कर्म करोत्ययत्नगौरवपरिहारार्थमेतद्विशेषणमवगन्तव्यम् । सजलानां जलेन सहितानां नलिनीदलानां नलिनीपलाशानां जालं समूहं तत्र जलसाहित्यं जलानां निविड-

१ । ख. अविरल ।

कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयम् ।
व्रतमिव तव परिरम्भसुखाय करोति कुसुमशयनीयम् ॥ ३ ॥

---

सम्बन्धद्योतनार्थमवगन्तव्यम् । स्वस्य हृदयं सर्वनाम्नो वृत्तिमात्रेणस्वभाव इति पुंवद्भावः । तदेव मर्म जीवनस्थानं हृदयस्य मर्मणि वा यमं कवचं करोति, हृदयासक्तभवद्वनाय जलजालं कवचीकरोतीत्यर्थः । अत्र भवदनाय वर्म करोति इत्युत्प्रेक्षया राधायाः प्राणेभ्योऽपि कृष्णे प्रेमातिशयरूपवस्तुप्रतीतेरलंकारेण वस्तुध्वनिः ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

सा राधा कुसुमशयनीयं पुष्पशय्यां करोतीति वाक्यार्थः । कीदृशं अनल्पविलास-कलाकमनीयं, अनल्पविलासकलासम्भोगशृङ्गारः इत्यर्थादधिगन्तव्यम् । विरहे तव शरशय्यां यत इत्युत्प्रेक्षते, कुसुमविशिखशरतल्पव्रतमिवेति । ननु कामशरशय्याख्यं व्रतमतिदुष्करं जीवनसन्देहोत्पादकत्वात्तत्किमर्थं तत्र श्रद्धते इत्याह । तव परिरम्भ-सुखायेति । दुष्प्रापं हि तस्यालिङ्गनसुखं विना तपसा न लभ्यते इत्यभिप्रायः ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

कुसुमेति । हे माधव ! सा राधिका अनल्पा बहुला ये विलासाः विभ्रमास्तदर्थं याः कलाः शिल्पिकर्माणि तैः कमनीयं रमणीयं विलासानुकूलचित्रकर्मसमेतमित्यर्थः । एतादृशं कुसुमशयनं पूर्वं भवद्विरचितप्रसूनशय्यां कुसुमविशिखस्य मन्मथस्य शरतल्पं कुसुमरूपबाणनिर्मितशय्यारूपं व्रतमिव तव परिरम्भसुखायालिङ्गनसौख्याय करोति । यथा लोके कश्चित् क्षिप्रमेवेश्वरप्रसादाद्याराभत्वात्सुखसिद्ध्यर्थं असिपत्र-शयनादिकठोरव्रताचरणमीश्वरमुद्दिश्य करोति तथेयमपि सहजकुसुमशयनं भवत परि-

वहति विगलित[1]विलोचनजलधरमाननकमलमुदारम् ।
विधुमिवविकटविधुन्तुददन्तदलनगलितामृतधारम् ॥४॥

रम्भमहाफलाय मदनशरतल्परूप व्रतमिव करोतीत्यर्थः अत्र व्रतमिवेत्युत्प्रेक्षया लौकिकव्रताचरणकर्त्तृसाम्यप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

इतः पदचतुष्टयेन राधिकोन्मादावस्था प्रतिपाद्या । तल्लक्षणम्—

श्वासप्ररोदनोत्कम्पवसुधोल्लेखनैरपि ।
व्यापारो जायते यत्र स उन्मादो निरूप्यते ॥

आननं कमलं सा वहतीति वाक्यार्थः । न केवलं कुसुमशयनीयं करोत्येवंरूपश्च शब्दार्थः । आननकमलमिति । आननंकमलमिवेति विग्रहः । कीदृशं दलितविलोचनजलभरं दलितो युक्तो विलोचनजलधरो यत्रेति विग्रहः । अत्रोपमामाह—विधुमिवविकटविधुन्तुददन्तदशनगलितामृतधारमिति विकटस्य विधुन्तुदस्य राहोर्दन्तदलनेन चर्वणेन गलितामृतधारो यस्येति विग्रहः "विकटः सुन्दरः प्रोक्तो विशालविकरालयोः" इति विश्वः ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

वहतीति हे माधव ! सा राधिका विगलितं शस्तं यद्विलोचनजलं भवद्विरहोत्पन्नाश्रुजलं तस्या अधरं गलिताश्रुकमित्यर्थः ।

तथाप्युदारं तादृगवस्थायामपि दर्शनयोग्यमित्यर्थः । एतादृशमाननं कमलमिव आननकमलं कर्म विधुं चन्द्रं तुदति व्यथयतीति विधुन्तुदो राहुः विधुरूपोस्तुद इति खसि इत्यनव्ययस्येति मुम् । विकटो भयङ्करः स चासौ विधुन्तुदश्चेति । तस्य दन्तदल-

१ । क. विदलित । वहति च चलित इति पाठान्तरम् ।

विलिखति रहसि कुरङ्गमदेन भवन्तमसमशरभूतम्।
प्रणमति मकरमधो विनिधाय करे च शरं नवचूतम् ॥५॥

नैर्गलिताः स्रस्ताः अमृतधाराः सुधाधाराः यस्मात्तादृशं विधुं चन्द्रमसमिव बहति धत्ते। अत्र उपमानोपमेयसाधारणधर्मवादीनां चतुर्णामुपादानात् पूर्णोपमालङ्कारः। तेन च भवद्वियोगेन सा निरन्तरं दुःखाक्रान्ता इवास्तु इति वस्तु व्यज्यते इत्यलङ्कारेण ध्वनिः। तेन च त्वया शीघ्रमनुग्राह्येत्यनुरणितवस्तुध्वनिः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

सा राधा भवन्तं रहस्येकान्ते कुरङ्गमदेन कस्तूर्या विलखतीति वाक्यार्थः। कीदृशम् असमशरभूतं कामतुल्यं कामसदृशव्यवहारसुन्दरे प्रोक्तारमाह। मकरमधो विनिधायेति "मकरो यादसां भेदे निधिराशिप्रभेदयोः" इति मेदिनी। करे च शरं नवचूतमिति। विनिधायेत्यवगम्यते। नूतनाम्रकुसुमं करे शरमर्पयित्वेत्यर्थः। लिखित्वा किं करोतीत्याह। प्रणमतीति। भगवतोऽन्यः कामदेवो नास्तीति कृत्वा "ननु बन्धूकपुष्पसदृशः खलु कामदेव इत्यस्त्यागमः। तत्कथं कुरङ्गमदेन विषदृशेन कामदेवलिखनमुच्यते।" विरहावस्थायां मनस्थितचित्तता असूचनार्थं गैरिकादिना कामदेवलिखनं नोक्तम्॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

विलिखतीति। हे माधव! सा राधिका रहसि एकान्ते अन्यथा परिहासः स्यादिति भावः। अनेन तदेकायत्तचित्तता सूचिता। कुरङ्गमदेन कस्तूरिकया कृष्णकस्तूरिकयोः सावर्ण्यात् कुरङ्गमदेनेत्युक्तमवगन्तव्यम्। असमशररूपं शतकोटिकन्दर्पसमानतेजसं भूतमिति केषुचित् पाठः तदाध्ययमेवार्थः। वियोगदशायामुभयोरपि चित्तमोहकरत्वात्

प्रतिपद्मिद्मपि निगदति माधव तव चरणे पतिताहम् ।
त्वयिविमुखे मयि सपदि सुधानिधिरपि तनुते तनुदाहम् ॥
॥ ६ ॥

---

तथारूपणमित्यवगन्तव्यम् । एतादृशं भवन्तं त्वां अधो भूभागे विलिखति मकरं च लिखति केतकेन निर्मातीत्यर्थः । अधो इत्युदयव्ययपक्षे भवन्तं लिखति, फलकादाविति शेषः । अथो अनन्तरं मकरं लिखतीत्यन्वयः । करेण नवचूतं नूतनसहकारकोरकरूपं शरं वाणीं च निधाय निक्षिप्य प्रणमति शरेण मां प्रहरति प्रणामं करोतीत्यर्थः । लोकेऽपि हि व्याधकं प्रति नमस्कारं सन्तुष्टत्वादितिभावः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे माधवः ! सा राधा तव चरणे पतिताहमिति प्रतिपदं निगतीति वाक्यार्थः । न केवलं लिखति प्रणमति च । इत्येवं रूपोऽपि शब्दार्थः । कथं मम चरणे निपतितासी-त्यादि त्वयि विमुखे इत्यादि ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

प्रतिपदमिति । हे माधव ! सा राधिका न केवलं प्रणमति इदं वक्ष्यमाणमपि प्रतिपदं प्रतिक्षणं निगदति वक्ति । उक्तप्रकारमेव अभिनयं दर्शयति माधवेति । हे माधव ! राधाकर्तृक सम्बोधनमिदम् । अहं तव चरणे पतिता दण्डवन्निपतितास्मि प्रसीदेति शेषः अन्यथा त्वयि विमुखे पराङ्मुखे सति सपदीदानीमेव न तु कालान्तरे इति भावः अनेन कृष्णस्यालौकिक निग्रहानुग्रहसामर्थ्यं द्योतयति ।

सुधानिधिः अमृतकरः चन्द्रोऽपि किमुतान्य इत्यर्थः । मयि विषये तनुदाहं शरीर-तापं तनुते विस्तारयति । एवं प्रकारेण सा निगदतीत्यन्वयः । अत्र श्रीकृष्णस्य वैमुख्ये सति तापापनोदनसामर्थ्यस्यापि एकैकवस्तुनः तापकारित्वप्रतिपादनरूपवस्तुना तत्साम्मुख्ये सति सर्वस्यापि हिताचरणरूपवस्तुप्रतीते वस्तुना वस्तुध्वनिः । तेन श्रीकृष्णस्यालौकिकमहिमा सम्पन्नत्वरूप वस्तु व्यज्यते इत्यनुरणितवस्तुध्वनि ॥ ६ ॥

ध्यानलयेन पुरः परिकल्प्य भवन्तमतीव दुरापम् ।
विलपति हसति विषीदति रोदिति चञ्चति मुञ्चति तापम् ॥७॥

॥ सर्वाङ्गसुन्दरी ॥

ध्यानलयेन भवन्तं पुरः परिकल्प्य विलपत्येव मा विद्धि योजना। "स्याच्चित्तभावनाध्यानं मानसैकाग्रतालयः।" कथं ध्यानलयेन पुरः परिकल्पयति न पुनः साक्षात्कुरुत इति दुरापमिति विलपतीति। हे कृष्ण! जन्मान्तरे याभिस्त्वमाराधितस्ता एव ते सुभगाः युक्ताः। न मया जन्मान्तरे त्वमाराधितस्तत्कथमत्रागतोऽसि परिदेवनं करोतीत्यर्थः। "विलापः परिदेवनमित्यमरेः॥" हसतीति किं परिदेवनेन कष्टादयं प्राप्तो निर्भर्त्स्यमान पुनर्यास्यति शृङ्गारप्रकाशकं हासं करोति। यदुक्तं—"हासो भवति शृङ्गारादिति विषीदतीति प्रत्यक्षगतो भवानालिङ्गनादिकं न करोतीति कृत्वा रोदतीति।

अनन्तरोक्तकरणात् सा प्रेमावलोकनमपि न कुरुते किन्तु क्रन्दतीत्यर्थः। रोदनं हि नायकवशीकरणे परमो मन्त्रः। "रोदितमुदितमस्त्रं योषितां विग्रहष्विति" माघे।

वञ्चतीति स्थानान्तरं गच्छति। निरनुक्रोशस्य नायकस्य पार्श्वे स्थिता किं प्रयोजनमितिकृत्वा मुञ्चति तापमिति चिरकालदर्शनात् सम्भाषणादिकं न कुरुते क्षणात् क्षीण तपः सर्वं करिष्यतीति कृत्वा किलकिञ्चितनामायं भावः। यदुक्तं नाट्यालोचने—

लीला विलासो विच्छित्तिर्विभ्रमकिलकिञ्चितम्।
मोट्टायितं कुट्टमितं विव्वोको ललितं तथा।
विहृतिं चेति विज्ञेया दशस्त्रीणां स्वभावजाः ॥ इति

शुष्करुदितभयहासश्रमसूर्च्छादुःखरोगाणां संकरकरणं किलकिञ्चितं ज्ञेयम् ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

ध्यानेति। हे माधव ! सा राधा अतीव दुरापं योगिभिरप्यगम्यं भवन्तं त्वां ध्यानं नाम चित्तस्य विषयान्तरसञ्चारपरिहारेण एकस्मिन्नेव वस्तुनि स्थिरीकरणं तेन हेतुना लयः ध्येयवस्तुसमागमः तेन हेतुना पुरः अग्रभागे परिकल्प्य असन्निहितमपि त्वां ध्यानेन सन्निहितं कृत्वेत्यर्थः। अथवा हे माधव ! ध्यानेन भवच्चिन्तनेन लयः भवद्-व्यतिरिक्तविषयान्तरस्य क्षयः तेन हेतुना भवन्तं पुरः परिकल्प्य पुरः परिकल्पनं च कृष्णस्य तस्मै विरहनिमित्तविशुद्धविविधचेष्टाविज्ञापनार्थमित्यवगन्तव्यम्।

भवद्विरहवेदनाविश्रान्तिवशात् विशुद्धाः चेष्टाः करोतीति शेषः। अतएवाह विलप-तीत्यादि। हे माधव ! सा राधिका विलपति भवद्विरहवेदनावशात्। श्रोतॄणां कर्ण-शूलाय मानानि वाक्यानि वदतीत्यर्थः। विषीदति भवद्विरहवेदनावशादेव भूमौ परिषीदति चिन्तयतीत्यर्थः। पा घ्राध्मा इत्यादिना सदेः सीदादेशः। रोदिति विरह-शोकात् सखीनां पुरः अश्रुजलं निषिञ्चतीत्यर्थः। रुदादिभ्यः सर्वधातुक इड़ागमः भ्रमति वेदना वशादेव इतस्ततः पर्य्यटतीत्यर्थः तापं क्षणमात्रं देहदाहं च मुञ्चति सुखावस्तितेवाभातीत्यर्थः। अत्र विलपतीत्यादितुल्यधर्मैः प्रणयि वस्तुवियोगजात भ्रान्ति-समेतजनौपम्यस्य गम्यत्वाद्दीपकालङ्कारः—

प्रस्तुताप्रस्तुतानां च सामर्थ्यस्तुल्यधर्मतः।
औपम्यं गम्यते यत्र दीपकं तन्निगद्यते॥

इति लक्षणात्॥ ७॥

श्रीजयदेवभणितमिदमधिकं यदि मनसा नटनीयम् ।
हरिविरहाकुलवल्लवयुवतिसखीवचनं पठनीयम् ॥ ८ ॥
आवासो विपिनायते प्रियसखि मालापि जालायते
तापोऽपि श्वसितेन[१]दावदहनज्वाला करालायते ।

॥ सर्वाङ्गसुन्दरी ॥

यद्यधिकम् अधिकमिति क्रियाविशेषणम् । मनसा नटनीयं तदेवं जयदेवेन भणितम् । हरिविरहाकुलवल्लवयुवतिसखीवचनं पठनीयमित्यर्थः । शेषमर्थं श्लोकेन सूचयति ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्री जयदेवेति । हे जनाः हरेः श्रीकृष्णस्य विरहेणाकुलाधिकचिन्तिता या वल्लवयुवति सा राधिका तस्याः सखी तद्वचनरूपं श्रीजयदेवेन भणितमिदं समनन्तरमेव वर्णितगीतम् अधिकं यथा तथा मनसा यदि नटनीयम् अभ्यासार्हं यदिस्यात्तर्हि पठनीयम । सर्वदा गेयमित्यर्थः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे श्रीकृष्ण ! सा राधिका त्वद्विरहेण हरिणीरूपायते इति योजना । हन्तेति विषादे "हन्तहर्षेऽन्तकम्पायां वाक्यारम्भविषादयोरित्यमरः ।" हरिणी रूपायत इति मृगी-

१ । तापो निःश्वसितेन इति पाठान्तरम ।

सापि त्वद्विरहेण हन्त हरिणीरूपायते हा कथं
कन्दर्पोऽपि यमायते विरचयन् शार्दूल-विक्रीड़ितम् ॥ २॥

---

रूप इवाचरतीति श्लेषोक्त्या पाण्डुवर्णापीत्यर्थः। कथं हरिणीरूपायत इत्याह। आवासो वसतिस्थानमरण्यायते सुरतचेष्टाराहित्येन दुःखजनकत्वात्। प्रियसखी-मालापि जालायत इति दुःखेनात्मानं राधिकां व्यापादयिष्यतीति मत्वा सखीभिरा-वृत्तेत्यभिप्रायः स्वच्छन्दगमनप्रतिरोधात्। आनायः पुंसि जालं स्यात्।" "मालातु श्रेणिरावलिः। तापोऽपि श्वसितेन तथा सन्तपति यथा वातेन वनाग्नेरुल्का निर्गच्छन्ती-त्यर्थः। "दवौ दावौ वनारण्य वह्र्जन्महरौभवावित्यमरः।" श्वसितेन यस्ताप इति वा, हा कथं कन्दर्पोऽपि यमायते। विरचयन् शार्दूलविक्रीडितमिति हेति विषादे। "हावि-षादशुचार्त्तिषु" इत्यमरः। कथमिति महदेतदनुचितं प्राणास्तु चेष्टादिनेत्यभिप्रायः। पदेनानेन हरिणा इव राधायाः प्रिये दृढानुरागो दर्शितः। कृष्णे च पशुत्वं सस्नेहायां राधायां विस्नेहव्यवसायकत्वात्। वृत्तं चास्य शार्दूलविक्रीड़ितम्। "सूर्य्याश्वैर्मसज स्तताः सगुरवः शार्दूलविक्रीडितम्॥ २ ॥

॥ श्रुतिरञ्जनी ॥

सखी प्रकारान्तरेणापि राधा विरहवेदनां कृष्णाय कथयति। हे श्रीकृष्ण! त्वद्-

विरहेण भवद्वियोगेन हेतुना तस्याः आवासः क्रीडागृहं विपिनायते अरण्यानीवाचरति। "कर्त्तुःक्यङ् स लोपश्च" (३-१-११) इति क्यङ्। अकृत् सार्वधातुकयो (७-४-२५) रिति दीर्घः। एवं सर्वत्र प्रक्रिया। त्वद्विरहेण इत्यस्य सर्वत्रान्वयः अवगन्तव्यः।

किं च प्रियसखीनां माला समूहोऽपि अत्यन्तरङ्गताप्रकाशनार्थं प्रियग्रहणम् अथवा सर्वदा-आनुकूल्याचरणसूचनाद्वारा विरहस्य अतिदुःसहसूचनार्थं जालायते सर्वदिशो वन्धवागुरेवाचरन्ति।

तथा तापः शरीरदाहोऽपि श्वसितेनोपोद्वोलकनिःश्वासवातेन दावदहनस्य वनहुताशनस्य तत्र दावशब्दो वनवह्निशब्दवाचकः वनवाचकश्च। यदा वनवह्निवाचकः तदा करीकलभवंशकरीरादिव द्रष्टव्यम्। पवन पक्षे तु सुगमम्। "वने च वनवह्नौ च दवदावौ प्रकीर्त्तिताविति।"

ज्वालायाः करालः भयङ्करः दावदहनश्चासौ ज्वालाकरालश्चेति स इवाचरतीति। तदनन्तरमाचार प्रत्ययः। अथ सा राधिकापि वनरूपवासाद्यनुगुणसूचनार्थोऽपि शब्दः हरिणीरूपायते मृगीस्वरूपमिवाचरति। हन्त खेदे हा कष्टमित्यर्थः। सकलैश्वर्य्यसम्पन्नायामपि राधायां कथमेवंविधा दुरवस्था खेदश्च इति दैन्यभावः। एवं सा मृगी सम्पाद्य च तदनिष्टकरमृगयुमपि घटयति। कन्दर्पः कामोऽपि उक्तसमुच्चयार्थोऽपि शब्दः।

यद्वा नानाविधशृङ्गारचेष्टोपदेष्कृत्वहेतु गुरुकल्पस्य कामस्य शमनकर्माचरणमयुक्तमितिद्योतनार्थमपिशब्दः।

॥ नवमः प्रबन्धः ॥

देशाख्यरागेण गीयते

**स्तनविनिहितमपि हारमुदारम् सा मनुते कृशतनुरिव भारम् ।**
**राधिका तव विरहे केशव ॥ ध्रुवम् ॥ १ ॥**

---

शार्द्दूलो नाम व्याघ्रः। "शार्द्दूलद्वीपिनौ व्याघ्रे" इत्यमरः तस्य विक्रीड़ितं शार्द्दूलविहारकल्पशरप्रयोगमित्यर्थः। विरचयन् कुर्वन् यमायते यमकल्प व्याध इवाचरति। हा कष्टं मातृकल्पायां तस्यां राधायां कृष्णसुतप्रद्युम्नरूपकामस्य एतादृशकर्मानुचरणस्य अनुचितत्वं सूचयिता। हा कथमित्युक्तमवगन्तव्यम्। अत्र क्यङि अर्थादौपम्ये प्रतीतेरुपमाभेदः तदुक्तम् –

इव्यदिलोपे द्विविधनाम क्यचिच्च क्यङि।
तथाणि समासे सप्तधैषा प्रकीर्त्तिता॥ इति ॥

एषु उपमेयार्थः। तथा च यथा लोके दयावता दूरवस्थामृगीमुच्यते तथेयं दुरवस्था शीघ्रं मुक्तव्या इति व्यज्यत इत्यलंकारेण वस्तुध्वनिः। शार्द्दूलविक्रीडितमित्यत्र अस्यापि वृत्तस्य शार्द्दूलविक्रीड़ितत्वात् कवेश्चातुर्य्यमनुसन्धेयम्। "सूर्य्याश्वैर्मसजस्तताःसगुरवः शार्द्दूलविक्रीड़ितम्" इति लक्षणात्॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे हरे! हे केशव! तव विरहे सा राधिका स्तनविनिहतमपि हारं भारं मनुतेति योजना। विरहे निष्फलत्वादनङ्गरसस्याभारं हारस्य भारत्वम्॥ १ ॥

॥श्रुतिरञ्जनी॥

तस्य दुरावस्थामेव वर्णयति। स्तनेत्यादिना देशाख्यरागेण गीयत इत्युक्तं तस्यायमभिप्रायः। मित्रेष्वपि मित्राण्यपि रागोऽस्यस्तूतिसूचयितुं तथोक्तमित्येवमवगन्तव्यम्। रूपतालेन गेयम्। तलक्षणं तु द्रुतं द्वयर्द्धविरामान्तं रूपकं परिकीर्त्तितमिति।

**सरसमसृणमपि मलयजपङ्कम् ।**
**पश्यति विषमिव वपुषि सशङ्कम् ॥ २ ॥**

---

तत्र राधिकेत्यारभ्य केशवेत्यन्तं ध्रुवपदम् । हे केशव ! कृशा विरहवेदनया दुर्बला तनुर्यस्याः सा । कृशा राधिका कृशतनुरिति विशेषणं वा त्वद्विरहे विश्लेषे सति स्तनविनिहितं कुचयोरलंकृतम् उदारमत्युन्नतमपि हारं मुक्ताहारं भारमिव मनुते बुध्यते भवच्चित्तानुरञ्जनैकप्रयोजनस्य हारधारणस्य भवत् विश्लेषणनैरर्थक्यं मन्यत इति भावः । उदारमपित्यत्रापि शब्दः । इतिरेषां तु भूषणानां धारणेऽशक्तिः कैमुतिकन्याय-सिद्धेति सूचनार्थः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

मसृणस्निग्धचन्दनपङ्कं वपुषि सशङ्कं यथा स्यादेवं विषमिव पश्यतीत्यर्थः । "चिक्कणं मसृणं स्निग्धमित्यमरः" ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

सरसेति । हे केशव ! तव विरहे सा राधा सरसः द्रवसहितः । "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसे" इत्यमरः । स चासौ मसृणः स्निग्धश्च अनेनातिग्राह्यत्व-मुक्तम् । एतादृशमपि मलयजपङ्कः चन्दनरजः वपुषि शरीरे विषमिव कालकूटमिव सशङ्कं कदावा मारयिष्यतीति शङ्कासहितं यथा तथा पश्यति आलोचयति । तात्कालिक तापनिवर्त्तकमपि चन्दनं विषमिव नेच्छतीत्यर्थः ॥ २ ॥

श्वसितपवनमनुपमपरिणाहम् ।
मदनदहनमिव वहति सदाहम् ॥ ३ ॥

दिशिदिशि किरति सजलकणजालम् ।
नयननलिनमिव विगलितनालम् ॥ ४॥

॥ सर्वाङ्गसुन्दरी ॥

दाहसहितं निःश्वासवातं कामग्निमिव दहतीत्युत्प्रेक्षा। सन्तप्तान्तःकरणानां निःश्वासोऽपि सन्तप्त एवेत्यभिप्रायः। अनुपमपरिणाहमिति। अनुपमः परिणाहो यस्य इति विशालमित्यर्थः। "परिणाहो विशालतेत्यमरः।" ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

श्वसितेति। हे केशव तव विरहे सा राधिका श्वसितपवनं निःश्वासवातम् अनुपमम्। आत्मसविस्तारं सर्वाङ्गीणमित्यर्थः। मदनदहनमिव हुताशनमिव सदाहं-सतापं यथा तथा वहति धत्ते। तव विरहे निरन्तरसजातनिःश्वासपरम्परा तु तिष्ठतीत्यर्थः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

नयननलिनं दिशिदिशि किरति विक्षिपतीत्यर्थः। किमिह जालकणिकायुक्तमित्याह। विगलितनालमिवेति। विच्छिन्ननालं हि पद्मं सस्रवं भवतीत्यभिप्रायः। नयननलिनमित्यत्र कालभेदादुभयपदार्थ प्राधान्यं द्रष्टव्यम्। नयननलिनमिवेति गृहव्यापारादि-समासात्पूर्वपदार्थप्राधान्यम्। नलिनमेव नयनमिति विगृह्य मयूरव्यंसकादिसमासात् उत्तरपदप्राधान्यम्। अत्र पूर्वपदार्थप्राधान्ये सजलकणजालं, विशेषमुत्तरपदार्थप्राधान्ये विगलितनालमितीत्थं सर्वमनवद्यं यच्च किरतीत्यस्यानन्तरमिव शब्दे प्रष्टव्य इति धृतिदासः। प्राह तत् सम्यक्। किरतीवेत्यत्रैव शब्दमन्तरेणाप्यतीतः ॥ ४ ॥

नयन-विषयमपि किशलयतल्पम् ।
गणयति[१] विहित-हुताशविकल्पम् ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

दिशि दिशीति । हे केशव ! सा राधिका विगलितं अपगतं नालं वृन्ताबन्धनं यस्य तत्तादृशम् । इदं तु दग्धीकरणसामञ्जस्यायोक्तमित्यवगन्तव्यम् । नयनपक्षे नालपदेन नयनसौष्ठवापादकशोभाविशेषो ग्राह्यः । एतादृशं नयननलिनं नेत्रपद्माख्यं कर्म जलकणा अश्रुबिन्दवः तेषां जालं समूहः तत्सहितं यथा तथा । दिशिदिशि प्रतिदिशं किरणवदुक्षिपतीव । नखाग्रैरश्रुबिन्दुप्रक्षेपपूर्वकं त्वदागमनमार्गदिशावलोकनं कुर्वतीव स्थितेत्यर्थः । सजलकणजालमित्येतन्नयनविशेषणं वा विगलितनालमीत्येतत् पत्रावशेषद्योतनार्थं तथा च कमलस्य दग्धीकरणनयनोपमानत्वं समञ्जसं भवति । भवदागमनपर्य्यन्तं गलिताश्रुधारैवास्तु इति तात्पर्य्यार्थः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

चक्षुर्लोचनमपि पल्लवशय्यां तस्यां वह्निभ्रमं करोतीत्यर्थः । "तल्पं शय्याट्टदारेषु" "हुताशोऽग्निरुषर्बुधः ॥ ५ ॥

॥श्रुतिरञ्जनी॥

नयनेति । हे केशव ! सा राधिका तव वियोगे नयनविषयमपि नेत्रगोचरं पुरतः परिदृश्यमानमित्यर्थः किशलयतल्पं पल्लवशयनं विहितः । प्रज्वलितः यो हुताशनः वह्निः तत्कल्पं गणयति कलयतीति केषुचित् पाठः । पल्लवानामरुणत्वादुद्दीपकत्वम् । तापकारित्वाच्च हुताशनसाम्यमवगन्तव्यम् । तव वियोगे सुखनिद्राया अभावात् शयनमपि नाङ्गीकरोतीति तात्पर्य्यम् । अनेन चतुर्थ्यवस्था सूचिता ॥ ५ ॥

१ । छ, कलयति ।

त्यजति न पाणितलेन कपोलम् ।
बालशशिनमिव सायमलोलम् ॥ ६ ॥

हरिरिति हरिरिति जपति सकामम् ।
विरहविहितमरणेव निकामम् ॥ ७ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

सा पाणितलेन कपोलं न त्यजतीति योजना। उपमामाह। बालशशिनमिव सायमलोलमिति सायंकाल एव चञ्चलत्वे तु हस्तावृतत्वात् कपोलस्यार्द्धभागदर्शनात् बालचक्र उपमानत्वेनोपात्तः। अताम्रत्वात् पाणितलस्य सन्ध्यायामाविरहपाण्डुत्वात्। कपोलस्य चन्द्रेण साम्यम् ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

त्यजतीति। हे केशव ! सा राधिका स्वयं शुक्लपक्षादिमसायंकाले आलोलम् अचञ्चलम् स्थिरमिति यावत् बालशशिनमिव असम्पूर्णचन्द्रमिव यथा शुक्लपक्षादिमसायंकालो बालचन्द्राविनाभूतः तथा राधापि भवद्वियोगमारभ्य करतलाविनाभूतकपोला जातेत्युपमा। अत्र वदनस्य परिपूर्णचन्द्रकल्पत्वात्तदेकदेशकपोलस्यापि चन्द्रैकदेशसाम्यं युक्तमिति बालशशिनमिवेत्युक्तमवगन्तव्यम्। यद्वा कपोलनिधानव्यग्रहस्ताग्रभागस्य बालशशिकल्पत्वात् तदाक्रान्तकपोलभागस्य वक्राकारत्वात् तस्य बालशशिसाम्यमवगन्तव्यम्। अथवा सायं समये प्राप्ते पाणितलेन कपोलं विरहपाण्डुरं मदग्निनारक्तं च गण्डभागं बालचन्द्रमुद्यचन्द्रमसमिव न त्यजतीत्यन्वयः। ६।

॥ सर्वाङ्गसुन्दरी ॥

सकामं काममभिलाषं यथा स्यादेवं हरिरिति हरिरिति योजना। नरो विरह-

श्रीजयदेवभणितमिति गोतम् ।
सुखयतु केशवपदमुपनीतम् ॥ ८ ॥

---

विहितमरणे विनिकाममित्युत्प्रेक्षा। मुमुर्षुर्हि यथेष्टं हरिरिति स्मरतीत्यभिप्रायः ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

हरिरिति। हे केशव! विरहेण दुरन्तं भवद्वियोगेन विहितमासन्नं मरणं यस्यास्तादृशीव निकामम् अत्यर्थं सकामं भवत्सायुज्याभिलाषसहितं यथा तथा। हरिः हरिरित्यनेन प्रकारेण जपति। "महत्यादिसम्प्राप्ते स्मर्त्तव्यो भगवान् हरिरिति" पुराणवचनार्थं मनसि निधाय सर्वदुःखपरिहारित्वेनान्वर्थसंज्ञकं भवन्तमेव निरन्तरं स्मरतीत्यर्थः। अत्र च सकामं निकाममिति च शब्दतः यो विरोधः। अर्थतः परिहारस्तु दर्शित एव ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

इति जयदेवभणितं गीतं सुखयत्विति योजना कीदृशं, केशवपदमुपनीतम्। हरिचरणमुपढौकितमित्यर्थः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति। इति पूर्वोक्तं कारणेन जयदेवेन भणितं गदितं केशवस्य पदचरणयुगलम् उपनीतं भक्त्या प्रणीतं तस्मै समर्पितमित्यर्थः। अथ ध्रुवपदे यत्केशवेति पदं तदुपनीतं प्रापितं तदन्तं तमित्यर्थः। एतादृशं गीतं सुखयतु श्रोतॄणां गातॄणां चानन्दं करोतु इत्यर्थः ॥ ८ ॥

सा रोमाञ्चति सीत्करोति[1] विलपत्युत्कम्पते ताम्यति
ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्च्छत्यपि।
एतावत्यतनुज्वरे वरतनुर्जीवेन्न किं ते रसात्
स्ववैद्यप्रतिम! प्रसीदसि यदि त्यक्तोऽन्यथा हस्तकः[2]
॥ ३ ॥

॥सर्वाङ्गसुन्दरी॥

हे स्ववैद्यप्रतिम! अश्विनीकुमारवच्चिकित्सक! यदि त्वं प्रसीदसि तद तावत्यतनुज्वरे तव स्यात् किं सा न जीवेदपितु जीवेदेतद्युक्तम्। रसः औषधान्तरसाधितः पारदो ज्ञेयः। वस्तुतस्तु रूपेणाश्विनीकुमार सम यदि त्वं प्रसीदसि तदैतावत्यतनुज्वरे तव रसात् शृङ्गारात् सा न जीवेदपितु जीवेदपीतिवाक्यार्थः। किदृशी वरतनुः गोपीसहस्रेषु तत्समानात् काष्यस्थितातितस्या रसदानेन रक्षणमुपयुक्तमित्यभिप्रायः। ज्वरलक्षणमाह रोमाञ्चतीत्यादि। शीत्करोति सीदिति अनुकरणात्मकाव्ययशब्दोऽयं बिलपति परिवेदनं करोति उत्कम्पते। ताम्यतीति ग्लानिं गच्छति ध्यायतीति किमपि चिन्तयतीत्यर्थः। प्रमीलति अक्षिणी संगच्छतीत्यर्थः। पतति भूमौ लुठति उद्याति उत्थातुमिच्छतीत्यर्थः। मूर्च्छति मूर्च्छां प्राप्नोतीत्यर्थः। सन्निपातकज्वरे सर्वा एताः-क्रियाः सम्भवत्येव न कामज्वरेति चिकित्सा सात्विकभागाः केचिज्ज्वरप्रकोपजां क्रियाः ननु सान्निपातिकज्वरमात्रके रसादानं नोचितम्। प्राकृतवैद्यहस्तकस्य सम्भवात्।

१। शीत्करोति, सीत्करोति इति उभयविधः कोषे दृश्यते।

२। "एतावत्यतनुज्वरे वरतनूः प्रोद्योति संमूर्च्छति। स्ववैद्यप्रतिम प्रसीदसि रसा किं सा न जीवेत्तदा॥ इति पाठान्तरम्॥ एतादृश्यतनु इति पाठान्तरम्।

स्मरातुरां दैवतवैद्यहृद्य[1]

त्वदङ्गसङ्गामृतमात्रसाध्याम् ।

विमुक्तबाधां[2] कुरुषे न राधा-

मुपेन्द्रवज्रादपि दारुणोऽसि ॥ ४ ॥

---

यदुक्तं —

लंघनं वालुकास्वेदो नस्यं निष्ठीवनं तथा ।
अवलोहोऽञ्जनं चैव प्राक् प्रयोज्यं त्रिदोषजे ॥

इति । अत आह त्यक्तोऽन्यथाहस्तक इति । इति अन्यथा अन्यप्रकारेण हस्तको हस्तक्रिया हस्तेन पानादौषधान्तरदानं वैद्येन त्यक्तोदानदानेऽन्यौषधस्य विशेषप्राप्तेरित्यभिप्रायः । कामज्वरपक्षे हस्तको हस्तक्रियैव तस्या जागर्त्ति वक्तुमसमर्थो ह्यर्थः । अन्यथेति यदि त्वं न प्रसीदसि सोऽपि तया त्यक्तमात्रशब्दोऽवधं रणे" स्त्यक्षते । मरिष्यत इति यावत् । आविर्भूतवहूपचारात् भविष्यतीत्यत्र प्रत्ययो ज्ञेयः" ॥ ३ ॥

॥सर्वाङ्गसुन्दरी॥

गीतस्य तात्पर्य्यार्थमाह । यतस्त्वदङ्गसङ्गामृतपात्रं साध्यां विमुक्तबाधां न कुरुषे इति वाक्यार्थः । दैवतवैद्यहृदेत्यपि सम्बोधनमश्विनीकुमारसमेत्यर्थः । वृत्तमुपेन्द्रवज्राख्यम् । "उपेन्द्रवज्रा प्रथमे लघौ सा ।" ॥ ४ ॥

---

१ । ख. दैवतवृन्दवन्द्यम् ।                २ । घ. निवृत्तबाधाम् ।

३ । श्लोकस्यास्य श्रुतिरञ्जनी व्याख्या नास्ति ।

॥ श्रुतिरञ्जनी ॥

एवं विरहवेदनायां विज्ञापितायामचलित हृदयं श्रीकृष्णमुपालभते । स्मरातुरामिति । दैवतवृन्देन देवतासमूहेन वृन्द्यः नमस्कार्य्यः परमकारुणिकत्वेन सर्वदेवता सेव्य इत्यर्थः । अनेनागतिकानां त्वमेव गतिरिति सूचितम् । क्वचिन्दैवतवैद्यहृद्य इति पाठः । तदा दैवतमिष्टं देवता सा चासौ वैद्यश्च स्वनामद्वारा संसारप्रमुखनिखिलामयनिवर्त्तकागदंकार इत्यर्थः । उक्तं च—

अच्युतानन्तगोविन्द नामोच्चारणभेषजात् ।
नश्यन्तु सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ इति ॥

अतएव वैद्यः दैवतत्वाद्वैद्यत्वाच्च तस्य हृद्यत्वमित्यवगन्तव्यम् । अथवा दैवतवैद्य-इति एकपदं वा तदा दैवतवैद्यौ अश्विनौ ततोऽपि हृद्यः तौ तु व्याधिमात्रमेव निवर्त्तयतः । भवांस्तु संसाररूपमहाव्याधिं च निवर्त्तयतीत्यतस्तस्य ताभ्यामपि हृद्यत्वमित्यर्थः ।

अथवा दैवतवैद्यादिवत् हृद्य एतादृश हे उपेन्द्र ! हे श्रीकृष्ण ! दैवतवैद्येतिपदच्छेद-पक्षे हृद्य इति तदङ्गविशेषणं तदायमेवार्थः । हृद्यं रोगिणः सेवाकाले परिणामकाले च हितं लोके हि सर्वमौषधिजातं परिणामकाले हितं इदं तु सर्वदा इत्यस्य हृद्यत्व-मवगन्तव्यम् ।

एतादृशं यत् त्वदङ्गसङ्गामृतं भवदङ्गाश्लेषसुधा तन्मात्रसाध्यां अनन्यनिवर्त्त्य व्याधिकाम् । न तु शरीरायाससंपाद्यमूलिकाद्यौषधिजालचिकित्सितरोगामित्यर्थः । तत्र मात्रशब्दः गुटिकापरत्वेनापि योजनीयः । वैद्यके मात्रशब्दः औषधिपरिमाणे प्रयोगात् । एतेन प्रकृतागदंकारत्वस्य प्रयासः सूचितः । एतादृशीं राधां विमुक्तबाधां त्यक्तपीडां यदि न कुरुषे क्रियाफलस्य कर्त्तृगामित्वादात्मनेपदम् । तर्हि वज्रादप्यधिको वज्राधिकः स चासौ दारुणश्चासीत् । वज्रादप्यधिक कठिनहृदयो जातोऽसि इत्यर्थः । तथा च निखिलनिगम पुराणप्रसिद्धभवदीयपरमकारुणिकत्व व्याहतं स्यात् । ततश्च

कन्दर्पज्वरसंज्वरातुरतनो[1]राश्चर्य्यमस्याश्चिरं
चेतश्चन्दनचन्द्रमः कमलिनी चिन्तासु सन्ताम्यति।
किन्तु क्लान्तिवशेन[2] शीतलतरं त्वामेकमेव प्रियं
ध्यायन्ती रहसि स्थिता कथमपि क्षीणा क्षणं प्राणिति ॥ ५ ॥

---

तद्रक्षणाय स शीघ्रमेव त्वयानुग्राह्या। अन्यथा त्वपकीर्त्तिः स्यादित्यर्थः। वज्रादपि दारुणोऽसीति केषुचित् पाठः न तु सरसः चातुर्य्यार्थं कविविवक्षितस्त्रीलिङ्गान्त-छन्दोविरोधात्। तल्लक्षणम् – "उपेन्द्रवज्रा जतजास्ततोगौरिति।" अस्मिन् वृत्ते पादान्ते गुरुद्वयं प्रत्येकदारुणोऽसीत्यत्र यद्यपि अन्तो गुरुर्न भवति "नापदान्तलघुर्गुरुत्वं चेति" छन्दो सूत्रात् विकल्पितं गुरुद्वयमनुसन्धेयम्॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

कन्दर्पज्वरसंज्वराकुलतनोरस्याः राधायाश्चेतः चन्दनादीनां चिन्तासु स्मरणेषु ताम्यति ग्लापयतीत्याश्चर्य्यम्। उपभोगस्तु दूरपराहत एवेत्याक्षेपलब्धोऽत्यर्थः। "संतापः संज्वरः समौ" इत्यमरः। यद्येवं कष्टजीवतीत्याह। किन्तु क्षान्तिरसनेत्यादि अन्यश्वो वा हरिरेष्यतीत्यादि क्षान्तिः। तत्र यो रसोऽनुरागस्तेन त्वामेकमेव प्रियं रहसि ध्यायन्ती कथमपि प्राणिति जीवतीत्यर्थः। एकमेवेति एतेनान्यगतिः। त्वामेवेति सूचितम् कीदृशं त्वां शीतलतरं चन्दनादयस्तु शीतलतरः स्ववैद्यस्तापहारक इति बुद्ध्या तव ध्यानम्॥ ५ ॥

---

१। ख. ज्वराकुलतनो।                    २। क्लान्तवत् क्लान्तिवशेन इति पाठान्तरम्।

॥ श्रुतिरञ्जनी ॥

तस्या एव चेष्टान्तरं दर्शयति। कन्दर्पेति । हे केशव ! कन्दर्पेण कामेन कृतो ज्वरः कन्दर्पज्वरः तेन संज्वरः सम्यक् तापः। उभयत्र तृतीया तत्कृतेत्यादिना समासः, तेन संज्वरेण आकुला तनुर्यस्यास्तथाविधायाश्चेति चित्तं कर्त्तृ चिरं चिरकालं चन्द्रमः कमलिनीनां पटीरसुधाकरपद्मिनीनां चिन्तासु सुविचारगोष्ठीषु सतीषु सन्ताम्यति ग्लानिनिवर्त्तकौषधिजाते सम्भवत्यपि ग्लानिं जहाति परन्तु अधिकां ग्लानिं प्राप्नोतीत्यर्थः। तेषामुद्दीपकत्वादिति भावः।

तर्हि दशमावस्था अस्याः किमित्याशङ्‌क्याह किन्तु इति। किन्तु क्लान्तिविशेन ग्लानिहेतुना क्षीणप्राणमात्राविशिष्टा सा राधा शीतलतरम्। अत्यन्तशीतलम् एवमेवाद्वितीयं न तु पूर्वोक्त चन्दनादिवत् त्रित्वमित्यर्थः। त्वां भवन्तं रहसि एकान्ते विक्षेपराहित्यसूचनार्थम् एतद्विशेषणस्थ तावत् मात्राक्षणं मानाक्षणमल्पकालमेव नतु चन्दनादि चिन्तायामिव चिरकालम्। अत्यन्तसंयोगे द्वितीया। ध्यायन्ती सती कथमपि अति प्रयासेन प्राणिति जीवति एतादाश्चर्य्यमद्भुतम्। चिरकालमतिशीतलचन्दनादि त्रितयचिन्ताया अपि ग्लानिं न जहाति किल सा क्षणमात्र शीतलमेकाकिनीं त्वां ध्यात्वा ग्लानिं जहाति प्राणिति च इत्येतत् महादश्चर्यमित्यर्थः।

किञ्च लोकेहि पीतं सदौषधं तापनिवर्त्तनद्वारा प्राणिनो जीवयति। अत्र तु औषधिध्यानात्तापोऽपगच्छति प्राणिति च। सर्वदा त्वदेकायत्तं तस्या जीवनमिति तात्पर्य्यम्। प्राणितीत्यत्र रुदादिभ्यः सर्वधातुक इडागमः। अत्र सामग्र्यां सत्यामपि कार्य्यमुत्पत्तेर्विशेषोक्तिः। कारणानि विना कार्य्यस्योत्पत्तेश्च विभावना, । तदुक्तम्—

**कारणानि विना कार्य्यस्योत्पत्तौ स्याद्वि भावना।**
**तत्सामग्र्यामनुत्पत्तौ विशेषोक्तिर्निगद्यते॥**

इति ॥ ५ ॥

क्षणमपि विरहः पुरा न सेहे
　　नयननिमीलनखिन्नया यया ते।
श्वसिति कथमसौ रसालशाखां
　　चिरविरहेण विलोक्य पुष्पिताग्राम् ॥६॥

---

। सर्वाङ्गसुन्दरी॥

हे माधव ! नयननिमीलनखिन्नया यया राधया पुरा ते तव क्षणमपि विरहो न सेहे कथमसौ चिरविरहे पुष्पिताग्रां रसालशाखां विलोक्य श्वसिति जीवत्याश्चर्य्यम् । त्वां कथं विधाता निमिषो निर्मितः येन कान्ति दर्शनं क्षणं क्षणं निहन्यत इति नयन-निमीलनखिन्नयेत्यर्थः । "आम्रश्चूतो रसालोऽसा वित्यमरः ।" वृत्तं चास्य पुष्पिताग्रा ।" लक्षणं तु—"अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥ ६ ॥

इति श्रीकविराजनारायणदासविरचितायां श्रीगीतगोविन्दटीकायां सर्वाङ्ग-सुन्दर्य्यां विरहोत्कण्ठितावर्णने सुस्निग्धमाधवो नाम चतुर्थः सर्गः ।

। श्रुतिरञ्जनी ॥

पुनरपि तस्या एव वृत्तान्तं साश्चर्य्यमाह । क्षणमपीति । हे केशव ! नयनयोः निमीलितं निमेषः भावे निष्ठा तेन खिन्नया भवद्दर्शनप्रतिबन्धकनिमेषदुःखितयेत्यर्थः । एवंविधया यया राधया ते तव विरहो वियोगः । विरहलक्षणं तु—

कालक्षेपस्तु संप्राप्ते कार्य्यद्वारा विलम्बितः ।
एकग्रामस्थयोर्यूनोर्विरहः सोऽभिधीयते ॥

पुरा प्रथमकाले क्षणं क्षणमात्रमपि " अत्यन्तसंयोगे द्वितीया" न सेहे न षोढ़ः सहेः कर्मणि लिट्।

अतएव तन्मध्येन देशे लिटित्येतद्भ्यासलोपौ सा राधिका इदानीं तव चिरविरहेऽपि चिरकालं विप्रयोगे सत्यपि पुष्पिताग्रां संजातपुष्पाग्रभागां रसालशाखामुद्दीपिकां सहकारशाखां विलोक्य वीक्ष्यापि कथं श्वसिति प्राणिति, जीवनहेतुभूतभवत्सन्निधानाभावेऽपि विरोधिनि च विद्यमाने प्राणधारणस्याश्चर्य्यकरत्वं सूचयितुं कथं शब्दप्रयोग इति भावः।

अतश्च शीघ्रं त्वया अनुग्राह्या इति भावः। विभावनालङ्कारः। श्वसितीत्यत्र पूर्ववदिड़ागमः। छन्दोऽपि पुष्पिताग्रावृत्तम्॥ ६॥

इति श्रीगीतगोविन्दव्याख्याने चतुर्थसर्गविवरणम्।



# पञ्चमः सर्गः

॥ साकाङ्क्षपुण्डरीकः ॥

अहमिह निवसामि याहि राधा-
मनुनय मद्वचनेन चानयेथाः ।
इति मधुरिपुणा सखी नियुक्ता
स्वयमिदमेति पुनर्जगाद राधाम् ॥ १ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

अस्यां गाथायां अभिसारिका वर्णनीया । अस्याः लक्षणम्—

लज्जां हित्वा समाकृष्टा यौवनेन व्रजेत्तु या ।
अभिसारगतं कान्तं कीर्त्तिता साभिसारिका ॥ इति भरतः ॥

पुनरस्याः स्वरूपमुक्तम्—

या दूतिका वचनतः स्वत एव वापि
गाढस्मरज्वरभरार्त्तिपिपासितेव ।
निर्याति वल्लभजनाधरपानलोभात्
सा कथ्यते कविवरैरभिसारिकेति ॥

कविवरैः सा नायिका अभिसारिकेति कथ्यते । दूतिवचनतः[१] स्वत एव वल्लभजनाधर-पानलोभान्निर्याति । उत्प्रेक्षते स्मरज्वरपिपासितेव । उत्तरगीतस्य तात्पर्य्यार्थं श्लोकेन

---

१ । दूतिः ह्रस्वान्त यथा रघौ "दूतिसन्दर्शिताभ्यः (१८ । ५)

॥ दशमः प्रबन्धः ॥

देशीवराडीरागेण[१] गीयते ।

**बहति मलयसमीरे मदनमुपनिधाय ।**

**स्फुटति कुसुमनिकरे विरहिहृदयदलनाय ।**

**तव विरहे वनमाली सखि सीदति ॥ ध्रुवम् ॥ १ ॥**

---

दर्शयति । उपर्युक्तवचसा राधिका सख्यनुनीतेन मधुरिपुणा नियुक्ता सखीस्वयमेत्य राधां पुनर्जगादेति वाक्यार्थः । किमुक्त्वा हरिणा नियुक्ता सखीत्याह ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

अथ सखी विज्ञापनकौशलेन द्रवीभूतचेता माधवः सप्रसादं तामाह । अहमिति । हे सखि ! अहं इह वानीरकुञ्जे निवसामि तिष्ठामि । त्वं तु राधां प्रतियाहि गच्छताम् अनुनय मद्वचनं प्रीतिपूर्वभवद्वचनेन प्रार्थयस्वेत्यर्थः । अन्यथा मद्वचनेन अनन्तरं मद्वचने तामानयेथाः आनय । अथवा अनुनयपूर्वकमद्वचनपरिपाट्येवानुनयेथा इत्यन्वयः । इति पूर्वोक्तप्रकारेण मधुरिपुणा श्रीकृष्णेन सखी नियुक्ता सती प्रेरिता सती पुनर्भूयः एत्य राधासमीपमागत्य राधां स्वयमिदं वक्ष्यमाणं जगाद उक्तवती ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

देशी वराडिरागेण गीयते । अस्याः स्वरूपं यथा —

आरब्धमौनमुद्रा निद्रालसघूर्णितनयनाब्जा ।

---

१ । ङ. वराडिरागेण । ग. पञ्चमवराडिरागेण ।

सुरतार्थिनी निजदयिते देशीवराडी भवेद् गौरी ॥

पुनरस्याश्च रूपमुक्तम् :-

विनोदयन्ती प्रियमेव[१] गौरी चामर चालनेन।
कर्णं दधाना सुरपुष्पगुच्छं वराङ्गनेयं कथिता वराडी ॥

गीतेनानेन हरेरुद्वेगावस्था प्रतिपाद्या—

यस्मिन् स्यमरम्यं वा न च हर्षाय जायते।
प्रद्वेष प्राणितव्येऽपि य उद्वेगः स्मृतो यथा ॥ इति ॥

हे सखि ! तव विरहे वनमाली सीदति। इति सर्वत्र वाक्यार्थः। कदा सीदतीत्याह। मलयसमीरे मलयात् समागतः समीरः अत्र मध्यपदलोपि समासः तस्मिन् वहति सती कुसुमानां निकरः तस्मिन कुसुमनिकरे विरहिणां हृदयस्य दलनाय स्फुटति विकासमाने सति किं कृत्वा मदनमुपनिधाय सन्निहितं कृत्येत्यर्थः ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

इदं जगादेत्युक्तम्। तत्प्रकारं गीतेन स्फुटयति। बहतीत्यादि। तत्र सखीत्यारभ्य वनमालीत्यन्तं ध्रुवपदम्। स्फुटार्थं तत्। कस्मिन सति सीदतीत्याकांक्षायामाह। बहतीति। हे राधे ! मलयसमीरे चन्दनपवने मदनं कन्दर्पमुपनिधाय सहायं कृत्वा इत्यर्थः। बहति प्रबहति वातीत्यर्थः। किञ्च विरहिणां हृदयदलनाय कुसुमनिकरे केतकीकुसुमसमूहे स्फुटति विकसति। तव विरहे वनमाली सीदतीत्यन्वयः। यथा लोके राजानं समीपं निधाय तत चैतन् प्रहरणे च बिजृम्भमाणे रिपुरिव सीदति। तथा मदनमहाराजं समीपे निधाय तत्तटे मलयपवने तत्प्रहरणे कुसुमविकसने सति तत् प्रत्यर्थी विप्रयोगी जनः श्रीकृष्णोऽपि सीदति इत्यौपम्यस्य गम्यमानत्वात् दीपकालङ्कारः

१। 'दयितं च' इति सङ्गीतनारायणे।

दहति शिशिरमयूखे मरणमनुकरोति ।
पतति मदनविशिखे विलपति विकलतरोऽति ॥ २ ॥

---

यद्वा वनमाली मदनमुपनिधाय वियोगजनितपीडासाक्षित्वेन समीपे विन्यस्य सीदतीत्यर्थः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

दहतीत्यादि । शिशिराः मयूखाः यस्य तस्मिन शिशिरमयूखे चन्द्रे दहति सति मरणमनुकरोति निश्चेष्टो भवति मृत इति यावत् । मदनस्य विशिखः तस्मिन् मदन-विशिखे कामबाणे पतति सति अतिविकलतरः विलपति । विलापः परिदेवनमित्यमरः । ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

दहतीति । हे सखि ! राधे ! तव विरहे वनमाली शिशिरमयूखे चन्द्रे दहति तापं जनयति मरणमनुकरोति मृतकल्पो भवतीत्यर्थः पततीति क्वचित्पाठः । स तु सुगमः किञ्च तव विरहे मदनविशिखे पञ्चशरजाते जातावेकवचनं पतति प्रविष्टे सति अथवा एकत्वविवक्षितं एकस्मिन् पतति सति किमुत अनेकेषु इत्यर्थः । विलपति हा हतोऽस्मीति पतति । न केवलं स्वयं प्रलपति अपितु विकलीकरोति तत्रत्यान् इतिशेषः । स्वविलापेन तत्रत्यान् विकलचित्तान करोतीत्यर्थः । अनेन तस्यावश्यमनुग्राह्यता सूचिता । अत्र अभूततद्भावेत्यादिना च्वि प्रत्ययः । तस्य च वीतिकारः च । विति दीर्घं पदद्वयमेतत् चातिरुहात् तव तातिङिति भाष्यकारेण समासनियमनात् । एवं प्रभावतीत्या-दावप्यूह्यम् । तत्तत्वं च यत् किञ्चदादिप्रयोगे ज्ञातव्यम् । २ ॥

**ध्वनति मधुपसमूहे श्रवणमपि दधाति ।**

**मनसि बलितविरहे निशि निशि रुजमुपयाति ॥ ३ ॥**

---

॥ सर्वाङ्गसुन्दरी ॥

मधु पुष्परसं पिवन्तीति मधुपाः । भ्रमरास्तेषां समूहः, तस्मिन् भ्रमरनिचये शब्दायमाने सति कर्णमपि दधातीति, कराभ्याम् आच्छादयतीत्यर्थः । बलितः अतिशयेन प्रादुर्भूतः विरहो यतस्तस्मिन् बलितविरहे संभक्तविच्छेदे निशायाः मनसि निशि निशि रुजमुपयाति । निशि सुरतकालत्वादप्राप्तसुरतस्य कामपीडा भवती त्यभिप्रायः ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

ध्वनतीति । हे सखि ! राधे ! वनमाली मधुपसमूहे ध्वनति झंकृतिं कुर्वति सति श्रवणं कर्णमपि दधाति आच्छादयति । विरहिणां भ्रमरविरुतस्य कर्णशूलायमानत्वादिति भावः । तथा निशि निशि प्रतिनिशं मनसि बलितविरहे प्रवर्द्धितविश्लेषे सति चरित इति केषुचित्पाठः । तदाप्ययमेवार्थः रुजं दुःखम् उपयाति प्राप्नोति रात्रे विरहिणामति- दुःखकारित्वादितिभावः ॥ ३ ॥

वसति विपिनविताने त्यजति ललितधाम ।
लुठति धरणिशयने बहु बिलपति तव नाम ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

वसति विपिनविताने त्यज्यति ललितधामेति । रुचिर गृहं त्यक्त्वा वनमाश्रयतीत्यर्थः । विरहाकुलत्वादेकत्र स्थित्यभावाद्वितानशब्दोपादानम् । लुठति धरणितरेव शयनं तत्र धरणी शयने इति भूमिशय्यां करोतीत्यर्थ । बहुविलपति तव नामेति । तव नामधेयादन्यतरस्य सुखान्न निःसरतीत्यर्थः ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

वसतीति । हे सखि ! वनमाली विपिनविताने वनविस्तारे विस्त्रीर्णवने इत्यर्थः । वितानग्रहणं विरहिणः श्रीकृष्णस्य विरहवेदनापकरणहेतुभूत यथेष्टसंचारार्थमुक्तमित्यवगन्तव्यम् । वसति तिष्ठति । न केवलं वनवासमात्रम् अपितु ललितधाममनोहरमन्दिरं त्यजति त्वां विना तादृशे मन्दिरे किमिति स्थातव्यमिति मुञ्चतीत्यर्थः ।

अनेन नात्याशक्तिः सूचिता । न केवलं विरहे मन्दिरत्यागः अपितु धरणिशयने भूप्रदेशे लुठति विरहवेदनावशात् गात्रपरिवर्त्तनं करोति इत्यर्थः । न केवलं भूलुण्ठनमात्रमपितु तव नामधेयंभवन्नामधेयं बहु बहुवारं बिलपति । हे राधे ! मां त्यक्त्वा गता शीघ्रमागत्य मामालिङ्ग्य इत्यादिप्रकारेण तव नामग्रहणपूर्वकं जल्पतीत्यर्थः । अत्र यथा लोके पुत्रादिवियोगदुःखितः स्वधामत्यागपूर्वकमतिदुःखकरमहारण्यादौ अटति लुठनादिकं च करोति तद्वत् कृष्णोऽपि इत्युपमाध्वनिरूह्यः ॥ ४ ॥

भणति कवि जयदेवे विरहविलसितेन ।
मनसि रभसविभवे हरिरुदयतु सुकृतेन ॥ ५ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

विरहविलसितेन कविश्चासौ जयदेवश्चेति कर्मधारयः। कवि जयदेवे भणति सति सुकृतेन मनसि हरिरुदयत्विति योजना। हरितिति विरहविलापेन हेतुना यदुत्पन्नं सुकृतं पुण्यं तेन गायतां शृण्वतां च हृदि हरिरुदितो भवत्वित्यर्थः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

भणतीति। विरहस्य हरेर्वियोगरूपश्रृङ्गारस्य विलसितं विलासः भावे क्तः तेन "इत्थं भावे तृतीया" विरहविलसितरूपमित्यर्थः गीतमिति वा शेषः। अथवा सहार्थे तृतीया वा कवि जयदेवे भणति वदति सति रभसः गीतश्रवणजनितसन्तोषस्तस्य विभव आधिक्यं यस्मिन् परिपूर्णं तु हर्षे इत्यर्थः एतादृशे मनसि श्रोतॄणां मनसि अधिकरणे सुकृतेन गीतश्रवणजन्यपुण्येन हरिः गदितः गीतवर्णितः श्रीकृष्णः उदयतु आविर्भवतु प्रत्यक्षीभवतु इति यावत् तथा च हरिसाक्षात्कारकामिभिरिदं गीतमवश्यं श्रोतव्यं पठनीयं चेति भावः। तात्पर्य्यं चायं पञ्चपदीप्रबन्धः संकीर्णप्रबन्धपरिगणनस्थले तस्यापि संग्रहात् ॥ ५ ॥

पूर्वं यत्र समं त्वया रतिपतेरासादिता सिद्धय-
स्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे पुनर्माधवः ।
ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमन्त्रावलीं
भूयस्त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं वाञ्छति ॥ २॥

---

॥सर्वाङ्गसुन्दरी॥

शेषार्थं श्लोकेन सूचयति । पूर्वमिति । राधे पूर्वं यत्र निकुञ्जे रतिपतेः कामस्य सिद्धयः आश्लेषादिकास्त्वया सार्द्धमासादितास्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थेषु माधवो भूयः प्रचुरस्त्वत्कुचकुम्भनिर्भरपरिरम्भामृतं वाञ्छतीति वाक्यार्थः स्थिरं भूयश्च भूरि चेत्यमरः । तस्मिन्नेवेत्येवकारोऽवधारणेऽपि सिद्धस्थानमिदमेवेति कृत्वा तत्रैव तच्चरतमुद्यतमित्यर्थः । नन्वेतदिति दुर्ल्लभं कर्म कथमल्पश्रमेण स महातीर्थगमनमात्रेण विनेष्टदेवताराधनेन सम्पद्यत इत्याह । ध्यायंस्त्वामनिशमिति त्वमेवेष्टदेवतेत्यभिप्रायः । इष्टदेवता च विनामन्त्रेणाप्रत्यक्षा न भवति यदुक्तं "मन्त्राधीनाश्च देवता" इत्यादि । जपन्निति । जपन्नपि तवैवालापमन्त्रावलीमिति ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

गीतशेषांशं श्लोकेन पूरयति । पूर्वमिति । यत्र यस्मिन् वानीरकुञ्जे येन माधवेन त्वया समं भवत्या सह, अथवा येन माधवेन समं त्वया वा रतिपतेः कामदेवस्य सकाशात् सिद्धयः कामक्रीडाः आराधिताः प्राप्ताः । अथवा कामदेवस्य सिद्धयः युव-युवतीघटनासामर्थ्यरूपकार्य्यसिद्धयः आराधिताः सम्पादिताः आपादिता इति पाठे तद्वत् । इदानीं स एव माधवः तस्मिन्नेव एकाधिकवारं कार्य्यसिद्धेर्दृष्टत्वात् तस्मि-

न्नेवेत्युक्तमित्यवगन्तव्यम् । निकुञ्जमन्मथमहातीर्थे लतामन्दिररूपे कामदेवस्यात्यन्त-विहारयोग्ये पुण्यक्षेत्रे । यद्वा मन्मथस्य महः स्त्रीपुंसानुकूलमेतदित्युद्भवो यत्र तत्र तत्क्षेत्रं च तस्मिन् रहः क्रीडानुकूलसमस्त्यमस्त्यत्येतदर्थद्योतनार्थमाकारः महातीर्थे त्य-खण्डं वा मन्मथेति योगिकं वा सर्वमखण्डं वा पुनः भूयोऽपि त्वामनिशं सर्वदान-स्येकदा, इदं तु तदेकायत्तता सूचनार्थमित्यवगन्तव्यम् । ध्यायन् चिन्तयन् न केवलं ध्यानमात्रमपितु तवैवालापः रहस्यवार्त्ताः एव मन्त्राः गुप्तभाषणानि तेषामावलिं परस्परं जपन् तया रहसि मां प्रत्येव मुक्तमित्यनेनाकारेण मधुरं भवद्वचनमीषदुच्चार-यान्नित्यं भूयः पुनरपि तव कुचकुम्भयोर्निर्भर परिरम्भः गाढालिङ्गनम् ।

"उपसर्गस्य घञमनुषेध बहुलमिति' दीर्घः स एवामृतं मोक्षं तं वाञ्छति काङ्क्षति लोके यथाशक्तिपुरुषः कर्याचित्तीर्थविशेषे एकवारं कार्य्यसिद्धिं प्राप्य स तस्मिन्नेव तीर्थे पुनरिष्टान्तरसिद्धये इष्टदेवतां ध्यायन तस्या एव नामावलिं जपंश्चामृतमेव वाञ्छति । तथा कृष्णोऽप्युक्तविशेषणविशिष्टः सन्नालिङ्गनामृतं वाञ्छति । धर्मतौल्या-दौपम्य प्रतीते दीपकानुप्राणितरूपकालङ्कारः ।

प्रस्तुतानां च सामर्थ्ये तुल्यधर्ममतम् । औपम्यं गम्यते यत्र दीपकं तन्निगद्यत इति लक्षणात् । तेन च यथा उक्त धर्माचरणेन सन्तुष्टा देवता क्षिप्रमेव ध्यातुरमृतं प्रयच्छति । तथा क्षिप्रमेव त्वयाप्यालिङ्गनामृतं दातव्यमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ २ ॥

॥ एकादशः प्रबन्धः ॥

गुर्जरीरागेण[1] गीयते ।

रतिसुखसारे गतमभिसारे मदनमनोहरवेशम् ।
न कुरु नितम्बिनि गमनविलम्बनमनुसर तं हृदयेशम् ॥
धीरसमीरे यमुनातीरे वसति वने वनमाली ।
पीनपयोधरपरिसरमर्द्दन[2]चञ्चलकरयुगशाली[3] ॥ ध्रुवम् ॥ १॥

॥सर्वाङ्गसुन्दरी॥

गुर्जरीरागेण गीयते । अभिसारिकेयं नायिका तथा चोक्तम्—

या च निर्लज्जिता चाचं मदेन मदनेन वा ।
अभियाति प्रियं साभिसारिकेति प्रकीर्त्तिता ॥

रतीति । यमुनातीरे वनमाली वसतीति योजना । कीदृशे, धीरसमीरे धीरो मन्दः समीरो यत्रेति विग्रहः । "सुगन्धं शीतलं मन्दं वर्णयन्ति समीरणमिति" कविसम्प्रदायः । तत्र धीरशब्दोपादानात् मान्द्यं यमुनातीरोपादानाच्छैत्यं पवनशब्दोपादानाद् वा क्षेपात्सौगन्ध्यं च वायोर्शेयम् । वसन्ते सर्ववनानामुत्पन्नकुसुमत्वाम् इत्यभिप्रायः । रतिसुखेत्यादि । हे नितम्बिनि ! गमनविलम्बनं न कुरु, तं हृदयेशं प्राणनाथमनुसरेति योजना कदाचित्सुरताभिलाषुको न स्यादित्याह । अभिसारे न गतमिति अकामुकस्य किमभिसारगमनेनेत्यभिप्रायः । "आकल्पवेशो नेपथ्यमित्यमरः" ॥ १ ॥

---

१ । ङ. केदाररागेण । २ । घ. छ. गोपीपीनपयोधरमर्दन ।

३ । ख. केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशालीत्यधिकः पाठः ।

॥श्रुतिरञ्जनी॥

गुर्ज्जरीरागेण गीयते। पुनरपि कृष्णस्य राधाविषयवाञ्छामेव वर्णयति। रतीति। गुर्ज्जरीरागेण गीयत इत्युक्तम्। तस्यायमभिप्रायः। जयदेवकवेर्गुर्ज्जरदेशत्वात्? देशस्थानां तस्याः प्रियत्वं पुनरपि गुर्जरीराग उत्क्षिप्त इत्यवगन्तव्यम्। एकतालीरागेण गेयम्। तत्र धीरसमीरेत्यादि वनमालीत्यन्तं ध्रुवपदं तु अत्र केषुचित् पुस्तकेषु वनमालीत्यस्योपरि गोपीपीनपयोधरमर्द्दनचञ्चलकरयुगशालीति ध्रुवपदान्तर्गतं लिखन्ति। केचित् प्रक्षिप्तमिति वदन्ति। तदयुक्तम्। तत्र कविप्रसिद्धनियमाभावात् समाप्तपुनरात्तारूप काव्यदोषस्यापि सम्भवाच्च। तथापि तेन सहैव ध्रुवपदं वाञ्छयते। अस्यामष्टपद्यां यथायोगं यत्तच्छब्दाब्दा ध्रुवपदं योजनीयं योजनाप्रकारस्तु व्याख्यानादवगन्तव्यम्।

गोपीनां गोपकामिनीनां पीनौ पीवरौ पयोधरौ तयोः मर्द्दनं कराग्रैः संस्पर्शं तत्र चञ्चलं चपलं यत्करयुगं तेन शाली रमणीयः अनेन त्वया शीघ्रमेव तदनुसरणं कर्त्तव्यम्। अन्यथा अन्यासक्तो भविष्यतीति भयं सूच्यते। अथवा बहुवल्लभोऽपि ताः परित्यज्य त्वामेकामेव प्रणीयावस्थित इति तव सौभाग्यं किमु वर्णत इति व्यज्यते। एतादृशो यो वनमाली श्रीकृष्णः धीर उद्दीपकत्वेन गभीरः अथवा धियं बुद्धिं राति गृह्णाति इति धीरो मनोहरः रा आदान इत्यस्माद्धातोरातोऽनुपसर्गे केतितिकः। एतादृशो समीरो मलयानिलो तत्र तादृशे यमुनातीरे कालिन्दीतटे भुवि वसति तिष्ठतीति तमनुसरेत्यन्वयः। कीदृशे यमुनातीरे कीदृशं तमित्याकाङ्क्षायां द्वयं विशिनष्टि, रतीति। हे नितम्बिनि! पृथुजघने! राधे! निषिध्यमानं विलम्बप्रसक्तिः, अनेन पदेन सम्बोधनमित्यवगन्तव्यम्। रतिसुखस्य सुरतजन्यसौख्यस्य सारो बलं यस्मात्तादृशे सततसुरतसुखसम्पादनसमर्थ इत्यर्थः। अथवा रतिसुखसारे सुरतसुखसारनिमित्ते अभिसारे अभिसरणक्रियायां गतमित्यर्थः। भवत्कर्म्माभिसरणशालिनमित्यर्थः।

नामसमेतं कृतसङ्केतं वादयते मृदुवेणुम्।
बहुमनुते[१] ननु तं तनुसङ्गतपवनचलितमपि रेणुम् ॥ २॥

अतएव जनमनोहरवेशमितिसमन्वयः। किञ्च अभिसरन्ति रतार्थमभिसारिका अत्रेत्यभिसारः। अभिसारिका विहारयोग्य इत्यर्थः। एतादृशे तीरे गतं स्थितमित्यर्थः। किञ्च मदनस्य कामदेवस्य मनोहरः अनुकूलो वेशो यस्य तादृशो मन्मथोद्दीपकवेशधारिणमित्यर्थः।

अत्र भाषान्तरे षशयोर्भेदाभावादन्त्यानुप्रासोपपत्तिरवगन्तव्या। अथवा मदनस्य मनो तद्धरतीति मनोहरः एतादृशो वेशो यस्य तादृशं मन्मथस्यापि स्पृहणीयवेशमित्यर्थः। उक्तं च साक्षान्मथन्मन्मथ इति श्रीभागवतादौ। अथवा मनोहरतीति मनोहरः। तादृशश्चासो वेशश्च मदनस्य मनोहर वेशो यस्य तादृशं प्राप्तमदनवेशमित्यर्थः। एतादृशं तं हृदयेशमनुसर शीघ्रं कृष्णमुद्दिश्य गच्छेत्यर्थः। **गमनविलम्बनं** यमुनातीरप्रयाणे कालक्षेपं न कुरु। आलस्यात् अमृतं विषमिति मनसि निधाय नायकगुणांश्चाकलय्य गमनविलम्बनं मा कृथा इत्यन्वयः। सुखसार इत्यत्र सु स्थिर इति घञ् प्रत्ययः। अत्र अभिसार इत्यत्र कर्त्तरि च कारकेत्यादिना घञ् प्रत्ययः ॥ १ ॥

॥ **सर्वाङ्गसुन्दरी** ॥

कदाचिदन्याङ्गना कामुकोऽभिसारगत इत्याह। नामेति। नामसमेतं यथा स्यादेवं

१। घ. बहुमनुतेऽतनु ते।

कृतसङ्केतं स कृष्णो मृदु यथा स्यादेवं वेणुं वादयत इति वाक्यार्थः कृतः सङ्केतो यस्येति विग्रहः। इहाहं तिष्ठामि राधे त्वामत्रागच्छेति नामसमेतं कृतसङ्केतमित्यस्यार्थः। कदाचिदसुशिक्षितत्वादन्यथावादमानो वेणुरन्यथा वदतीत्येतदाह। ते तव तनुसङ्गतपवनचलितमपि रेणुं बहुमनुत इत्यर्थः। धन्योऽसौ रेणुर्यस्त्वाः शरीरस्पर्शसुखमन्वभूदिति बहुमाननार्थः त्वदन्यनपेक्षस्य हरेः किं तत्र तनुसङ्गत वायुचलित धूल्याबहुमाननेनेत्यभिप्रायः। तनुसङ्गतपवनचलितमिति पूर्वं तनुसङ्गतः पश्चात् पवनेन चलित इति वा विग्रहः॥ २॥

॥ **श्रुतिरञ्जनी** ॥

नामेति। हे राधे! यः वनमाली नाम्ना भवदभिधानेन समेतमङ्कितं यथा तथा कृतः सङ्केतस्त्वदागमनसमयो वा यस्मिन कर्मणि तद्यथा तथा वेणुं वंशनालं मृदुश्रुतिसुखं यथा स्यात्तथा वादयते वाचयति। अथवा कृतसङ्केतः स्वैरावस्थानसमयो यत्रेति व्युत्पत्त्या इदं वेणुविशेषणं वा। किञ्च ननु हे राधे! यश्च वनमाली ते तव तन्वा शरीरेण सङ्गतः यः पवनः तेन चलितमानीतं रेणुमपि भूपरागमपि किमुत भवतीमित्यर्थः। बहुमनुते ननु गौरवेण पश्यति खलु इत्यर्थः। तनुसङ्गतः पवनश्चलितश्चेत्युभयं रेणुविशेषणं अस्मिन् पक्षे रेणुशब्देनाङ्गाराः चन्दनपरागो विवक्षितः। परम्परया भवत्तनुसम्बन्धेऽप्यादरः किल साक्षात्तव तनुसम्बन्धे किमु वक्तव्यमितिभावः। स वनमाली यमुनातीरे वसतीत्यन्वयः॥ २॥

पतति पतत्रे विचलति पत्रे शङ्कितभवदुपयानम् ।
रचयति शयनं सचकितनयनं पश्यति तव पन्थानम् ॥ ३॥

॥ सर्वाङ्गसुन्दरी ॥

परमथ्यमनुरागातिरेकमाह । पतत्रे पक्षिणि पतति सति वृक्षात् भूमावित्यधिगन्तव्यम् । पत्रे पलाशे विचलति प्राक् भूमौ पतति इत्यर्थादवगन्तव्यम् । शङ्कितभवदुपयानं यथा स्यादेवं शयनं शय्यां रचयति निर्मिमीते । शङ्कितं भवदुपयानं भवदागमनं यत्रेति विग्रहः । तथा सचकितनयनं यथा स्यादेवं तव पन्थानं पश्यति । सचकितनयनं यत्रेति विग्रहः ॥ ३ ॥

॥श्रुतिरञ्जनी॥

पततीति । हे सखि ! राधे ! स वनमाली पतत्रे वृक्षेषु सञ्चरन् पक्षिपक्षैकदेशे गरुति इत्यर्थः । पतति अधोगलति सतीत्यर्थः । अथवा पतत्रे पक्षिणि अत्र अवयवेनावयविलक्षणा पतति सशब्दमुत्पतति । किञ्च पत्रे शुष्कपत्रे विचलति वायुना चलति सतीत्यर्थः शङ्कितं भवत्या उपयानम् आगमनं यस्मिन् कर्मणि तत्तथा भवति तथा शयनं रचयति । क्रीड़ोचितकुसुमशय्यां रचयतीत्यर्थः निर्माति । अथच चकितमपराधजनितं यद्भयं तेन सहिते स चकिते तादृशे नयने यस्मिन् कर्मणि तद्यथा भवति तथा तव भवत्याः पन्थानम् आगमनमार्गं पश्यति । कदा वा सम्यगागमिष्यतीति भवदागमनमार्गं वीक्षत इत्यर्थः । स वनमाली यमुनातीरे वसतीत्यन्वयः । भवदुपयानमित्यत्र सर्वनाम्नो पुंवद्भावः । विचलितपत्रे इति क्वचित्पाठः । तदा चलनकर्मीकृत पत्र इत्यर्थः । पतत्र-विशेषणं चैतत् ॥ ३ ॥

मुखरमधीरं त्यज मञ्जीरं रिपुमिव केलिषु लोलम् ।
चल सखि कुञ्जं सतिमिरपुञ्जं शीलय नीलनिचोलम्
॥ ४ ॥

---

॥सर्वाङ्गसुन्दरी॥

हे सखि! मञ्जीरं त्यज कुञ्जं चलेति वाक्यार्थः। 'मञ्जीरोऽस्त्रिया-मित्यमरः। कथं नूपुरं त्याज्येत्याह। मुखरमिति सशब्दमित्यर्थः। नीचैरपि शब्दस्या-दित्याह। अधीरं धैर्यरहितमित्यर्थः। छलतस्त्वपण्डितम्। पुनः कीदृशं, केलिषु लोलं क्रीड़ासु चञ्चलं रतौ व्यस्ततादायकमिति यावत्। मुखरत्वात्। लोलत्वाच्चेष्टार्थ-प्रतिघातकतान् नूपुरस्योक्तारिपुरपिष्टार्थप्रतिघातको भवतीति रिपुमिवेत्युक्तम्। कीदृशं कुञ्जं, यदृच्छाभ्रमणार्थमागमिष्यतां जनानां दृष्ट्युपघातार्थमेतदुक्तम्। स्यान्निकायः पुञ्जराशित्यर्थः[१]। पथि तावदन्यजननिर्लक्षताहेतुमुपदेशं प्राह। शीलय नीलनिचोल-मिति नीलवसनं परिधेहीत्यर्थः। "निचोलः प्रच्छदपट इत्यमरः।" अभिसारिकेयम्—

दुर्वारदारुणमनोभववह्नितप्ता
पर्याकुलाकुलितमाननमुद्वहन्ती ।
निःशङ्किनी व्रजति सा प्रियसङ्गमानं
सा नायिका खलु भवेदभिसारिकेति ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

इदानीमभिसारिकागमनानुकूलसामग्रीमाह। मुखरमिति। हे सखि! राधे! यमुनातीरे यो वनमाली तिष्ठति तदभिसरणानुकूल्याय मुखरं नादशीलम् अधीरं

---

१। अथ सधर्मिणा स्यान्निकायः पुञ्जराशी तू तत्करः कूटमस्त्रियामिति कोशः अत्र न संगच्छते।

उरसि मुरारेरुपहितहारे घन इव तरलवलाके।
तड़िदिव पीते रतिविपरीते राजसि सुकृतविपाके ॥ ५॥

गमनकाले चञ्चलं केलिषु रतिक्रीडासु लोलं पलायनपरम् एतादृशं मञ्जीरं नूपुरं त्यज। चलेति। तिमिरपुञ्जोऽन्धकारपटलः तेन सह वर्त्तत इति सतिमिरपुञ्जम् अनेन जारविहारयोग्यता सूचिता। एतादृशं कुञ्जं कृष्णस्य वासभूतलतागृहं प्रतिचल गच्छेत्यर्थः अन्यथा समयो व्यर्थः स्यादितिभावः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे गौराङ्गि! रतिविपरीते रतिविपरीतावुपहितहारे मुरारेरुरसि राजिष्यसीत्यर्थः। वर्त्तमानसामीप्ये वर्त्तमानवत्, भविष्यति अर्थे लट्। सुकृतविपाके इति सप्तमी। पुण्यपरिपाके सतीत्यर्थः येनाशेषपुण्यं कृतं तेन हरेर्वक्षसि राजिष्यतीति यावत्। कस्मिन्नेवोरसीत्याह। घन इव तरलवलाक इति तरला चञ्चला वलाकापंक्तिर्यत्रेति विग्रहः। केवलं मुरारेरुरसि राजसीत्याह। तडिदिवेत्याह। अत्र कृष्णरसो येन राधायास्तडिताहारस्य वलाकया साम्यम्। अनेकेव शब्दत्वात्[१]। वाक्यार्थोपमेयम्। यदुक्तम् —

वाक्यार्थे नैव वाक्यार्थः कोऽपि यद्युपमीयते।
एकानेकेव शब्दत्वे सा वाक्यार्थोपमास्मृता ॥

इति ॥ ५ ॥

१। अत्र कृष्णस्य नीलत्वादुरसो मेघेन।

विगलितवसनं परिहृतरसनं घटय जघनमपिधानम् ।
किशलयशयने पङ्कजनयने निधिमिव हर्षनिधानम्[१] ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

उरसीति । हे पीते ! सुवर्णवर्णे ! उपहिता धृता न्यस्ता इति यावत् । एतादृशा हारा यस्मिन् तादृशे उपह्नितेति क्वचित्पाठः । तदोपहिता आनीता हारा यस्मिन् तादृशे प्राप्तहारे इत्यर्थः । अतएव तरलाश्चञ्चला वलाका यत्र तादृशे, अथवा तरलो हार-मध्यगः । तत्कल्पा वलाका यस्मिन् तादृशे घन इव नीलमेघ इव स्थिते यस्य मुरारेरुरसि वक्षस्थले सुकृतस्य त्वया पूर्वार्जितपुण्यस्य विपाके परिपाके फलोन्मुखे सतीत्यर्थ अथवा सुकृतलक्षणस्य परिपाकफलं यस्मिन् तादृशे रतिविपरीते उपरि सुरत इत्यर्थः । तडिदिव विद्युल्लतेव राजसि राजिष्यसि । वर्त्तमानसामीप्ये वर्त्तमानवद्वा इति लट् । यथा वलाकामालापरिवृत्ते नीलमेघे विद्युल्लता भासते तथा हारपरीते मुरारेरुरसि विपरीते भवत्यपि प्रकाशिष्यत इत्यर्थः । स वममाली यमुनातीरे वसतीत्यन्वयः । तथा च शीघ्रमेव तत्समीपं प्रतिगच्छेति तात्पर्य्यम् ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

किशलयशयेन पल्लवशय्यायां पङ्कजनयने श्रीकृष्णे जघनं घटयेति वाक्यार्थः । कीदृशं विगलितवसनं, पुनः कीदृशं परिहृतरसनं दूरीकृतकाञ्चिक-मित्यर्थः । अतएवापिधानं तिरोधानरहितम् । "अपिधानतिरोधानपिधानाच्छदानिच" इत्यमरः । पुनः कीदृशं निधिमिव हर्षनिधानं प्रमोदस्थानमित्यर्थः । अपनीत तिरो-

१ । ध. च. निदानम् ।

हरिरतिमानी[1] रजनिरिदानीमियमपि याति विरामम्।
कुरु मम वचनं सत्वररचनं पूरय मधुरिपुकामम् ॥ ७ ॥

---

धानस्य निधेरपि दर्शनाद्धर्षो जायते इत्यभिप्रायः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

गमनान्तरं किं कर्त्तव्यमित्याकांक्षायामाह। विगलितेति। हे पङ्कजनयने! कमललोचने! राधे! विगलितं श्रस्तं वसनं वहिःप्रावरणं वस्त्रं यस्मिन् तादृशम्। किञ्च परिहृता त्वयोद्धृता रसना किङ्किणी काञ्ची यस्मिन् तादृशम्। रसनोद्धरणं गीतरद? गोपनार्थमित्यवगन्तव्यम्। अपगतं पिधानं अन्तःप्रावरणवस्त्रं यस्मिन् तादृशं देशान्तरे हि कान्ताजघनप्रदेशे एकं स्वल्पवस्त्रं बद्ध्वा तदुपरि समीचीनं दुकूलादिकं वध्नन्तीति प्रसिद्धम्। हर्षस्य सन्तोषस्य निधानम् आस्पदम् एतादृशं जघनं श्रेणीविभागं विगलितवसनं परिहृतरसनमिति द्वयं विधेयविशेषणं वा तदाकृष्णेनेति शेषः। क्रियाविशेषणं वा किशलयशयने मुरारिविरचितपल्लवतल्पे निधूवननिधानमिव घटय कृष्णेन योजय इत्यर्थः। यः वनमाली वने वसति तेन जघनं घटय इत्यन्वयः। यथा धनातुरः सन्तोषनिधानं निधिं प्राप्य परिपूर्णकामो भवति तथा विरहातुरः कृष्णोऽपि भवदीयश्रोणीभागमवलोक्य निर्व्यथो भवतु इति तात्पर्य्यम्। देशान्तरे शसयोर्भेदाभावादन्त्यानुप्रासोपपत्तिः ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

हरिरतिमानीति। "मानश्चित्तसमुन्नतीरित्यमरः" अतिविलम्बात् त्वामनादृत्य

---

१। ख, ग, हरिरभिमानी।

**श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम् ।**
**प्रमुदितहृदयं हरिमतिसदयं नमत सुकृतकमनीयम् ॥ ८ ॥**

---

कदाचिदन्यामभिसरिष्यतीत्यर्थः । रजनीरिदानीमियमपि याति विरामम्, इति अतिविलम्बाद्रात्रिरध्यवसानं न यास्यतीत्यभिप्रायः ।

तस्मान्मम वचनं कुर्विति वाक्यार्थः । कीदृशं सत्वररचनं सत्वरा रचना परिपाटी यत्रेति विग्रहः किं तत्तव वचनमित्याह । पूरय मधुरिपुकाममिति । कोऽसौ मधुरिपुः काम इत्याह ॥ ७ ॥

॥श्रुतिरञ्जनी॥

तर्हि वनमाल्येवात्रागच्छतु इत्याकांक्षायामाह । हरिरिति । हे राधे ! यः वनमाली यमुनातीरे वसति स हरिः सर्वतापहरः । श्रीकृष्णः अभिमानी अहमेव सर्वदुःखहरः मद्दुःखशमनार्थम् अन्यत्र गच्छामि किमित्यहंकारसम्पन्न इत्यर्थः, अतएव स तु न यास्यतीत्यर्थः । तर्हि सर्वेषु पश्यत्सु मया कथं गन्तव्यमित्याकांक्षायामाह । इयमिति इयं रात्रिरपि विरामं निवृत्तं याति गमिष्यति । भविष्यति लट् । शीघ्रमेव रजनिरपि निवर्त्तिष्यत इत्यर्थः । तथा च त्वया विलम्बं न कार्य्यम् इति तात्पर्य्यम् । हरेऽभिसरणविषयवेशः, त्वरया सहित सत्वरा अभिसरणविषये त्वया प्रतिपादिकेत्यर्थः । तादृशी रचना निर्माणं यस्मिन् तादृशं मम वचनं कुरु । अनन्तरं च मधुरिपोः श्रीकृष्णस्य काममभिलापं पूरय परिपूर्णं कुरु । अन्यथा तव हानिरेव स्यादितिभावः ।

अत्र मधुरिपुशब्देन श्रीकृष्णस्य ग्रहणं तत्कामपूरणे विरहसमये राधातापकारि वसन्तादिरिपुक्षयं स एव विधास्यतीति द्योतनार्थमित्यवगन्तव्यम् ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

श्रीजयदेवे कृतहरिसेवे परमरमणीयं भणति सति, हे जनाः प्रमुदितहृदयं यथा

विकिरति मुहुः श्वासानाशां[१] पुरो मुहुरीक्षते
प्रविशति मुहुः कुञ्जं गुञ्जन्मुहुर्बहु ताम्यति ।
रचयति मुहुः शय्यां पर्य्याकुलं मुहुरीक्षते
मदनकदनक्लान्तः कान्ते प्रियस्तव वर्त्तते ॥ ३ ॥

---

स्यादेवं हरिं नमतेति योजना । परमरमणीयमित्युत्कृष्टरसं गीतमिति यावत् । कीदृशं सुकृतकमनीयं "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष इत्यमरः" ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । कृता हरिसेवा येन तादृशे श्रीजयदेवे परमरमणीयमत्यन्तमनोहरं गीतं भणति गदति सति प्रमुदितहृदयं सन्तुष्टचित्तं दयया सहितः सदयः लोकोत्कृष्ट-दयासम्पन्नः इत्यर्थः । अथवा दयाया सहिताः सदयाः तानतिक्रान्तोऽतिसदयः । अत्या-दय क्रान्ताद्यर्थे द्वितीयया इति समासः । दयावतां मध्ये परमोत्कृष्टदयासम्पन्नमित्यर्थः । एतेन तस्य सर्वथा सेव्यत्वमुक्तमित्यवगन्तव्यम् । त्यागशीलो दयापर इति । एतादृशं किञ्च, सुकृतं पुण्यमेषामस्तीति सुकृता, अर्श आद्यच्प्रत्ययः । तेषां कमनीयम् अभिलषणीयं सुकृतपरिपाकैकलभ्यमित्यर्थः । एतादृशं हरिं श्रीकृष्णं हे नराः नमत नमस्कुरुत येन भवतामिष्टसिद्धिर्भवेदिति भावः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

श्रीराधायाः शीघ्रगमनार्थमाह विकिरतीत्यादिश्लोकचतुष्टम् । हे

---

१ । ग. श्वासानासा ।
श्वासान्नासा इति पाठान्तरम् ।

कान्ते ! राधे ! तव प्रियः कृष्णो मदनकदनक्लान्तो वर्त्तत इति योजना। मदनः कदनं पापमिवेति विग्रहः। "कदनं पापकृष्णयोरिति विश्वः।" क्लान्ततामाह। विकिरतो त्याह। विकिरति मुहुः श्वासान्निति नागतैव सा प्रियेति कृत्वा मुहुः पुनः पुनः "शश्वदभीक्ष्णमसकृत्समाः" इत्यमरः। आशाः पुरो मुहुरीक्षते इति अधुना आगमिष्य-तीति कृत्वा। "आशाश्च परितश्चताः" "स्यात्पुरः पुरतोऽग्रतः" इत्यमरः। प्रविशति मुहुः कुञ्जं इति कदाचिदन्येव पथा समागत्य वा तिष्ठतीति कृत्वा गुञ्जन्मुहुर्बहुताम्यतीति वाष्पावृतकण्ठत्वादव्यक्तशब्दं कुर्वन् ग्लापयतीत्यर्थः।

कुञ्जं प्रविश्य त्वामपश्यन् हा कथं गुरुजनादिभयान्नागतेति कृत्वा रचयत मुहुः शय्यामिति मयि ह्यनुरागवशात्केन प्रकारेण गुरुजनान प्रतार्य्य साम्प्रतमेष्यतीति कृत्वा पर्य्याकुलं मुहुर्निरीक्षते। इति चतुर्दिशमवलोकयत इत्यर्थः। मच्चित्तजिज्ञासार्थं क्वचिदिहागत्य नित्यं वा तिष्ठतीति कृत्वा। हरिणी नाम वृत्तम्॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

पुनरपि कृष्णस्य विरहप्रकारमेवाह। विकिरतीति। हे कान्ते वल्लभे राधे तव प्रियः श्रीकृष्णः प्रियग्रहणं शीघ्रगमनसूचनार्थम्। श्वासान् विरहवेदनाजनितनिःश्वासान् मुहुरत्यन्तं विकिरति दिक्षु विक्षिपति पुरोऽग्रभागे आशां त्वदागमनपदवीं दिशं मुहु-रीक्षते। कदा राधा आगमिष्यतीति त्वदागमनमेव पश्यतीत्यर्थः। अथच मुहुः पुनरपि कुञ्जं आवासलतागृहं प्रविशति। कुञ्जं निर्विशतीत्यर्थः। मुहुर्गुञ्जन् प्रलपन्नित्यर्थः। बहु अधिकं यथा तथा ताम्यति ग्लानिं प्राप्नोति। "तमेशमामष्टाना (७-३-७४) मित्यादिना श्यनि दीर्घः। किं मुहुः शय्यां तल्पं रचयति आगते सज्जीकरोतीत्यर्थः। मुहुः पर्य्याकुलं यथा तथा ईक्षते, तदश्रुदृष्टिप्रसारं पश्यतीत्यर्थः तदा मदनस्य कदनं

त्वद्वाष्पेण[1] समं समग्रमधुना तिग्मांशुरस्तं गतो
गोविन्दस्य मनोरथेन च समं प्राप्तं तमः सान्द्रताम्।
कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थना
तन्मुग्धे! विफलं विलम्बनमसौ रम्योऽभिसारक्षणः॥ ४॥

---

तस्मै सुरताक्षेपः सन्नित्यर्थः। चतुर्थी तदर्थे (७-२-१३) त्यादिना समासः। अथवा मदनस्य कामदेवस्य कदनं बाणप्रयोगरूप युद्धं तेन क्लान्तः खिन्नः सन्नित्यर्थः। वर्त्तते तथा च विरहवेदनया प्रियः विकृतविविधचेष्टः आलोच्यापि त्वया अवश्यं गन्तव्यमिति तात्पर्य्यम्॥ ३॥

॥ सर्वाङ्गसुन्दरी ॥

त्वदिति। त्वद्वाष्पेण समं समग्रमधुना तिग्मांशुरस्त गत इति। सहोक्तिरलङ्कारः। न केवलं सूर्य्योऽस्तं गतः त्वद्वाष्पमपूययाद्योतकं त्वनुप्रातिकुल्यं चास्तं गतं तव मानभङ्गो जायत इत्यर्थः। गोविन्दस्य मनोरथेन च समं प्राप्तं तमः सान्द्रतामिति न केवलमन्धकारो नैविड्यं प्राप्तः गोविन्दस्य मनोरथोऽपि त्वनुसमागमप्रत्याशयेत्यर्थः। कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थनेति यथा चक्रवाकानां दीर्घः करुणस्वनो जातः तथा मम प्रार्थना दीर्घेत्यर्थः। तन्मुग्धे विफलं विलम्बनमसौ रम्योऽभिसार-क्षणः इति "यदद्यतस्ततोहेतावित्यमरः"। प्रियतमः उत्कण्ठतो रम्यश्चाभिसारक्षणः चिरमभ्यर्थनापरा प्रियसखी तथा गमनविलम्बनमिति राधायाः मूढत्वे हेतुः॥ ४॥

---

१। ख. घ. छ. त्वद्वाम्येन।
ग. त्वद्वामेन। त्वद्वाक्येन इति पाठान्तरम्।

आश्लेषादनुचुम्बनादनुनखोल्लेखादनुस्वान्तज-
प्रोद्बोधादनुसंभ्रमादनु रतारम्भादनु प्रीतयोः ।
अन्यार्थं गतयोर्भ्रमान्मिलितयोः सम्भाषणैर्जानतो-
र्दम्पत्योरिह को न को न तमसि व्रीडाविमिश्रो रसः ।५।

॥ श्रुतिरञ्जनी ॥

इतो विलम्बनं न कार्यमित्यत आह। त्वद्वाम्येनेति। हे मुग्धे ! कार्य्याकार्य्य-विचारशून्ये ! यस्मात्कारणात् तव वाम्येन वक्रभावेन समं सहेत्यर्थः "प्रत्ययोत्तर पदयोश्चेति (७-२-९८) युष्मदस्मदादेशश्च। "गुणवचनेत्यादिना ष्यञ्" (५-१-१२४) प्रत्ययः। तीक्ष्णांशुः सूर्य्यः अधुना इदानीं समग्रं सम्पूर्णं यथा भवति तथा अस्तम् अदर्शनभावं गतः। तवाभिसारणानङ्गीकार वक्रभावो गतः तदनुकूलः सूर्य्यास्तसम-योऽपि जातः, इत्यर्थः। किञ्च यस्मात् गोविन्दस्य श्रीकृष्णमनोरथेन भवत्या समं सम्भोगवाञ्छया समं तमोऽन्धकारः सान्द्रतां निविडभावं प्राप्तम्। कृष्णस्य भव-त्सम्भोगवाञ्छा उद्वेजका जाता तत्सहकारीभूतोऽन्धकारोऽपि उद्वेलो जात इत्यर्थः। अनेन प्रियानुसरणमवश्यकर्त्तव्यमिति सूचितम्। किञ्च यस्मात् कारणात् समाभ्यर्थना कृष्णसमीपं प्रति सर्वथा गन्तव्यमित्यादिर्भवद्विषयप्रियोक्तिपरम्परा। कोकानां "कोकश्चक्रवाक इत्यमरः"। करुणस्वनेन श्रोतॄणां करुणरसोत्पादकेन स्वनेन रुतेन सदृशी समा सती दीर्घा बहुकालव्यापिनी वर्त्तत इतिशेषः। अत्र रसपरक-त्वात् करुणशब्दः पुलिङ्गः यथा सर्वरात्रिवियोगिकोकरुताकर्णनेन जनानां मनसि दया जायते, तथा भवद्विषयमत्प्रार्थनावाक्यपरम्पराकर्णनादपि श्रोतॄणां करुणा जायते। तव तु केवलं न जातेति मत्प्रार्थना निष्फला स्यादितिभावः। किञ्च यस्मादसौ परिदृश्यमानः अभिसारक्षणः कृष्णं प्रत्यभिसरणसमयः रम्यः सर्वजनसम्मत इत्यर्थः। तस्मात्कारणाद्विलम्बनं न युक्तमितिभावः ॥ ४ ॥

॥ **सर्वाङ्गसुन्दरी** ॥

सम्प्रति अभिसारिकागमनोचितम् अन्धकारं वर्णयन्नाह। आश्लेषादिति। इह

तमसि दम्पत्योर्व्रीड़ाविमिश्रस्तु या, सम्बलितो रसः शृङ्गाररूपः केनाभूत् को नामोऽभूदिति तु सर्वत एवाभूदित्यर्थः। एतेनाभिसरन्तु राधिकायाः प्रोत्साहनमुक्तम्। कीदृश्योः दम्पत्योः। अन्यार्थं गतयोः परस्त्री परपुरुषार्थं गतयोरित्यर्थः। उक्तं शृङ्गारतिलके—

परस्त्री गमनोपायः कविभिर्नोपदिश्यते।
सुन्दरं किन्तु दिव्याङ्गनैं तत्तेनोपदिश्यते॥

पुनः कीदृशोः भ्रमेण भ्रान्त्या मिलितयोः, पुनः कीदृशोः आश्लेषादिना प्रीतयोः स्वान्तजप्रोद्बोधादिति कामप्रकाशनादित्यर्थः। सुप्तः खलु कामः अश्लेषादिना प्रबोधितक्षणमपि बिलम्बं न ददतीति रतारम्भे सम्भ्रमः। रतारम्भादन्विति रतारम्भस्य पश्चात्प्रवृत्ते रते इत्यर्थः। "अनु हीने सहार्थे च पश्चात्सादृश्ययोरपीति विश्वः।" कथं क्रीडाविमिश्रतारसस्येत्याह। सम्भाषणैर्जानतोरिति ननु चाज्ञानं यात्तत्प्रीतिरुपयुक्ता ज्ञानादनन्तरं तु अपुरुषस्य स्त्रीजारपतौ स्त्रियाश्च पुरुषाद्यङ्गनारतौ द्वेष्यात्सजागरुकत्वात्। उच्यते समदोषत्वाद्वेषाभावः। केचिदन्यार्थमन्दकार्य्यार्थेति व्याचक्षुः। तदसम्यक् रसस्य व्रीडाविमिश्रतानुपपत्तेः॥ ९॥

॥ श्रुतिरञ्जनी ॥

पुनरपि तमेव वर्णयति। अश्लेषादिति। हे राधे! इह तमसि प्रतीयमाने अन्धकारे अन्यार्थं प्रत्येककार्य्यान्तरार्थं वा गतयोः भ्रमात् अन्धकारजनित निजप्रयोजनादिसङ्केतमार्गापरिज्ञानरूपभ्रान्तेः।

मिलितयोः परस्परसंश्लिष्टगात्रयोः अतएव आश्लेषात् सम्बन्धनिमित्तालिङ्गनात् अनन्तरं चुम्बनादालिङ्गनान्तरभावाधरास्वादनात्। अनन्तरं नखोल्लेखात् अधरस्वादनान्तरभाविप्रेक्षत्करणात्। अनु पश्चात् स्वान्तजस्य कामस्य कान्तरतारम्भात्।

सभयचकितं विन्यस्यन्तीं दृशं तिमिरे पथि
प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीम् ।
कथमपि रहः प्राप्तामङ्गैरनङ्गतरङ्गिभिः
सुमुखि सुभगः पश्यन् स त्वामुपैतु कृतार्थताम् ॥ ६ ॥

---

उद्बोधानन्तरभाविसुरतकरणात् । अनु अनन्तरं प्रीतयोः कथमयत्नसिद्धः सम्भोगो जात इति परितुष्ट-चित्तयोरित्यर्थः । अनु अनन्तरं सम्भाषणैः सुरतानुकूलमधुरालापैः जानतोः परस्परस्वमवबुद्ध्य जायमानपरिचययोः अनेनान्धकारस्य गाढ़त्वं सूचितम् । उक्तं च—

विश्वं चाक्षुषमस्तु वस्तु हि तमः कैवल्य मौपाधिकं
प्राच्यादिव्यवहारहेतुविरहाद्दिङ्मात्रमेव स्थितम् ।
लिह्यन्तोभयहेतवः पटुभिरपेक्षोभरैर्भाति च
ध्वान्तानापघनेन वस्तु वसुना ज्ञातः स्वरेणा मूकः ॥ इति ॥

एतादृशोर्दम्पत्योर्जायापत्योः जायायाजम्भावोदम्भावो वेति दम्भावः । क्रीड़ाविमिश्रः इति क्वचित् पाठः । तदा लज्जासम्वलितः, अस्मिन पक्षे मुख्यदम्पत्योरनुचितकार्य्या-चरणाल्लज्जाया युक्तत्वादितिभावः । कोतु कौतुकः कः रसः शृङ्गारादिर्न भवतीति शेषः । सर्वोऽपि भवत्येवेत्यर्थः ।

अत सम्भवतो रसस्य लोकोत्तरतासूचनार्थं कः क इत्युक्तमिति ज्ञेयम् । तथा च एतादृशरसानुभवार्थमपि अस्मिन्नेव समये त्वयावश्यं यातव्यमिति तात्पर्य्यम् । पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे सुमुखि ! सखि ! सुभगः कृष्णस्त्वां पश्यन् कृतार्थतामुपैत्विति योजना । कीदृशीं

सभयं चकितं यत्स्यादेवं यथा स्यादेवं पथि तिमिरे दृशं नेत्रे विनस्यन्तीं केनचित् कुत्रचित् निष्ठताद्रक्षेऽहमिति नेत्रस्य सभयचकितत्वम्। पुनः कीदृशीं प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीं प्रतितरु इति तरौ तरावित्यर्थः। तमसि वृक्षेषु पुरुष-भ्रमात् मन्दता पदस्य ज्ञेया। पुनः कीदृशीं, कथमपि रहःप्राप्ताम्। अङ्गैरिति इत्थं-भूतलक्षणे तृतीया। अनङ्गतरङ्गिभिः अङ्गैरुपलक्षिता इत्यर्थः॥ ६॥

इति श्रीनारायणदासकृतायां श्रीगीतगोविन्दटीकायां सर्वाङ्गसुन्दर्य्याम् अभिसारिका वर्णने साकाङ्क्षपुण्डरीकाक्षो नाम पञ्चमः सर्गः॥

॥ श्रुतिरञ्जनी ॥

पुनरप्यन्धकारमेववर्णयनभिसरणस्य फलमाह। सभयचकितमिति। हे सुमुखि! राधे! प्रार्थनादिमानापगमनात् सुमुखित्वोपपत्तिः। तस्यास्तिमिरेऽन्धकारे अभिसरण-मार्गे सभयं भयेन मार्गगतः निम्नोन्नतादिप्रदेशजनितभीत्या यच्चकितं वैकल्यं तत् सहितं यथा तथा। अथवा चकितशब्दोऽपि भयपरः। तथा च भयचकितमित्यन्तं भयमिति यावत् तत् सहितं यथा तथा। अथवा भयं का वा द्रक्ष्यति इति साध्वसं सख्येकसहाया कथं गच्छामीति चकितमाश्चर्य्यम् आभ्यां सहितं यथा तथा दृशं विन्यस्यन्ती सावधानेन मार्गं पश्यन्तीत्यर्थः। प्रतितरु प्रतिवृक्षं मुहुरत्यर्थं स्थित्वा मन्दं शनैः पदानि पादन्यासान् वितन्वतीं विस्तारेण विक्षिपन्तीं यथा अत्यन्धकार-मार्गचिह्नभूतानि कुड्याकैरित्यर्थः। एतादृशैरङ्गैश्चरणादिभिः करणैः कथमप्यन्त-प्रयासेन रहः एकान्तं प्राप्तां त्वां भवन्तीं सुभगः भाग्यसम्पन्नः स कृष्णः पश्यन् वीक्ष्यमाणः सन् कृतार्थतामुपैतु प्राप्नोतु। यथा लोके स्वोद्देशेनातिप्रयासेनागतं जनोत्तममवलोक्यात्मनः कृतार्थतां मन्यते तथोक्तविधमवलोक्य कृतार्थो भवतु इत्यर्थः। अतश्च प्रियचित्तोल्लासार्थं त्वयाधुनैव अवश्यगन्तव्यमिति तात्पर्य्यम्॥ ६॥

इति श्रीगीतगोविन्दव्याख्यायां श्रुतिरञ्जिनीसमाख्यायां पञ्चमः सर्गः।

—c—

# षष्ठः सर्गः

॥ सोत्कण्ठवैकुण्ठः[१] ॥

अथ तां गन्तुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा ।
तच्चरितं गोविन्दे मनसिजमन्दे सखी प्राह ॥ १ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

अस्यां गाथायां वासकसज्जा वर्णनीया । तस्या लक्षणम्—

सा कान्ताभरणोपेता वासवेश्मनि संस्थिता ।
सम्भोगा ललिता या च वासकसज्जा तु सम्मता ॥

पुनश्च—

वासवेश्मनि सुकल्पिते तल्पे या समागमविधिं विदधाना ।
तिष्ठति प्रियसमागमसज्जा तां मुनिर्वदति वासकसज्जाम् ॥

अपिच—

नानाविभूषणविभूषितचारुगात्रा
तल्पांशुको मतमतीव करोति यत्नात् ।
या नायिका गमनमार्गवतीव नेता
सा कथ्यते कविवरैरिह वासकसज्ज ॥ ?

---

१ । ग. धन्यवैकुण्ठः
घ, छ. कुण्ठवैकुण्ठः ।

यण्डमहजस्स्व वच्छेलच्छि मुहुं कोष्ट्र हस्मिस ंकान्तम् ।
दिसइमिय परिह्र ण सर्वस्व सुरविम्ब च ॥
त नमत यस्य वक्षसि लक्ष्मीमुख कौस्तुभे स क्रान्तम् ।
दृश्यते मृगपरिह्र ण शशिबिम्ब सूर्य्यबिम्बमिव ॥

अत्र कौस्तुभे प्रतिफलितलक्ष्मीमधुसूदनयोः स मुखोपशमनालिङ्गनादि-सम्भोगलालनात् वांसवेश्मनि सज्जीभूते सति समुदायार्थः । शशिविम्बसूर्य्यविम्बोपमानेनापि चन्द्रसूर्य्य-समागत परमानन्दासम्मोहलक्षण नाम मोक्षभावः सन्दर्शितः । चन्द्रसूर्य्यसमागमः कोऽर्थः शिवशक्तिसमागमः ।

राधां लतागृहे दृष्ट्वा तच्चरित गोविन्दे सखी प्राहेति योजना कीदृशीं, चिरमनुरक्तां यद्येव कथ तर्हि नागच्छतीत्याह । गन्तुमशक्तामिति कीदृशे गोविन्दे मनसिजमन्दे कामेन निरुत्साहिकृते इत्यर्थः । आर्य्या नाम छन्दः ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

एव राधां कृष्णाभिसरणे उन्मुखीकृत्य सखी कृष्णमाह अथेति । अथास्मिन् सर्गे वासकसज्जा वर्ण्यते । तल्लक्षण तु पश्चात् कथ्यते । अथ राधायाः कृष्णाभिसरणोन्मुखी-करणानन्तर सखी गन्तु कृष्णसमीप प्रतियातुम् अशक्तां विरहकृताङ्गकार्श्येनासमर्थां चिर चिरकालम् अनुरक्तां अनुरागसमेतां राधां लतागृहे कुञ्जकुटीरे दृष्ट्वा तस्या राधायाश्चरित विरहवेदनाप्रकार मनसिजेन कामदेवेन कुण्ठमाणे कामशरपीड़िते इत्यर्थः । एव विधे गोविन्दे श्रीकृष्णेः प्राह ब्रूते । ब्रूवः पञ्चानामादित आह ब्रूव इति तावत् । ब्रूव आहादेशश्च । अत्र वर्त्तमानार्थ एव ग्राह्यः न भूतार्थप्रयोगः । तत् प्रतीते भ्रान्तित्वात् । तदुक्त वामनेम – "अहो भूते शलन्तमत्तृमादिति ॥ १ ॥

॥ द्वादशः प्रबन्धः ॥

गुण्डकिरीरागेण[१] गीयते

**पश्यति दिशि दिशि रहसि भवन्तम् ।**
**तदधर[२]मधुरमधुनि पिवन्तम् ।**
**नाथ हरे ! सीदति राधा वासगृहे ॥ ध्रुवम् ॥ १ ॥**

॥ सर्वाङ्गसुन्दरी ॥

गुण्ड़किरी मल्लाररागेण गीयते । श्लोकोक्तमर्थं गीतेन प्रतिपादयन्याह । पश्यतीति । हे हरे ! हे नाथ ! सा राधा वासगृहे सीदतीति योजना । स्वपतावप्यतिनिरपेक्ष्या त्वय्येवानुरक्तेति द्योतनार्थं नाथशब्दोपादानं तच्चरितमित्याह । पश्यतीत्यादि । सर्वत्र त्वां पश्यतीत्यर्थः । यो यस्य भावेन लिप्तः सुखेनेतरेतावास तदाहितसंस्कारात्सर्वं पश्यति तन्मयमित्यर्थः । भवन्तं कीदृशं, तदधरमधुरमधूनि पिवन्तम् । तस्या अधरस्तदधरं, तस्य मधुरं मधूनीति षष्ठीसमासः । यदि मय्येव चासौ अनुरक्ता, तत्कथं मत्सकाशं नायातीति कृष्णप्रतिवचनमाशङ्क्याह ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

कृष्णे प्राहेत्युक्तं तत्प्रकारमेव विषदयति । पश्यतीत्यादि । गुण्ड़किरीरागेण गेयमित्युक्तं तस्यायमभिप्रायः । गुण्ड़क्रियया गुर्ज्जरी सपत्नीत्वात्तदवस्थानानन्तरं तस्यावस्थानं युक्तमिति षट्तालेन गेयम् । अत्र नाथ ! हरे ! इत्यादि वासगृहे इत्यन्तं

---

१ । ग. मल्लार रागेण । छ. नटरागेण । गोण्डकरी, गुणकरी इति वा पाठः ।
२ । त्वदधर इति पाठान्तरम् ।

त्वदभिसरणरभसेन वसन्ती[1]।
पतति पदानि कियन्ति चलन्ती ॥ २ ॥

---

ध्रुवपदम् । तस्यार्थः । हे नाथ ! दीनरक्षक ! हरे ! सर्वदुःखहारिन् ! कृष्ण ! अथवा नाथ हरिः पशुः तस्य सम्बोधनम् । तस्य पशुकल्पसम्बोधनं च सातिशयं क्लिश्यन्तीं राधां श्रुत्वापि तत्समीपानभिसरणादवगन्तव्यम् । प्रक्रिया तु हरतेर्वृत्तिनाथयोः (३-२-२५) पशाविति नाथोपपदाद्धरतेरीन् प्रत्ययः । पशोः पराधीनसञ्चरणात् उपाधिकत्वयुक्तमित्यवगन्तव्यम । तथा च हे पशुकल्प कृष्ण ! वासगृहे क्रीडामन्दिरे राधा सीदति क्लिश्यति । पाघ्राध्मा (३-१-१२७) इत्यादिनासीदादेशः । अवसादनप्रकारमेव विषदयति पश्यतीति । हे कृष्ण ! तस्या राधायाः अधरमेवमधुरः मधुर-पदार्थः तस्य मधूनि मधुरसान् रहसि एकान्ते पिवन्तं पातारं पातेः पिवादेशः । एतादृशं भवन्तं त्वां दिशि दिशि प्रतिदिशं पश्यति । निरन्तरत्वद्भावनया असन्निहितमपि सन्निहितमिव पश्यतीत्यर्थः । अतएवसीदतीत्यन्वयः ॥ १ ॥

॥सर्वाङ्गसुन्दरी॥

त्वदिति । त्वदभिसारहर्षेण चलन्तो पदानि चलन्ति पतति आगन्तुमसमर्थेत्यर्थः ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

त्वदिति । हे कृष्ण ! त्वदभिसरणरभसेन तत्समीपगमनवेगेन हर्षेण वा रभसो वेगहर्षयोरित्यमरः । सह वसन्ती वर्त्तमाना । अथवा वसन्ती लतामन्दिरे वर्त्तमाना त्वदभिसरण रभसेन कियन्ति कतिपदानि चलन्ती सती त्वत्समीपमभिसरणोत्कण्ठया कतिचित् पदानि गच्छन्ती अतश्च त्वद्वियोगदुःखेन कृशाङ्गी सती मध्ये गन्तुमसमर्था स्खलद्गतिर्भवतीत्यर्थः । प्रसीदेति । २ ॥

---

१ । ग. वदन्ती । लुलन्तीति पाठान्तरम्
घ. बलन्ती ।

विहितविशद्विषकिशलयबलया ।
जीवति परमिह तव रतिकलया ॥ ३ ॥

मुहुरवलोकितमण्डनलोला[१] ।
मधुरिपुरहमिति भावनशीला ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

सा परं केवलं तव रतिकलया जीवतीति वाक्यार्थः । कीदृशी, विरह-विषदविषकिशलयबलया । विहित विषदानां सितानां विषकिशलयानां मृणाल-पल्लवानां बलयाः कङ्कणानि ययेति विग्रहः । बाह्यसन्तापं विषकिशलबलयैरपनुदन्ती-त्यन्तःसन्तापं स्मर्यमाणया तव रतिकलयेत्यभिप्रायः ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

विहितेति । तर्हि पतनेन कथं हानिः इत्याशङ्क्याह । हे कृष्ण ! सा राधा इह अस्मिन् पतनसंशये विहितानि विषदविषकिशलयानाम् अच्छमृणालपल्लवानां बलयानि यस्याः तादृशी सती तव रतिकलया रतिकेलिलेशेन सुरताभिलाषेणेति यावत् परं जीवति । पतने सत्यपि समनन्तरं सम्भविष्यद्रतिलेशेन सा परं जीवति न तु प्रकारान्त-रेण इत्यर्थः । एवं विधासीदतीत्यन्वयः ॥ ३ ॥

॥सर्वाङ्गसुन्दरी॥

मुहुर्वारम्वारमवलोकितमण्डनेन लीला प्रियानुकृतिर्ययेति विग्रहः ।

१ । मण्डललीला इति पाठान्तरम् ।

त्वरितमुपैति न कथमभिसारम् ।
हरिरिति वदति सखीमनुवारम् ॥ ५ ॥

---

प्रियानुकृतिलीलेति नाट्यालोचने । मधुरिपुरहमिति भावनशीलेति ध्यानेन त्वन्मयत्वादित्यभिप्रायः ॥ ४ ॥

॥श्रुतिरञ्जनी॥

मुहुरिति । हे कृष्ण ! सा राधा ! मुहुः अवलोकितानि कृष्णमनोरञ्जनार्थम् एतानि अलङ्करणानीति बुद्धया वीक्षितानि यानि मण्डनानि हारकेयूरादीनि तेषु लीला क्रीडा यस्याः सा तादृशी अथवा अवलोकितानि कृष्णसमागमाभावादेतानि व्यर्थानि जातानि यस्यास्तादृशी । पुनः किम्भूता मधुरिपुः श्रीकृष्णः अहमहमेव अत्राहं त्वं··· ···अहं मधुरिपुरेव । अत्र मधुरिपुत्वं विधेयम् । अनेन प्रकारेण भावनशीला पूर्वमावयोरभेद एव इदानीं किमिति नयतीत्येवंविधभावनस्वभावेत्यर्थः । अतएव भवता विना जीवनं वृथेति सीदतीत्यन्वयः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

द्रुतं कथमभिसारं हरिर्नायातीति अनुलक्षणं सखीं वदतीति वाक्यार्थः । ध्यानभङ्गात् कृष्णात् पृथगात्मानं कृत्वेत्यभिप्रायः ॥ ५ ॥

॥श्रुतिरञ्जनी॥

त्वरितमिति । हे श्रीकृष्ण ! राधा हरिः कृष्णः अभिसारं प्रत्यागमनं अथवा मयाधिष्ठितं सङ्केतस्थानं वा त्वरितं शीघ्रं कथं नोपैति न प्राप्नोति इति सखी माम् अनुवारं पुनः पुनः वदति अहमशक्त्या न गच्छामि स एव समर्थः । कथं नायातीति मामनुवारं भणतीत्यर्थः । पुरातनीमावयोः प्रीतिं इदानीन्तनीं मदीयावस्थां

शिलष्यति चुम्बति जलधरकल्पम् ।
हरिरुपगत इति तिमिरमनल्पम् ॥ ६ ॥

भवति विलम्बिनि विगलितलज्जा ।
विलपति रोदिति वासकसज्जा ॥ ७ ॥

---

न जानन्नपि किमिति नायातीति अत्यन्ताश्चर्य्यं सूचयितुं किमिति शब्दप्रयोग इति भावः । सर्वथावयोर्वावगन्तव्यमिति तात्पर्य्यम् । अतएव दूषणाभिप्रायेण नाथ हर इति सम्बोधनोपपत्तिः । अतएव सीदतीत्यन्वयः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

कृष्ण आगत इतिकृत्वा मेघसदृशं प्रचुरमन्धकारं शिलष्यति चुम्बति चेति वाक्यार्थः । एकतानेन चिन्त्यमानं वस्तु परितः स्फुरतीत्यभिप्रायः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

शिलष्यतीति । हे नाथ ! हे कृष्ण ! जलधरकल्पं नीलमेघसमानच्छायम् अनल्पं बहुलं प्रभुमित्यर्थः । एतादृशं तिमिरम् अन्धतमसम्, सादृश्यात् हरिः श्रीकृष्ण उपगतः मत्समीपं प्रत्यागत इति बुद्ध्या शिलष्यति परन्तु चुम्बति तथा च निरन्तरं त्वदाकारभावनशीलां तां त्वम् उपेक्षितुं नार्हसीति तात्पर्य्यम् ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

भवति त्वयि विलम्बिनी सति सा विगलितलज्जा सती विलपतीति चेति

श्रीजयदेवकवेरिदमुदितम् ।
रसिकजनं तनुतामतिमुदितम् ॥८॥

---

वाक्यार्थः कीदृशी वासकसज्जा । वासगृहे सुसंभृतेत्यर्थः ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

हे नाथ ! हे श्रीकृष्ण ! वासको नाम प्रियसङ्गमहेतुर्वा भावः तदुक्तं—

वारश्च ऋतुकालश्च प्रवासादागतक्रिया ।
प्रसाधनं चतुष्ट्या नायिकायास्तथोत्सवः ॥
नवोढाभ्युपपत्तिश्च षडेते वासकाः स्मृताः ॥ इति तान्

सज्जीकरोतीति वासकसज्जिका नाम काचिन्नायिका तस्या लक्षणं तु—

प्रत्यागमनवेलायां भूषयन्ती मुहुर्मुहुः ।
केलिगृहमथात्मानं सा स्यात् वासक सज्जिका ॥ इति ॥ एवं

विधा सा राधा विलम्बिनि त्वयि सङ्केतमन्दिरागारे कालक्षेपं कुर्वती सति विगलित लज्जा सती विलपति परिवेदनं करोति । विलापः परिदेवनमित्यमरः । न केवलं विलपति परं तु रोदिति अश्रुमोचनं करोति । विलापो नाम वियुक्तप्रियवस्तुगुणानुवर्णनात्मक-वाक्योच्चारणम् । तदनन्तरकृत्यं रोदनम् । रोदितीत्यत्र रुदादिभ्यः सार्वधातुकमिडा-गमः ॥ ७ ॥

॥सर्वाङ्गसुन्दरी॥

श्रीजयदेवकवेरिदमुदितं, कर्त्तृ रसिकजनमतिमुदितं कुरुतामित्यर्थः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । उदितमुक्तं श्रीजयदेवकवेरिदं गीतं रसिकजनं सङ्गीतसाहित्यसार-

विपुलपुलकपालिः स्फीतसोत्कारमन्त-
र्जनितजड़िमकाकुव्याकुलं व्याहरन्ती ।
तव कितव विधायामन्दकन्दर्पचिन्तां
रसजलधिनिमग्ना ध्यानलग्ना मृगाक्षी ॥ २ ॥

---

स्वेदिनम् अतिमुदितम् । अत्यन्तसन्तुष्टं तनुतां कुरुताम् । आमेडत (३-४-६०) इत्यामदेशः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे कितव ! अमन्दकन्दर्पचिन्तां विधाय मृगाक्षी राधा तव रसजलधिनिमग्ना विभूवेति वाक्यार्थः । रसजलधिरिति रसः शृङ्गारः स एव जलधिरिति समुद्रः विशालत्वात् तस्मिन् निमग्ना इति विग्रहः । ननु यदि समुद्रपतिता सा तत्कथं तत्रा-विलम्बं तेन जीवतीत्याह । ध्यानलग्नेति । तव तत्राप्यनुसन्धानं कर्त्तव्यम् । यथा कश्चित् समुद्रपतितः कुशकाशावलम्बं कुरुते तथा साप्युपायान्तराभावेन तवं ध्यान-लग्नेत्यभिप्रायः । कीदृशी विपुलपुलकपालिरिति, विपुलपुलकपालिः रोमाञ्च पङ्क्तिर्यस्येति विग्रहः । "पालिरध्यङ्कपङ्क्ति" इत्यमरः । रसः सात्त्विकभावः तथा रोमाञ्चः शैत्यजोऽम्बुधौ । पुनः कीदृशी; स्फीत शीत्कारं यथा स्यादेवं व्याहरन्ती रसेन समुद्रभूतः शीत्कारः शैत्यजोऽम्बुधौ । अन्तर्जनितजडिकाक्विति क्रियाविशेषणम् । अन्तरन्तरे जनितः योऽसौ जड़िमा जडत्वं तेन जाता या काकुः स्त्रीयां व्याकुलध्वनिरित्यर्थः । "काकुस्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वने" रित्यमरः । "रसोऽवस्था विशेषः स्याज्जडिमा जाड्यमम्बुधौ"

उक्तं च शृङ्गारतिलके—

अकाण्डे यत्र हुंकारो दृष्टिस्तब्धागतिः स्मृतिः ।
श्वासाः समधिकं कार्श्यं जडतेयं स्मृता यथा ॥ इति ॥

कितवेति शठाख्यो नायकविशेषः। यदुक्तं —

प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम्।
मुक्तापराधचेष्टाश्च कुटिलोऽसौ शठो यथा ॥ इति ॥

मालिनीनाम वृत्तम् ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

इतोऽपि सा त्वया अनुग्राह्या इत्याह। विपुलेति। हे कितव! धूर्त्त! उन्मत्तकितवो धूर्त्त इत्यमरः। कितवत्वं च अन्यापरिचितः सन् चिरपरिचित प्रियापरिभवकारित्वेनावगन्तव्यम्। एतादृश हे कृष्ण! विपुला पुलकपाली रोमोद्‌गमपरम्परा यस्याः सा तादृशी सती अथवा विपुला पुलकपाली यस्मिन कर्मणि तद्वत् इति वाक्यं च। स्फीतः प्रभूतः सीत्कारो यस्मिन् यथा तथा शीत्कार इत्यनुकरणशब्दः। अन्तःकरणं देहान्तः प्रवेशो वा, अत्र जनितो यो जडिमा त्वद्वियोगजनितजाड्यं तेन या काकु हृदि स्थितार्थप्रकाशकस्वरविशेष। कायत्यथान्तरमिति काकुः। यद्वा इषदर्थे चेति कु शब्दस्य का देशः। कुः भूमिः। तत्रत्यस्थितवस्तुप्रतीते ईषद्भूमिस्वरविशेषः। काकुरिति। "काकुःस्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः।" तया काक्वा व्याकुलं यथा भवति तथा व्याहरन्ती भवन्तं ब्रुवाणा, किञ्च रसः शृङ्गारः सम्भोगाभिलाष्ये वा स तस्य जलधिः समुद्रः जलानि धीयन्ते अत्र इति जलधिः। "कर्मण्यधिकरणे चेति (३-३-९३) किं प्रत्ययः। तत्र निमग्नान्तरारवशा इत्यर्थः। शृङ्गारस्य सम्भोगविप्रलम्भभेदेन बहुविधत्वाज्जलधिकल्पत्वमित्यवगन्तव्यम्। अतएव ध्यानलग्ना ध्यानं भवद्विषयचिन्ता तत्र लग्ना असक्ता निरन्तरं भवद्ध्यानपरायणा इत्यर्थः। एवंविधा सा मृगस्याक्षिणी यस्या सा तादृशी, अथवा मन्दा अनल्पा कन्दर्पचिन्तां तां कामकृतमनः पीड़ां विधत्ते विधास्यति। वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट्। यदि मद्वाक्याद् इदानीमेव तत्समीपं प्रति त्वं न

अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि सञ्चारिणि
प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति।
इत्याकल्पविकल्पतल्परचना-संकल्पलीलाशत-
व्यासक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥ ३ ॥

---

यासि तर्हि त्वद्वियोगवेदनया तस्यां चरमावस्थायां गतायां समनन्तरमेव तवामन्द कन्दर्प कृतव्यथा भविष्यतीति भावः अथवा रसजलधिनिमग्ना शृङ्गाररससमुद्रविरहमाणा अतएव ध्यानलग्ना कोटिकन्दर्पलावण्यभवन्मूर्त्तिध्याना सती कन्दर्पजनिता या चिन्ता कन्दर्पचिन्ता तां कृष्ण एव साक्षात् कन्दर्पः तदतिरिक्तः कश्चन मन्मनः पीडाजनकः कन्दर्पो नास्त्येवंरूपां भावनामित्यर्थः विधत्ते कुरुते। तथा च तथाविधायास्तस्याः मनसि पीडा परिहाराय त्वया शीघ्रमेव गन्तव्यमिति तात्पर्य्यम्। अत्र ध्यातृसामान्यं च ध्वन्यते। तत्र रोमाञ्चादेस्तु सम्भवत्वात् ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

अङ्गेष्वाभरणं करोतीति समेत्य कृष्णो मादृशीं दृष्ट्वा मन्दमना भविष्यतीति कृत्वा एतेनाकल्पः " आकल्पवेशौ नेपथ्यमित्यमरः"। पत्रेऽपि सञ्चारिणि प्राप्तं त्वां परिशङ्कत इति एतेन विकल्पः। शयिष्यति वितनुते शय्यामिति, आगत्येह कृष्णः शयित इति कृत्वा एतेन तल्परचना सङ्कल्पलीलाशतव्यासक्तापि वरतनूरेषा त्वया विना निशां न नेष्यति मरिष्यतीत्यभिप्रायः। कुतो विरहखिन्नायाः सुरतावाप्तिं विना वेशादिव व्यवशय्यमाना दुःखहानिः। उक्तं च—

कीचके दहति त्वदलाभेन मन्मथो मामवारितः।
प्राप्तकान्तस्य दायित कुतः शान्तिरवारिता ॥ इति ॥

इति श्रीकविराज श्रीनारायणदासकृतायां श्रीगीतगोविन्दटीकायां सर्वाङ्गसुन्दर्य्यां वासकसज्जावर्णने सोत्कण्ठवैकुण्ठो नाम षष्ठः सर्गः।

॥श्रुतिरञ्जनी॥

पुनरपि एतस्या एवावस्थान्तरं विज्ञापयति । अङ्गेष्विति । हे नाथ ! वरतनुर्लिङ्गिताङ्गी एषा राधा बहुशोऽनेकवारम् अङ्गेषु करचरणाद्यवयवेषु आभरणं केयूरादि आभरणानि जातावेकवचनमेव करोति न्यास्यति । स्वस्य वासकसज्जिकात्वात् भवदागमनसम्भावनया अङ्गानि पुनः अलङ्कृतानि आचरतीत्यर्थः । अतएव पत्रे पर्णेऽपि किमुत अन्यस्मिन्नित्यर्थः संचारिणि चलति सति त्वां प्राप्तमागतं परिशङ्कते । तव ध्यानवशात् चलितं तृणादिकमप्यायान्तं भवन्तमेव तनुते इत्यर्थः । अनेनात्यासक्तिः सूचिता । अतएव शय्यामागतः तव स्थानयोग्यं तल्पं वितनुते कुसुमादिभिः सज्जीकरोतीत्यर्थः । अथ चिरं बहुकालं ध्यायति शरणागतं त्वां चिन्तयतीत्यर्थ । अथवा चिर ध्यायति । अनागतं भवन्तं ज्ञात्वा किमिति नागतमिति विचारयतीत्यर्थः । इत्यनेन प्रकारेण यः आकल्प विकल्पः अङ्गेष्वाभरणारोपविकल्पः तल्परचना संकल्पः शय्यासज्जीकरणोद्योगस्ताभ्यां, यच्चान्यलीलाशतं विलासपरम्परा तेन च त्रिभिर्व्यासक्ता परायत्तचित्तापि किमुत साधनेनेति भावः । त्वया विना भवन्तं विना पृथग्विने (२-३-३२) त्यादिना तृतीया । निशां रात्रिं न नेष्यति नेतुं न समर्था इत्यर्थः । यथा कश्चनवियोगी वियोगकालीनां व्यथां व्यासङ्गादिनापनयति इयं तु व्यासङ्गचित्तापि वियोगकालीनां व्यथामपनेतुं समर्था इति तद्व्यतिरेके प्रतीते व्यतिरेकालंकारः—

शब्दे वार्थे वाक्षिप्ते औपम्ये वस्तुनोर्द्वयोः ।
यद्भेदकथनं योऽयं व्यतिरेक उदाहृतः ॥

इति लक्षणात् । अनेनानयोरत्युत्कृष्टं प्रेमरूपं वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । निशेत्यत्र टापं टे बहुलानामिति टाप् ॥ ३ ॥

इति श्रीगीतगोविन्दव्याख्यायां श्रुतिरञ्जनीसमाख्यायां षष्ठः सर्गः ॥

—०—

# सप्तमः सर्गः

॥ नागरनारायणः ॥

अत्रान्तरे च कुलटाकुलवर्त्म-पात-
संजातपातक इव स्फुटलाञ्छनश्रीः।
वृन्दावनान्तरमदीपयदंशुजालै-
र्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः॥ १ ॥

---

॥सर्वाङ्गसुन्दरी॥

अस्मिन्सर्गेऽपि विप्रलब्धा वर्णनीया। तथाहि तल्लक्षणमुक्तं नायिकालक्षणे—

अहरहरनुरागाद्दूतिकां प्रेष्यपूर्वं
सरभसमभिधाय क्वापि सङ्केतकं वा[२]।
न मिलति खलु यस्या वल्लभो दैवयोगात्
प्रवदति भरतस्तां नायिकां विप्रलब्धाम्॥

इति भरताचार्यः। तां विप्रलब्धां वदति उत्तरगीतार्थं श्लोकद्वयेनावतारयति। अत्रान्तरे वृन्दावनान्तरमंशुदिपैरिन्दूरदीपयदिति योजना। कीदृक् दिक्सुन्दरीवदन-चन्दनाविन्दुरिन्दुः "विन्दुः स्यादप्यनुस्वारे विज्ञातरि च विप्रुषि" इति विश्वः। पुनः कीदृक् स्फुटलाञ्छनश्रीः, एतेन चन्द्रस्य परिपूर्णता प्रतिपादिता। अत्र कुलटाकुलवर्त्मपात संजातपातक इत्युत्प्रेक्षा कुलटा नाम सतीनां कुलवर्त्म पातेन वर्त्म-

---

१। घ. वर्त्मपात।

२। सरल समभिसृत्य क्वापि सङ्केतके च।

विरोधेन जातं पातकं यस्येति विग्रहः। यः पातकी भवति स खलु लाञ्छनेत्यभिप्रायः[१]। वसन्ततिलकं वृत्तम्॥ १ ॥

॥ श्रुतिरञ्जनी ॥

अथ कृष्णे आगमनविलम्बनं कृतवति प्रभूतं राधायाः विरहं गोतेन वर्णयितुं मदनोद्दीपकं चन्द्रोदयं वर्णयति। अत्रान्तरे इति। अस्मिन् सर्गे विप्रलब्धा नायिका। तस्याः लक्षणं तु—

क्वचित्संकेतमावेद्यितेनाथ वीक्षिता।
स्मरार्त्ता विप्रलब्धेति सूरिभिः परिकीर्त्तिता॥ इति॥

अत्रान्तरे अस्मिन् सर्गे राधाया अङ्गालङ्करणन्याससज्जीकरणकाल इत्यर्थः। कुलटानां पुंश्चलीनां "पुंश्चलीधर्षणी बन्धक्यसती कुलटाः समाः" इत्यमरः। कुलस्य वृन्दस्य वर्त्म मार्गः तत्र पातः पतनं तदनुकरणं तद्व्यभिचारदूषितत्वमित्यर्थः। तेन संजातमुत्पन्नं पातकं यस्य स तादृश इव उक्तं च चन्द्रोपालम्भे—

गुरुकलत्रमवाच्यमहोरतौ
गुरुकलत्रमसोनिरपत्रपः।
मुनिवधूपपतेर्दिशि जृम्भते
रमत एव हिता दर्शितादृश॥ इति॥

अथवा धातूनामनेकार्थत्वादिति न्यायेन कुलटा कुलवर्त्मनः पातो निरोधस्तेन संजातपातक इव चन्द्रोदये जारिणीनां सङ्केतमन्दिरगमनविरोधात् चन्द्रसमस्तवर्त्मघातुकत्वमित्यर्थोऽवगन्तव्यः। कुलटाकुलवर्त्मघात इति केषुचित् पाठः। तदास्फुटम्।

१। तस्य शृगालादिलाञ्छनं राज्ञा क्रियते।

## प्रसरति शशधरविम्बे विहितविलम्बे च माधवे विधुरा।
## विरचितविविधविलापं सा परितापं चकारोच्चैः ॥ २ ॥

---

तादृश इव स्फुटं लाञ्छनश्रीः कलङ्कशोभा यस्य पातककलङ्कयोरनिर्मलत्वात्तथोक्तमित्यवगन्तव्यम्। श्रीरित्यत्र समान्तः क प्रत्ययेन अदित्वात् तस्य, किञ्च दिक् सुन्दर्य्याः दिगङ्गनायाः वदनस्य वदनैकदेशललाटस्य चन्दनविन्दुः तिलकं जटिलतटललाटिकायमान इत्यर्थः। इन्दुश्चन्द्रः अंशुवृन्दैर्मयूखजालैः आशुदीपैरिति केषुचित् पाठः। तदास्फुटम्। वृन्दावनमध्यदेशमदीपयत्। वृन्दावनवर्त्ति राधा वासभूतमन्दिरसमीपे चन्द्रकिरणप्रसारो जात इत्यर्थः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

उच्चैर्विरचितविविधविलापं यथा स्यादेवं परितापं चकारेति योजना। कोदृशीवेत्याह। प्रसरति शशधरबिम्बे बिहितबिलम्बे माधवे विधुरेति। "विधुरं तु प्रविश्लेषे दुःखिते चाभिधेयवत्"। आर्य्याछन्दः। विप्रलब्धा वर्णनीया। तस्याः स्वरूपमाह—

> संकेतकं प्रियतम स्वयमेव दत्वा
> नैवागतः समुचिते समये च यस्याः।
> दूतीवचोऽमृतरसस्नपिताङ्गयष्टिः
> सा वर्णिता कविवरैरिह विप्रलब्धा ॥

श्लोकोक्तमर्थं गीतेनाह ॥ २ ॥

---

॥ श्रुतिरञ्जनी ॥

अनन्तरं कृत्यमाह, प्रसरतीति। विधुरा सा राधा शशधरविम्बे चन्द्रमण्डले

॥ त्रयोदशः प्रबन्धः ॥

मालवगौडारागेण[1] गीयते

कथित[2]समयेऽपि हरिरहह न ययौ वनम्
मम विफलमिदममलरूपनवयौवनम् ।
यामि हे कमिह शरणं सखीजनवचनवञ्चिता ॥ ध्रुवम् १ ॥

प्रसरति स्वावासभूतमन्दिरसमीपे किरणद्वारा प्रवर्त्तिनि सति विलसतीति यावत् । किञ्च माधवे श्रीकृष्णे विहितविलम्बे अस्यासक्तिरूपमराधं सूचयितुं माधव इत्युक्तमिति ज्ञेयम् । यद्वा माधव इति श्लिष्टम् । माधवे वसन्ते प्रसरतीति योज्यम् । उच्चैर्विरचिता कृताः विविधाः नानाप्रकाराः विलापदुःखोद्‌गारिवचनानि यस्मिन् कर्मणि तथा परितापं चित्तक्षोभं चकार निर्मितवान् । नानाविधैर्विलापैस्तत्रत्यान् प्राणिनः प्राप्त-खेदानकार्षीदित्यर्थः ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

मालवगौड़ारागेण गीयते । कथितसमयेऽपि यस्माद्वनं वृन्दावनं हरिर्न ययौ । अतः मम यौवनं विफलमिति वाक्यार्थः । प्रिये सौभाग्यानुकूलं हि यौवनमित्यभिप्रायः । "अहहेत्यद्भुते खेद", तारुण्यं यौवनं समे" इत्यमरः । संकेत-काले कथितः समयः शपथेऽपि चेति" विश्वः । ययावित्यागत इत्यर्थः । विनाप्युपसर्ग-योगात् या धातुरागतिमाचष्टे धातुरेव वाचकत्वान्न चोपसर्गो वाचक इति वाच्या, तस्य धातुमन्तरेण विचिकितार्था प्रत्यायकत्व नचोद्यं धातुरप्यवाचक इति वाच्यम् । तस्योपसर्गमन्तरेणापि विवक्षितार्थादन्यत्र गणपठितेऽर्थे वाचक अदृष्टा तस्माद्वाच-कतायां दृष्टसामर्थ्यात् धातुरेव विवक्षितार्थवाचको नोपसर्गो विपर्य्यायावत्युपसर्गस्य

१ । घ, छ, मालवरागेण । ङ, च, गौडमालवरागेण ।

२ । ललित इति पाठान्तरम् ।

पर्य्यवसितं द्योतकत्वम्। दृश्यते च। तद्द्योतकमन्तरेऽपि तद्योत्यार्थाभिधायको धातुः। यथा रघौ "नात्यायतकृष्टशार्ङ्ग"। अत्राकृष्टार्थे कृष्टेत्युक्तम्॥ १॥

॥ श्रुतिरञ्जनी ॥

मालवगौड़रागेण गीयते। विलापप्रकारमवस्फुटयति। कथितेत्यादि। मालवगौली-रागेण गीयत इत्युक्तम्। तस्यायमभिप्रायः। गौलीरागस्य गुण्डक्रिया सपत्नीत्वात् तदनन्तरं तत्स्थापनं युक्यमित्यपि तालेन गेयम्। तत्र यामीत्यादि वञ्चितेत्यन्तं ध्रुवपदमिदम्। तत्र हे इति अदृष्टसम्भावितदैवमात्रादिसम्वोधनम्। हे देव! सखी-जनस्य वचनैरिदानीमेव भवत्समीपं कृष्णं प्रत्यानेष्यामि। त्वया क्षणमात्रं प्राणान् धृत्वा स्थातव्यमित्यादिप्रकारैः प्रलापैः वञ्चिता प्रतारिता कृष्णस्यानयनाभावात् प्रतारणमवगन्तव्यम्। एवं विधोऽहं कं शरणं रक्षणं कं विलासगृहं चेति गम्यते। यामि प्राप्नोमि गृहपक्षे यामि प्रविशामि इत्यर्थः। लोकानुसारादेर्विमुक्तसाक्षमित्यव-गन्तव्यम्। "शरणं गृहरक्षित्रोरित्यमरः"। विलापे मूलमाह। कथितेति। हरिः कृष्णः कथितसमये सङ्केतकालेऽपि वनं वृन्दावनं प्रति न ययौ नागतः, अहह खेदे कष्टमित्यर्थः। "अहहेत्यद्भुते खेदे" इत्यमरः। समयभङ्गात्कष्टमित्यवगन्तव्यम्। अतएव तद्योतकाहहशब्दः प्रयुक्त इत्यर्थः। कृष्णस्यानागमने कथं कष्टमित्याशङ्‌क्याह ममेति। न केवलं समयभङ्ग एव कष्टत्वहेतुः अपि तु मम इदं परिदृश्यमानममलं लोको-त्तरसौन्दर्य्यसम्पन्नरूपं स्वरूपं यौवनमपीत्यपि शब्दार्थः। यौवनं च विफलं निष्फलं जातमिति शेषः। सम्भवतो वस्तुनो न भोक्त्यन्तभावेन ष्फल्यम्। अतएव महत्कष्टमिति-भावः। उक्तं च—

वर्षाकाले प्रयाणं यौवनकाले च दारिद्र्यम्।
वाल्ये स्नेहवियोगस्त्रीणि च दुःखानि भवन्ति लोके॥१॥

यद्नुगमनाय निशि गहनमपि शीलितम्।
तेन मम हृद्यमिदमसमशरकीलितम् ॥ २ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

यदनुगमनाय सङ्गमाय निशि गहनं वनमपि शीलितं वाञ्छितं तेन कृष्णेन हेतुना ममेदं हृदयमसमशरकीलतं कामबाणप्रतिपूर्वमित्याह। सेवावैरीहरिः। "उक्तं च अयं च पूर्वं प्रतिमाविशेषो यः सेव्यमानो रिपुतामुपैतीति ॥" २ ॥

॥ श्रुतिरञ्जनी ॥

यदेति। किञ्च यस्य श्रीकृष्णस्यानुगमनायानुनसरणायान्वेषणायेति यावत्। निशि रात्रौ गहनमरण्यमपि शीलित मालोचितमित्यर्थः। एतेन तदनुसरणायानुचितमिति कार्य्यं कृतमिति सूचितम्। स्त्रीणां रात्रावरण्यादिभ्रमणस्य लोकविरुद्धत्वादितिभावः। तेन कृष्णेन इदं परिदृश्यमानं मम हृदयम् असमशरेण कामेन शीलितं बिद्धम् अथवा शर इति तन्त्रेणोपपत्तिः। सकृदुचरितमनेकोपकारकमपि तद्विदः। तेनायमर्थः। सम्पन्नः असमशरस्य कामस्य शरैः बाणैः कीलितं खण्डितं वल्लभकृतापेक्षायां सङ्कतसमये असमशरपीडनाद् वल्लभेनैव तत्कृत्यमित्यवगन्तव्यम्। तथा च अनुसर्त्तुं प्रहरणमत्यन्तानुचितम्। अतएव कं शरणं यामीत्यन्वयः। अत्रानुगमशब्देऽश्लीलदोषो देशभेदात् परिहर्त्तव्यः। अनित्यत्वेन वा अनुसरणायेति वा पाठः ॥ २ ॥

अहह कलयामि वलयादिमणिभूषणम् ।
हरिविरहदहनवहनेन बहुदूषणम् ॥ ३ ॥

मम मरणमेव वरमिति वितथकेतना।
किमिह विषहामि विरहानलमचेतना ॥ ४ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

वलयादि कलयामि धारणमिति वाक्यार्थः । अहहेति खेदे । कीदृशं मणिभूषणं यस्येति विग्रहः । वलयादिधारणेन कथं श्रम इत्याह । हरिविरहे एव दहनो वह्निस्तस्य वहनेन धारणेन बहूनि दूषणानि यस्येति विग्रहः । स्त्रीणां प्रियालोकफलो हि वेषः इति । कुमारे अभिप्रायः ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

अहहेति । हे दैव ! हरिणा कृष्णेन विरहो वियोगस्तज्जनितयोः दहनः वह्निः तस्य वहनेन धारणेन हेतुना वलयादिमणिभूषणं कङ्कणमुखान्यलङ्करणानि भूषणमिति जातावेकवचनम् । बहुदूषणं जनापवादरूपो दोषो यस्मिन् तादृशं कलयामि मन्ये अहह कष्टम् । वियुक्ताया भूषणधारणस्यायुक्तत्वात् भूषणानां दूषणमवगन्तव्यम् । पूर्वं यानि भूषणानि सस्पृहं मया धृतानि तान्यपि इदानीं मया दूषणानि कलितानि इति कष्टत्वमवगन्तव्यम् । अथवा दहनवहनेन बहूनि दूषणानि मालिन्यादीनि यस्मिन् तादृशम् । विरहाग्निनिषेधादिति विकृत्य तद्रूपमित्यर्थः । तादृशं वलयादिभूषणं कलयामि धारयामि इव, अहह कष्टम् । असन्निहितवल्लभायास्तरुण्या अङ्गालङ्कारस्य निरर्थकत्वात्कष्टमित्यवगन्तव्यम् ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

वितथं केतनं गृहं यस्या इति विग्रहः । विरहिणानलवत् चेतना संज्ञा यस्याः सा तथा ॥ ४ ॥

**मामहह विधुरयति मधुरमधुयामिनी ।**
**कापि हरिमनुभवति कृतसुकृतकामिनी ॥ ५ ॥**

---

॥ श्रुतिरञ्जनी ॥

ममेति । अतिवितथं कृष्णागमनाभावात् अत्यर्थं व्यर्थं केतनम् आवास मन्दिरं यस्याः सा तादृशी अतएव अचेतना विवेकहीना अहं विरहानलं कृष्णवियोगवह्निम् इह लतामन्दिरे स्थिता सति इति शेषः। किमिति विषहामि विशेषण सहामि. कृष्णागमनसम्भावनाभावाविरहानलसदनं वृथेवेति भावः। अतश्च विरहानलसहनात् मम मरणमेव वरं दुःखानुषक्तबहुकालजीवनात् एकदैव मृत्युरेव श्रेयस्कर इत्यर्थः। अतएवादृशदुःखनिवारणाय कं शरणं यामीत्यन्वयः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

कापि कामिनी हरिमनुभवति, मां तु मधुरमधुयामिनी विधुरयतीति वाक्यार्थः। या निशा दूरस्थमपि प्रियं सङ्गमयति, सैव मामतिविघटयतीत्यभिप्रायः। कथं हरिमनुभवतीत्याह। कृतसुकृतेति । साधारणत्वात् सर्ववाक्यानामर्थाक्षेपाद्वाहमकृतेति खेदः। "मधुश्चैत्रे दैत्यभेदे मधुरौ स्वादुशोभनावित्यमरः" ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

मामिति । सदैव मधुरा मनोहरा या मधुयामिनी वसन्तरात्रिः अथवा मधु पुष्परसः तद्रात्रि गृह्णाति इति मधुरं मकरन्दहेतुरित्यर्थः, स चासौ मधुः वसन्तः तद्रात्रिरिति वा माम्, इहास्मिन् समये विधुरयति दुःखितां करोति दुःखवचनात् विधुरशब्दात् तत् करोति णिचि टि लोपः। किं च कृतं पूर्वजन्मन्यनुष्ठितं यत्सुकृतं पुण्यं तेन कृतो यः कामः कृष्णविषयाभिलाषः सोऽस्यास्तीति तादृशी पूर्वपुण्यपरिपाकवशात् कृष्णविषयाभिलाषवतीत्यर्थः। अथवा आहिताग्न्यादिष्वपि निष्ठायाः पर निपाते सति सुकृतेन पुराकृतपुण्येन कृतो निध्यादितो यः कामः कृष्णविषयाभिलाषः सोऽस्यास्तीति कामिनी न चात्र कर्मधारयात् मत्वर्थीय इति निषेधः। तस्यानित्यत्वं च। एकदेशिना एकाधिकरणेनेति सूत्रकारवचनात्। सर्वधनी सर्वकेशीत्यादि भाष्यकारवचनात् च अव-

कुसुमसुकुमारतनुमतनुशरलोलया ।
स्रगपि हृदि हन्ति मामतिविषमशीलया ॥ ६ ॥

---

गन्तव्यम् । प्रयोगश्च । "आकैलासाद्विसकिशलयच्छेदपाथेयवन्त" इति । एवं विधान्यपि लोकोत्तरसौभाग्यसम्पन्ना इहास्मिन्नेव समये हरिं श्रीकृष्णाख्यं ममप्राणेशमनुभवति । अथवा कापि काचित् कृतसुकृता च असौ कामिनी च कापि पुण्याङ्गना इत्यन्वयः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

अत्र पादयोर्वैपरीत्यमपि दृश्यते । हृदि स्थिता स्रक् पुष्पमालाप्यतनुशरलीलया कामबाणविलासेन मां हन्तीति वाक्यार्थः । कीदृशीं कुसुमसुकुमारतनुं कुसुमवत् सुकुमारतनुर्यस्या इति विग्रहः । अतनुशरलीलया, कीदृश्या, अतिविषमशीलया, अन्योहि बाणः क्षतं कृत्वा व्यथयति । कामबाणस्तु अवद्धत्वगप्यन्तर्भिनत्तीतिविषमशीलत्वम्[१] ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

कुसुमेति । हे देव ! हृदि न्यस्तेति शेषः । अपवाहाप्यधिकरणे स्रगपि कुसुममालिकापि किमुतान्य इत्यर्थः । अतिविषमम् अतिवक्रं शीलं स्वभावो यस्यास्तादृशी तया अतनोरनङ्गस्य शर लीलया बाणविलासहेतुना कृष्णं वदति । कुसुमसुकुमारातिमृदुला तनुर्यस्यास्तादृशीं मां हन्ति हिनस्ति हन्तीति अतीवान्यायः । स्रगादीनामुद्दीपकत्वेन विरहिजनतापकारित्वसम्भवात् हन्तीत्युक्तिरवत्रोद्धृयेति भावः अतएव कं शरणं यामीत्यन्वयः ॥ ६ ॥

---

१ । ख. श्रुतिरञ्जनीटीका नास्ति ।

अहमिह निवसामि न विगणितवन[1]वेतसा।
स्मरति मधुसूदनो मामपि न चेतसा ॥ ७ ॥

हरिचरणशरणजयदेवकविभारतो ।
वसतु हृदि युवतिरिव कोमलकलावती ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

व्याघ्रादभीतिमप्यविगणय्य तव सङ्गमसमाकाङ्क्षया अहं तिष्ठामि, चेतसापि मधुसूदनोऽपि मां न स्मरतीत्यर्थः । न विगणितवनवेतसेति । न विगणिता बहुवेतसा ययेति विग्रहः । निरनुबन्धकोऽय न शब्दस्तेन न लोपो नञ् इति लोपो न भवति ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

हरीति । हरिचरणशरणस्य जयदेवकवेर्भारती हृदि युवतिरिव वसन्तीति वाक्यार्थः । उभयं विशिनष्टि कोमलकलावतीति तत्र भारती । पक्षे कोमलत्वमनिष्ठुराक्षरत्वं कलावतीत्वं कवित्वशीलत्वम् । युवतीपक्षे कोमला मृदङ्गकला चतुःषष्टिरूपाः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

हरिचरणेति । कोमला मृदुला कला तालस्य सप्तमप्राणाः । तदुक्तम्—

कालो मार्गः क्रियाङ्गानि ग्रहोजातिकलालयः ।
यतिः प्रसारकश्चेति तालप्राणाः दशस्मृताः ॥ इति

सा अस्यास्तीति तादृशी । अन्यत्र कलाः कामकलाः यस्याः सन्तीति तादृशी ।

१ । ग. न गणितवन । घ. न विगणितबहु ।

तत्किं कामपि कामिनीमभिसृतः किं वा कलाकेलिभि-
र्बद्धो बन्धुभिरन्धकारिणि वनाभ्यर्णे किमुद्भ्राम्यति।
क्लान्तः क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षमः
सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जेऽपि यन्नागतः ॥ ३ ॥

कामकलास्तु —

अङ्गुष्ठे पदगुल्फजानुजघने नाभौ च वक्षस्थले
कक्षे गण्डकपोलदन्तवसने तालौ स्तने मूर्द्धनि।
शुक्लाशुक्लविभागतो मृगदृशमङ्गेष्वनङ्गस्थिति-
रूर्ध्वाधोगमनेन कामपथगः पक्षद्वये लक्षयेत् ॥

मूर्द्धोरस्थलवामदक्षिणकरे वक्षोरुहे शङ्खये
नाभौ गुह्यललाटजाठरकटी पृष्ठेषु तिष्ठत्यसौ।
कक्षश्रोणिभूतेषु च प्रतिपदामारभ्य कृष्णां ततः
श्वेतायं प्रभृति क्रमेण सुदृशां मूर्द्धानमारोहति ॥

अङ्गेष्वेषु मृगीदृशां मनसिजप्रस्तावना पण्डिताः
मात्राः षोडशचिन्तयन्ति विपुल ज्योतिस्फुलिङ्गाकृतिरिति ॥

एवं विधौ हरिचरणावेव शरणम्। आश्रमभूतं गृहं रक्षकं च यस्य तादृशस्य शरणगृह-रक्षित्रोरित्यमरः"। जयदेवकवेः भारती गीतरूपा तालसम्पन्नायुवतिरिव तरूणीवद् हृदि रसिकानां हृदये वसतु सदाविलसनात्। श्लेषोद्दीशितोपमा ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

प्रियस्यागमनहेतुं श्लोकेन कल्पयति। तत्किमिति। सङ्केतीकृत-मञ्जु-वञ्जुललता-

कुञ्जे यत् यस्मात् कारणात् कान्तो नागतस्तस्मात्कामपि कामिनीमभिसृतोऽभिसरति इति शङ्के। "मनोज्ञं मञ्जुलमिति" अमरः। मयि दृढानुरागोऽसौ कथमन्यामभिसरिष्यतीति विचिन्त्य वितर्कान्तरमाह। क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षम इति। अथेति वितर्कानन्तरं क्लान्तमनाः विक्लवचेताः सन्मना मनागल्पमपि प्रस्थातुमागन्तुमक्षमोऽसमर्थः वक्ष्यमाणं गीतं तावत् श्लोकेन संसूचयति॥ ३॥

॥ श्रुतिरञ्जनी॥

कान्तस्यागमने दोषमाह। तत्किमिति। हे देव! यस्मात् कान्तः श्रीकृष्णः सङ्केतीकृतः समयविषयीकृतो यो मञ्जुलवञ्जुललताकुञ्ज-मनोहर-वानीरवल्लीगृहं तस्मिन्नपि अन्यत्र किमुतेति भावः। अथवा अपिशब्दादवश्यमागन्तव्यमिति सूचितम्। यतो नायातः तस्मात् कारणात् अनागमने किञ्चिन्निमित्तं तर्कयामीति शेषः। तदेव निमित्तं विशेषेण दर्शयति। कामपीत्यादि। कान्त इत्यस्य सर्वत्राप्यन्वयः। कान्तः श्रीकृष्णः कामपि लोकोत्तरां कामिनीं अनुसृतः अनुसृतवान् किमित्यर्थः। अन्यथा मां विहायान्यत्रावस्थानयोगादिति भावः। किम्वा बन्धुभिः नर्म्मसखैः कलाः चतुषष्टिकामकलाः तासु केलयो विहरणानि तैर्बद्धः। वन्धुभिः सह कलाकेलिभिः विनोदी सन्नागत इत्यर्थः। अन्यथा कथं मत्परित्यक्तभावः। चतुःषष्टिकलास्तु—

अथेतिहासागमौ च वाक्यालङ्कारनाटकम्।
गायकत्वं कवित्वं च कामशास्त्रं दुरोदरम्॥

देशभाषालिपिज्ञानं लिपिकर्म चराचरम्।
सर्वाणि चोपदानानि स्वरशास्त्रं तु शाकुनम्॥

सामुद्रिकं रत्नकशास्त्रं रथाश्वगतिकौशलम्।
मल्लशास्त्रसूदकर्म्म भूरुहाणां च दोहदम्॥

गन्धवादो धातुवाद खन्यावादो रसस्य च।
कालवादोऽग्निसंस्तम्भः खड्गस्तम्भो जलस्य च॥

वचस्तम्भो वयस्तम्भो दूरश्याकर्षणमोचनम् ।
विद्वेषणोच्चाटनं च मारणं कालबन्धनम् ॥
पयसि प्लवचातुर्य्यं पादुकासिद्धिरेव च ।
वाक् सिद्धि पुटिकासिद्धिश्चैन्द्रजालकमेव च ॥
अदीनं नरदृष्टेस्तु वञ्चनं स्वरबन्धनम् ।
मणिमन्त्रौषधीनां च सिद्धयश्चौरकर्म च ॥
चित्रलोहाश्ममृदारु-वेणु-चर्म्माम्बरक्रिया ।
अदृश्यं करणं दूरकरणं मृगयारतिः ॥
वाणिज्यं पशुपाल्यं च कृषिरासवकर्म्म च ।
लावकुक्कुटमेषादियुद्धकरणकौशलम् ॥
चतुःषष्टिःकलाश्चैताः कलाविद्भिः प्रकीर्त्तिताः ॥ इति ।

अन्धकारिणि गाढान्धकारवति वनाभ्यर्णे वृन्दावनसमीपे भ्राम्यति । किमुत अन्धकारवशात् स्वसङ्केतमन्दिरमज्ञात्वा वनमिदं भ्राम्यति किमित्यर्थः ।

अन्यथा सत्यव्रतस्याङ्गीकृतपरित्यागस्य अयुक्तत्वादितिभावः । अथवा क्लान्तमना मद्वियोगवशात् खिन्नचित्तः सन् पथि सङ्केतमन्दिरागमनमार्गे प्रस्थातुमागन्तुमेवाक्षमः । असमर्थः किमित्यर्थः । अन्यथा शीघ्रमागामिनो विलम्बायोगादितिभावः । भ्रमतीत्यत्र "शमामष्टाना" (७-३-७४) मित्यादिना श्यनि वा दीर्घः । सन्देहोऽलङ्कारः ॥ ३ ॥

अथागतां माधवमन्तरेण-
सखीमियं वीक्ष्य विषादमूकाम्।
विशङ्कमाना रमितं कयापि
जनार्दनं दृष्टवदेतदाह ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

अथेत्युक्तवितर्कानन्तरं माधवमन्तरेण विनागतां सखीं वीक्ष्य आहेति वाक्यार्थः। कीदृशीं सखी विषादमूकां, अकृतकार्य्यत्वाद् विषादः, कीदृशी राधा जनार्द्दनं कयापि रमितमिति दृष्टवद्विशङ्कमाना दृष्टवदिति दृष्टमिवेत्यर्थः। रमित मत्र विपरीतमभिप्रेतं रमणे स्त्रियाः प्रयोजकत्वात्। उपेन्द्रवज्रावृत्तम् ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

एवं सखी प्रेक्षणानन्तरं राधायाः परितापगमकमुपवर्ण्य प्रेषितसखीवृत्तान्तमाह। अथेति अथ वल्लभानागमने निमित्ताभ्युहान्यनन्तरम् इयं राधामाधवं श्रीकृष्णमन्तरेण विना "अन्तरान्तरेण युक्तेति (२-३-४) द्वितीया। आगतामायाताम् अतएव विषादेन सखीमनोरथसाफल्यासम्पादनजनितखेदेन मूकां प्रतिवचनासमर्थां वीक्ष्य अवलोक्य जनानर्द्दयति पीड़यति इति जनार्द्दनः श्रीकृष्णस्तम्। अर्द पीडायामित्यस्माद्धातो ल्युट् प्रत्ययः।

अत्र राधाविषयपीडाकरत्वसूचनाय जनार्द्दनशब्दप्रयोगः। कयापि नायिकया रमितं क्रीड़ितं रमेर्ण्यन्तात् कर्मणि निष्ठा यद्वा कया सह रमितं रन्तारमिति कर्त्तरि निष्ठा वा। रमितुमिति तुमुलन्तः क्वचित् पाठः। तदा कया सह रमितुं क्रीडितुं गतमितिशेषः। विशङ्कमाना सती दृष्टवत् दृष्टे अर्थे सत्र्वं प्रत्यक्षेण पश्यन्तीवेत्यर्थ। अथवा दृष्टवत् उपपन्नमिव एतद् वक्ष्यमाणमाह ब्रूते ॥ ४ ॥

॥ चतुर्दशः प्रबन्ध ॥

वसन्तरागेण गीयते

## स्मरसमरोचितविरचितवेशा ।
## गलितकुसुमदर[1]विलुलितकेशा ।
## कापि मधुरिपुणा विलसति युवतिरधिकगुणा ॥ ध्रुवम्॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

वसन्तरागेण गीयते । किमाहेत्याह कामपीति । कापि युवतिः मधुरिपुणा समं विलसति इति योजना। कीदृशेन मधुरिपुणा मत्सकाशादधिकगुणा इत्यवगन्तव्यम्। कीदृशी भूत्वा विलसतीत्याह । स्मरसमरेत्यादिः । स्मरसमरः कामसंग्रामः तदर्थमुचिते वेशो ययेति केचिद् विजगृहुः, तदसम्यक्, निष्ठेत्यनेन विरचितशब्दस्य पूर्वनिपातः स्यात् । तस्मात् स्मरसमरोचितं यथा स्यादेवं विरचितो केशो ययेति विग्रहः कार्य्यः । पुनः कीदृशी । गलितकुसुमदरविलुलितकेशा, गलितेन श्रस्तेन कुसुमेन दरविलुलिता केशा यस्य इति विग्रहः विपरीते रते हि नार्य्या गात्रे लोलना भमत्येव । पुष्पश्रंसनं श्रस्ते च कुसुमे केशबन्धस्य नैपुण्यापगमादुपयुक्तमेव विलुलितत्वम् ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

आहेत्युक्तं तत्प्रकारमेव वर्णयति स्मरेत्यादि । अष्टतालिरागेण गेयम् । अत्र कापीत्याद्यधिकगुणेत्यादि ध्रुवपदम् । स्मरसमरो रतिः तस्या उचितमनुगुणं यथा तथा विरचितः घटितः वेशो यया सा तादृशी धृतसुरतानुगुणपरिकरेत्यर्थः। देशान्तरेशषयोरभेदादन्त्यानुप्रासोपपत्तिः। वेशवाची वेशशब्दोऽप्यस्त्री केषांचित् सम्प्रदायः।

१ । कुसुम भर इति पाठान्तरम् ।

हरिपरिरम्भणवलितविकारा ।
कुचकलशोपरि तरलितहारा ॥ २ ॥
विचलदलकललिताननचन्द्रा ।
तदधरपानरभसकृततन्द्रा ॥ ३ ॥

---

गलितानि सम्भोगसमयसमाकर्षणेन बन्धविशेषोपयुक्तगात्रपरिवर्त्तनादिना च स्रस्तानि कुसुमानि येभ्य: ततो दृशा समुत्कतया वस्त्राकर्षणेन अतएव दरमीषद्विलुलिता इतस्ततश्चलन्तः तथाविधाश्च ते केशाश्च । गलितकुसुमदरविलुलिता: केशाः यस्या: तादृशी अतएवाधिका लोकोत्कृष्टा गुणाः सौन्दर्य्यमधुरालापादयो यस्याः सा तथोक्ता एतादृशी कापि लोकोत्तरसौभाग्यसम्पन्ना तद्भोगो लोकोत्तरतां सूचयितुं कापीत्युक्तम् । अनिर्द्धारणे वा किमु शब्दः युवतिस्तरुणी मधुरिपुणा सह कृष्णेन सह विलसति इदानीं विहरतीत्यर्थः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

हरिपरिरम्भणेन चलितो विकारो रोमाञ्चादिः यस्या इति विग्रहः । विकारो मानसो भाव इत्यमरः । पुनः कीदृशी कुचकलशोपरि तरलितहारा पुरुषायिततायाः स्त्रियाः कट्यान्दोलनात उपयुक्तमेवदोलायमानहारत्वम् । २ ॥

। श्रुतिरञ्जनी॥

हरीति । हरिणा सर्वखेदहारिणा कृष्णेन परिरम्भणम् आलिङ्गनं तेन वलिता उदपन्ना विकारा: मदनविकृतयो यस्याः सा तादृशी अतएव कुचकलशोपरि पयोधरकुम्भोपरि तरलितामन्मथहारा यस्याः सा तथोक्ता एवंविधा कापीत्यादि ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

विचलद्भिरलकैर्ललितो मनोहर आननचन्द्रो यस्या इति विग्रहः । "अलकाश्चूर्ण-

**चञ्चलकुण्डलदलितकपोला ।**
**मुखरितरसनजघनगतिलोला ॥ ४ ॥**

---

कुन्तला इत्यमरः" । पुनः कीदृशी तदधरपानरभसकृततन्द्रा तस्य कृष्णस्य अधरस्तद्-धरस्तस्य पान रभसेम कृततन्द्रा रतिसुखजनितनिद्रा ययेति विग्रहः ॥ ३ ॥

॥श्रुतिरञ्जनी॥

विचलदिति । किञ्च विचलन्तः सुरतवशेन लोलमाना अलकाः चूर्णकुन्तलाः । "अलका श्चूर्णकुन्तला इत्यमरः" । तैर्ललितो मनोहर आनन्दचन्द्रो यस्या सा ललिताननचन्द्रेति क्वचित्पाठः । तदाकलितः व्याप्तः । किञ्च तस्य श्रीकृष्णस्य अधरपानरभसेन दशनवसनास्वादनवेगेन हर्षेण वा कृता व्याप्ता तन्द्रापारवश्यं यस्याः सा तादृशी कापीत्यन्वयः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

चञ्चलकुण्डलाभ्यां दलितौ घृष्टौ कपालौ यस्या इति विग्रहः । पुनः कीदृशी, मुखरित-रसन-जघनगति-लोला, मुखरिता रसना यत्रेति विग्रहः । मुखरितरसनस्य जघनस्य गत्यागतागतेन उत्पातनिपातेन लोला चञ्चलेत्यर्थः । विपरीत रते हि नार्याः कट्यान्दोलनादुपयुक्तमेव । मुखरितरसनत्वं बन्धश्चात्र हंसलीलनामा, लक्षणं तु निभृतनिकुञ्जे चोक्तम् ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

चञ्चलेति । चञ्चलाभ्यामुपरि स्फुरता वेगेन लोलाभ्यां कुण्डमण्डलाभ्यां ललितौ

दयितविलोकितलज्जितहसिता ।
बहुविधकूजितरतिरसरसिता ॥ ५ ॥

---

रमणीयौ कपालौ गण्डभागौ यस्याः सा तथोक्ता । किं च मुखरित उपरि सुरतानुकूल चालनेन नादितो रसना कलापो यस्य तादृशस्य जघनस्य कटिपुरोभागस्य । "पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः । गतिः उपरि सुरतानुकूलव्यापारविशेषः । अत्र लोला तृष्णासमेता, लोलश्च सतृष्णयोरित्यमरः । उपरि सुरतानुगुणं व्यापाराभिलाषवतीत्यर्थः । अथवा मुखरिता नादिता रसना किङ्किणी समेत मेखला यस्याः सा तादृशी च सा जघनगतिश्च तत्र लोलेत्यर्थः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

विलोकितेति नपुंसके भावे क्तः । दयितस्य विलोकनेन पूर्वं लज्जिता पश्चाद्धसिता चेति विग्रह । पूर्वकालित्यादिना समासः । अङ्गनायमानस्य हरेरुपरि पुरुषायितया युवतेरुपयुक्तावेव लज्जाहासौ । पुनः कीदृशी बहुविधकूजितरतिरसरसिता, बहुविध कूजितं दात्यूहपारावतादिसम्भवं बहुविधकूजितमेव रतिरसे रसितं शब्दितं यस्या इति विग्रहः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

दयितेति । दयितविलोकितं सुरतसमये प्रियकर्त्तृकावलोकनं भावे निष्ठा तेन लज्जिता अतएवाचरितं पुरुषायितं वल्लभेन ज्ञातमिति संजातलज्जा । अथवा लज्जिता सलज्जीकृता लज्जतेः कर्म्मणि निष्ठा, अतएव हसिता प्रियेण परिहसिता अतएव कृतकार्य्यं किमिति लज्जितेति कान्तेन हासकर्मणि कृते इत्यर्थः । अथवा दयितविलोकितं प्रियविषयावलोकितं तेन लज्जिता, अथवा दयितेन विलोकिता वीक्षिता अतएव लज्जिता

विपुलपुलकपृथुवेपथुभङ्गा ।
श्वसितनिमीलितविकसदनङ्गा ॥ ६ ॥

---

हसिता च उपरि सुरते स्वयमेव प्रवृत्तायामवलोकनमात्रेण कथं लज्जितेति तेन हसितेत्यर्थः। किञ्च बहुविधानि नानाप्रकाराणि यानि कूजितानि कामशास्त्रप्रसिद्धकपोतरुतादीनि यस्या सा तथोक्ता तादृशी च सा रतिश्च तत्र रसो अभिलाषः, "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसे" इत्यमरः। तेन रसिता संजातरसा रसेन रसिता इत्यत्र अयं ग्रामः एतौ ब्राह्मणग्रामः कृत इति बहूपपत्तिः। अथवा रतिरसः रतिस्थायिकः शृङ्गाररसः तत्र रसिता संजातरसा इत्यर्थः रतिकूजितानि तु रतिरहस्ये—

हूंकृति-स्तनित कूक इत्कृतं
　　फुत्कृतस्वनितरोदनादिकम् ।
मुञ्च पीडय गृहाण जीवय
　　त्राहि हा धिगिति शीत्कृतं विदुः ॥

तच्च लावुककपोतकोकिलाहंसकेलिविरुतैरुपक्रमैः ।
मिश्रितं च ग्रहणं प्रयुज्यते तच्चतद्विरुतमुच्यते बुधैः ॥ इति ॥

और्ध्वमुच्चलितकण्ठनासिका हूंकृत स्तनितमेघघोषवत् ।
तच्च विस्फुटनवचस्युत्कृतं फुत्कृतवरदघाति दित'[१] ॥ इति ॥ ५ ॥

॥सर्वाङ्गसुन्दरी॥

विपुलः पुलको यस्याः पृथुर्वेपथुर्भङ्गो यस्या इति विगृह्य द्वयोः कर्मधारयः।

---

१। ख. वरदघाति......दितमित्यस्य पाठः कीटदष्टः।

श्रमजलकणभरसुभगशरीरा ।
परिपतितोरसि रतिरणधीरा ॥ ७ ॥

---

वेगवत्वात् वेपथोर्भङ्गत्वेन निरूपणम् । "भङ्गस्तरङ्ग उर्मिर्वा" इत्यमरः । "वेपथुः कम्प इत्यमरः" पुनः । कीदृशी श्वसित निमीलित विकसदनङ्गश्वसितेन उपर्युपरि निश्वासनिर्गमेन निमीलितेन मुद्रितनेत्रया विकसन्नाविर्भवन्ननङ्गो यस्या इति विग्रहः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

विपुलानां विस्तृतानां पुलकानां रोमाञ्चानां पृथुवेपथोः प्रवलकम्पस्य भङ्गः प्रकारः परम्परा यस्या सा तादृशी अनेन सात्त्विकादय भावाः सूचिताः । तदुक्तम्—

स्तम्भः प्रलयो रोमाञ्चस्वेदो वैवर्ण्यवेपथू ।
अश्रु वैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः ॥ इति ॥

सङ्गे इति क्वचित्पाठः । तदा तैः सङ्गः सम्बन्धो यस्याः सा तादृशी संजातपुलका इत्यर्थः । किञ्च श्वसितेन सुरतवेगजनितनिःश्वासेन मिमीलितस्तिमितस्तच्छान्तौ विकसन् पुनराविर्भवदनङ्गः कामः यस्याः सा तादृशी, निःश्वाससमये उपरतसुरतव्यापारस्तदपाये पुनरनुसृतव्यापार इत्यर्थः । अनङ्गस्याविर्भावतिरोभावयोः सुरतव्यापारभावैकसमधिगम्यत्वादेव मुक्तमित्यवगन्तव्यम् । श्वसितेन मीलिता मुकुलिताक्षी पुनस्तदपाये विकसिदनङ्गादिना मन्मथेत्यर्थः ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

श्रमजलं घर्माम्भः, श्रमजलकणभरेण सुभगं शरीरं यस्या इति विग्रहः । परिपतितोरसीति अत्यन्तसुरतासहसामर्थ्यात् कृष्णवक्षसि निपतितेत्यर्थः । रतिरणधीरेति सुरतसंग्रामपण्डितेत्यर्थः । केचिदत्र रणवीरेति पठित्वा रतिसंग्रामशूरेति व्याचख्युः । तदसम्यक् परिपतितोरसीतानेन विरोधात् ॥ ७ ॥

श्रीजयदेवभणितहरिरमितम् ।
जनयतु कलिकलुषं परिशमितम् ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रमेति । श्रमजलकणानामुपरिसुरतखेदजनितस्वेदोदकविन्दुना भरो भरणमतिशयो वा "अप्यथातिशयो भरो" इत्यमरः । तेन सुभगं मनोहरं शरीरं यस्याः सा तथोक्ता श्रमजलकणानां शरीरशोभाहेतुत्वं च मुक्ताफलाकारादवगन्तव्यम् । अनेन चतुर्थ सात्त्विकभावः सूचितः । किञ्च रतिरणे सुरतसंग्रामे धीरा अनपेतधैर्य्यं अत्यन्त-शूरेत्यर्थः । अथवा रणधियं राति गृह्णातीति तादृशी सुरतसमये पतिचित्तानुसापना-दित्यर्थः । उरसि वल्लभवक्षस्थले परिपतिता पतनं गतवति सुरतव्यापारविशेषजनित-पारवश्येन तत्र न्यस्ताङ्गदृष्टिरित्यर्थः ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

श्रीजयदेवेन भणितं हरिरमितं कर्त्तृ कलिकलुषं परिशमितं जनयतु । कलिकालपापं विनाशयतु सुखयत्विति यावत् हरिरमितमिति विग्रहः । कर्मणि षष्ठीयं न कर्त्तृषष्ठी । विशङ्कमाना रमितं कयापि जनार्दनमित्युक्तेः हरेः प्रयोजकतानुपपत्तेः । गीतं श्लोकानामवतारयति ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । श्रीजयदेवेन भणितं गदितं हरेः । श्रीकृष्णस्य रमितं क्रीडितं यत्र तादृशं गीतं कर्त्तृ कलौ यत्कलुषं जनानां पापं तत्परिशमितं निवृत्तिं जनयतु करोतु । हरिक्रीडावर्णनात्मकमिदं गीतं गातॄणां श्रोतॄणां च सकलकलुषमपनयतु इत्यर्थः ॥ ८ ॥

विरहपाण्डुमुरारिमुखाम्बुज-
द्युतिरयं तिरयन्नपि चेतनाम् ।
विधुरतीव तनोति मनोभुवः
सुहृदये हृदये मदनव्यथाम् ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

चेतनां तिरयन धैर्यहेतुविवेकबुद्धिमपि तिरयन आच्छादयन सन्तप्तानां देवानां तिरयन्नपि विधुरयं मम मदनव्यथां तनोतीत्याशयः। कामो मम वैरी उल्लंघित-शासनत्वात्। तस्यायं चन्द्रः सौहार्दादुपकर्त्तृं कामो मय्यागं विधत्ते। यदुक्तम् "आत्मवर्ग हितमिच्छति सर्व इति।" किं प्रकारेण कामव्यथां तनोतीत्याह। विरह पाण्डुमुरारिमुखाम्बुजद्युतिरिति। मुरारे सहजकृष्णत्वात्, पाण्डुत्वनिर्वाहार्थं विर-हेत्युक्यं मुरारिमुखस्मारकतया पीडयतीत्यर्थः। अप्राप्य हि द्रव्यं सततं स्मर्य्यमाणं मनोव्यथां जनयतीत्यभिप्रायः। तिरयन्नातिखण्डयन्नित्यर्थः। तिरः शब्दात् करोत्यर्थे णिच्। "तिरोऽन्तर्द्धौतिर्य्यगर्थे" त्यमरः।" अस्योपमा-

उदितोऽयं च शुभ्रांशुः विस्तीर्य्य किरणामृतम्।
संयोगदुःखसंजातं दहत्येव वियोगिनम्॥

द्रुतविलम्बितं नाम वृत्तम् ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

एवं श्रीकृष्णेऽन्यासक्ति प्रकल्प्य तत्समये भासमानं चन्द्रमवलोक्य सुहृदि निवे-दितं दुःखं निवृत्तप्रायमितिन्यायं मनसि निधाय चन्द्रकृतां पीडां सख्यै निवेदयति। विरहेति। अये ! सखि ! अयं परिदृश्यमानो विधुश्चन्द्रः विरहेण मद्वियोगेन पाण्डु

॥ पञ्चदशः प्रबन्धः ॥

गुर्जरीरागेण गीयते ।

समुदितमदने रमणीवदने चुम्बनवलिताधरे ।
मृगमदतिलकं लिखति सपुलकं मृगमिव रजनीकरे ।
रमते यमुनापुलिनवने विजयी मुरारिरधुना ॥ ध्रुवम् १ ॥

शुभ्रं यन्मुरारिमुखाम्बुजं श्रीकृष्णवदनारविन्दं तस्य द्युतिः कान्तिरिव कान्तिर्यस्य तादृशः सन् वेदनां श्रीकृष्णवियोगदुःखं तिरयन् तिरस्कुर्वन्नपि विरहपाण्डुरश्रीकृष्ण-मुखसादृश्यत्वेन तन्मुखावलोकनजनितसुखसम्पादनद्वारा तद्विरहपरितापं निरा-कुर्वन्नपीत्यर्थः । अयमेव विधुः मनोभुवः कामदेवस्य सुहृन्मित्रं सन् हृदये मम मनसि मदनव्यथां वियोगकाले मदननिष्पादनीयां पीडामतीवात्यन्तं तनोति । यस्तु श्रीकृष्णमुखसदृशत्वेन सुखजनकः स एव विधुस्तदानीमेव दुष्टमदनमित्रत्वेन यथा राजा तथा भट इति न्यायेन तत्कार्य्यां पीडां स्वयमेव करोतीत्यर्थः । पश्येति वाक्यशेषः । तिरयन्नित्यत्र तिरस्कारवाचकः तिरः शब्दात् तत्करोतीति णिचि ताविष्ठावदितीष्ठवद्भावाट्टिलोपे लट् तस्य शत्रादेशः । विरोधालङ्कारः व्याघातो वा ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

कापि मधुरिपुणा विलसतीति प्रागुक्तं, सम्प्रति तद्गतचित्तो मधुरिपुस्तदङ्गानि मण्डयन् क्रीडतीति प्रतिपादयन्नाह । गुर्जरीरागेण गीयते रूपकताले । समुदितेति । यमुना-पुलिनवने मुरारिरधुना रमत इति वाक्यार्थः । "तोयोत्थितं तत्पुलिनमित्यमरः ।" निर्जनता प्रतिपादनार्थमत्र वनशब्दोपादानम् निःशङ्ककेलिर्न पराङ्गनासु इत्युक्ते

मुरारिविशेषणमाह। विजयीति त्रिभुवनजयिनः कुतः परजनशङ्केत्यभिप्रायः। रमणे प्रकारमाह। समुदितेत्यादि। रमणी वदने सपुलकं यथा स्यादेवं मृगमदतिलकं लिखतीति योजना। कस्मिन् किमिवेत्याह। मृगमिव रजनीकर इत्यत्र वदनस्य चन्द्रेण मृगमदतिलकस्य मृगेण साम्यम्। उभयस्मिन् किंभूते, समुदितमदने, वदनपक्षे समुदितो मदनो यत्र इति विग्रहः। चन्द्रपक्षे समुदितो मदनो यस्मात् इति वा, पुनः कीदृशे, चुम्बनवलिताधरे, मदनपक्षे तिलकं लिखित्वा साध्विदं वदनमित्युक्त्वा चुम्बनाय वलितो विन्यस्तोऽधरो यत्रेति विग्रहः। चन्द्रपक्षे चुम्बनेन वलितो युक्तोऽधरो यस्मादिति विग्रहः। चन्द्रोदये कामोद्दीपनादित्यभिप्रायः ॥ १ ॥

॥श्रुतिरञ्जनी॥

गुर्जरीरागेण गीयते। एवं चन्द्रकृतपीडावृत्तान्तं सख्यै निवेद्य पुनरपि कृष्णस्यान्यासक्तारूपं दृष्टवदेतदाह इत्येतस्यैवावशेषं सख्याः पुरतः प्रलपति। समुदितेत्यादि। रमते इत्यादि अधुनान्तं ध्रुवपदम्। तदादौ व्याक्रीयते। विजयोऽस्यास्तीति विजयी अनङ्गसङ्गरजयशालीत्यर्थः। न च एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ इतिठनौ' (पा५-२-११५) सूत्रोपरि भाष्यमतम्, स्मृतौ विजयशब्दात्कृदन्तादिनिनिषेधः, तस्य प्रायिकत्वात्। तथा काव्यप्रकाशकारप्रयोगश्च। "इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिबुधैः कथित" इति स चासौ मुरारिः श्रीकृष्णः अधुना इदानीं अधुनेति निपातनात् साधुः यमुनायाः पुलिनेषु सैकतेषु यद्वनं वानीरकदम्बकम्। तत्र रमते क्रीडति। केन प्रकारेण रमते, इत्याकाङ्क्षायामाह। समुदितेति। समुदितः उत्पन्न आविर्भूत इति यावत्। एतादृशो मदनो यस्मादिति तादृशे मन्मथोद्दीपके इत्यर्थः। अतएव चुम्बनेन संजातः कलितोऽधरो यस्येति तादृशे। मन्मथोद्रेकात प्रियेण चुम्बने कृते पश्चात् वलिताधर इत्यर्थः। अथवा चुम्बनार्थव्यापारेण वलिताधर इति वा, एवंविधे रमणीवदने प्रेयसीमुखे प्रविलसतः प्रकर्षेण शोभमानाः अलकाः

घनचयरुचिरे रचयति चिकुरे तरलिततरुणानने ।
कुरुवककुसुमं चपलासुषमं रतिपतिमृगकानने ॥ २ ॥

---

चूर्णकुन्तलाः यत्रेति तादृशं तिलकं कस्तूरिकापूर्णं रजनीकरे चन्द्रे मृगमिव विलिखति। सोऽनेन प्रकारेण रमते इत्यन्वयः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

चिकुरे केशे कुरुवककुसुमं रक्ताम्लानपुष्पं रचयतीति योजना। "रक्ताम्लान-कुरुवकः। चिकुरःकुन्तलः कचः।" कीदृशं चपलासुषमं, विद्युन्मनोहरं, "तडित्-सौदामिनीविद्युच्चञ्चलाचपला अपि।" कीदृशे चिकुरे, घनचयरुचिरे, जलदपटल-वत् सुन्दरे, पुनः कीदृशे तरलिततरुणानने तरलितानि चञ्चलीकृतानि तरुणानामाननानि येनेति विग्रहः। पुनः कीदृशे, रतिपतिमृगकानने, अत्र रतिपतिरेव मृगः चिकुरकाननेऽवस्थितत्वात् चिकुर एव काननं प्राचुर्य्याद्रूपितः॥ २ ॥

॥ श्रुतिरञ्जनी ॥

घनेति। हे सखि! घनचयरुचिरे नीरदवद्भासमाने तरलितानि चञ्चलानि वीक्षणोन्मुखानीति यावत्। तरलानां चञ्चलचित्तपुरुषाणाम् आननानि यस्मिन् तादृशे सर्वपुरुषप्रेक्षताशीले इत्यर्थः। तरलिततरुणेति क्वचित्पाठः। तदा तरुणानां यूनाम्। रतिपतिः कामः स एव मृगस्तस्य कानने रतिपति विहारयोग्य इत्यर्थः। एतादृशे चिकुरे कस्याश्च कुन्तलकलापे, चिकुराया मन्मथोद्दीपकत्वादेवमुक्तमित्यवगन्तव्यम्। "विद्युच्चञ्चला चपलापि च इत्यमरः। तस्या सदृशीमेव सुषमा परमा शोभा यस्य तादृशं "सुषमा परमाशोभेत्यमरः"। विद्युदिवभासमानमित्यर्थः। कुरुवकेति। कुरुवककुसुमं कुसुमविशेषान्। कुसुमित जातावेकवचनं रचयति घटयति अनेन प्रकारेणान्वयः॥ २ ॥

रतिगृहजघने विपुलापघने मनसिजकनकासने ।
मणिसररसनं[१] तोरणहसनं विकिरति कृतवासने ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

रतिगृहजघने मणिसररसनं विकिरतीति योजना । रतिगृहं च तत् जघनं चेति कर्मधारयः । रतिगृहत्वेन रतिगृहं रूपितम् । सदा तदाश्रयत्वात् गृहं गमनाद् तमतिसुन्दरमिति । मणिसरसनं विशेषणमाह । तोरणहसनमिति बहिर्द्वारसदृशमित्यर्थः । "तोरणोऽस्त्री बहिर्द्वारमित्यमरः" । कीदृशे जघने, विपुलापघने महतीत्यर्थः । विपुलमपघनमङ्गं यस्येति विग्रहः । पुनः कीदृशे, मनसिजकनकासने कामस्य स्वर्णपीठ इत्यर्थः । पीतवर्णत्वात् सन्तोषजनकत्वाच्च जघनं कनकासनत्वेन रूपितम् । पुनः कीदृशे, कृतवासने कृतावासनो यत्रेति विग्रहः, पिनद्धकाञ्चीकतया जातसौन्दर्य्यातिरेकात् कृता रसनमिति विग्रहः । केचिन्मणिसरसनमित्यपि पठन्ति । मणिसरेण रत्नमालयान्वितं रसनं मेखला अथच मणिमुक्तादिः तस्य सरः लतिका तेन लक्षितं, रसनं मेखलां वा, । "स्त्रीकट्यामेखलाकाञ्ची क्लीबेसारसनं तथा ।" ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

रतीति । हे सखी ! कृष्णः विपुलं विस्तृतं तादृशापघनमङ्गं तादृशे विपुलाङ्गरूप इत्यर्थः । अपघनोऽङ्गमिति निपातनात् साधुः । मनसिजस्य कनकासने सुवर्णनिर्मितसिंहासने कनकासनवदत्युन्नते कान्त्या मनोहरे चेत्यर्थः । किञ्च कृता कस्तूरिकादिद्रव्यैर्निर्मिता वासना अधिवास स कृतो यस्मिन् तादृशे घनसारकस्तूरिकादिद्रव्यैरधिवासित इत्यर्थः । एतादृशे रतेः कामपत्न्या गृहमावासमन्दिरं यत्र तादृशं सत् तज्जघनं च यस्मिन् । पतिसमेत रत्यावासभूत मदनमन्दिरे जपन्नित्यर्थः । अथवा

१ । मणिमयरसनमिति पाठान्तरम् ।

चरणकिशलये कमलानिलये नखमणिगणपूजिते ।
बहिरपवरणं यावकभरणं जनयति हृदि योजिते ॥ ४ ॥

रतिरिच्छा तस्या गृहं स्थानं कामुकस्पृहास्पदम् इत्यर्थः । तादृशे जघने कट्याः पुरोभागे "पश्चान्नितम्बं स्त्रीकट्या क्लीवे तु जघनं पुर" इत्यमरः । तोरणस्य हसनं परिहासो यस्य तादृशं सुवर्णस्तस्य घटिततोरणमतीत्य प्रकासितमित्यर्थः एतादृशं मणिसरो नाम मणिमालिका सा रसना च मणिसररसनं सर्वद्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः । तद्विकिरति विक्षिपति वध्नातीत्यर्थ ॥ ३ ॥

॥सर्वाङ्गसुन्दरी॥

चरणकिशलये यावकभरणमलक्तकपूरणं जनयतीति योजना, आताम्रत्वात् चरणं किशलयत्वेन निरूपितम् । "पल्लवोऽस्त्री किशलयमित्यमरः" । यावो लक्तो द्रुममय इत्यमरः ।" कीदृशे कमलानिलये लक्ष्मीगृहे श्रीयुक्ते इति यावत् । पुनः कीदृशे, नखमणिगणपूजिते, नखान्येव मणयः तद्गणेन पूजिते इत्यर्थः । ननु चरणकिशलयमेव लोहितं तत्कथं यावकभरणं ददातीत्याह । बहिरपवरणमिति बहिर्वारक इत्यर्थः । मणिजुष्टं हि गृहं विशेषादाद्रीयते, चरणकिशलयं च लक्ष्म्याः गृहत्वेन निर्दिष्टं, जुष्टं मणिवृन्देन, यतः प्राचीररूपेणालक्तकेन बा वृतमित्यभिप्रायः । कीदृशे हृदि योजिते शृङ्गारकालेवक्षसि अर्पित इत्यर्थः अथवा हृदि योजिते, हृत्सदृश इत्यर्थः । हृदयमपि हरेः कमलागृहं, मणिजुष्टं धृतकौस्तुभत्वात् ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

चरणेति हे सखि ! कमलानिलये कृष्णप्रियात्वेन कमनीयरूपलक्ष्मीसेव्य इत्यर्थः । किञ्च मणिगणकल्पा ये नखास्तैः पूजिते विराजमानखराजिमनोहर इत्यर्थः । नखमणि

घटयति सुघने कुचयुगगगने मृगमदरुचिरूषिते ।
मणिसरममलं तारकपटलं पदनखशशिभूषिते[१] ॥ ५ ॥

गणे इति क्वचित्पाठः । तदा रूपकम् । अतएव हृदि योजिते कृष्णेन ध्याते इत्यर्थः । एतादृशे कस्याश्चित् चरणकिशलये पदपल्लवे बहिः हृदयाद्वहिःप्रदेशे अपवरणं हृदि स्थितानुरागाच्छादनं यावकाभरणम् अलक्तकधारणम् अलक्तकरूपाभरणं जनयति । यद्वा हृदि योजिते चरणे हृद्गतानुरागो बहिर्न प्रकाशिते । तथा यावकेन पदं निदधाति । सजातीयेनाभिभवस्य लोकसिद्धत्वादित्यर्थः । अनेन प्रकारेण रमत इत्यर्थः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

कुचयुगगगने मणिसरं तारकपटलं घटयतीति योजना । असमस्तरूपकमिदं, कुचयुगमेव गगनं बृहत्वात् । मणिसरः मुक्ताहारः सितधवलत्वात् तारकपटलत्वेन रूपितः । उभयस्मिन् किंभूते । सुघने कुचपक्षे सुसान्द्रे इत्यर्थः । गगनपक्षे शोभनमेघयुक्ते इत्यर्थः । घने मेघे मूर्त्तिगुणे त्रिपु मूर्त्ते निरन्तरे" इत्यमरः । पुनः कीदृशे, मृगमदरुचिरूषिते, इत्यर्थः । गगनपक्षे कस्तूरीद्रवेणेव म्रक्षित इत्युत्प्रेक्षा । पुनः कीदृशे पदनखशशिभूषिते, कुचपक्षे पदनखमेव शशी तेन भूषिते, नखपदं वक्रत्वात् शशित्वेन रूपितं व्यवसति त्राणस्थान लक्ष्म्यंघ्रिवत्स्वपीत्यमरः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

घटयतीति । स कृष्णः सुघनेऽत्यन्तपृथुले, गगन पक्षेशोमना घना यत्रेति तादृशि मृगमदस्य कस्तूरिकायाः रुचिर्नीलकान्तिस्तया रूषिते व्याप्ते लिप्तकस्तूरीक इत्यर्थः ।

१ । ख, नखपदशशिभूषिते ।

जितविसशकले मृदुभुजयुगले करतलनलिनीदले।
मरकतवलयं मधुकरनिचयं वितरति हिमशीतले ॥ ६ ॥

अन्यत्र मृगमदसामान्यरुचिः मध्यपदलोपी समासः। तया रूषितं नीलनभ इति प्रतीत्या एवमुक्तमित्यवगन्तव्यम्। नखपदशशिभूषिते नखव्रणशशिलेखालाञ्छने कुचयुगगगने स्तनयुगलविहायसि अत्र कुचयुगगगनयोर्महत्वसाम्यात् कुचयुगस्य गगनत्वरूपणमवगन्तव्यम्। उक्तं च परमाणुः परमः महान् परममहानपि तन्वि परमाणुः। यदि मध्यं यदि च कुचौ तरलदृशस्तत्त्वदर्शिनां पुंसामिति। तारकपटलवत्तारकपटलं नक्षत्रपटलकल्पमित्यर्थः। अमलं त्रासादि रोषरहितं मणिसरं मुक्ताहारं घटयत्यलंकरोति। तारकपटलमिति वस्तुरूपकमिति वा। नपुंसकलिङ्गस्तारशब्दोऽप्यस्ति। अथवा तारकाणां सम्बन्धि तारकं तस्येदमित्यण्यप्रत्ययः। तच्च तत्पटलं चेति। गगनवत् परममहति तद्वत् कस्तुरिकायाः नीलवर्णे वालचन्द्रिकातुल्ये नखरेखालङ्कृते कुचमण्डले तारावलीकल्पं हारावली मन्दं करोतीत्यर्थः। अनेन प्रकारेण रमत इत्यन्वयः। श्लेषोद्दीपितरूपकालङ्कारः॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

मृदुभुजयुगले मरकतवलयं मधुकरनिचयं वितरतीति योजना। इदमप्यसमस्तरूपकम्। " रत्नभेदे मरकतः कटकम्वलयोऽस्त्रियाम्। विश्राणनं वितरणं स्पर्शनं प्रतिपादनमित्यमरः। " पुनः कीदृशे हिमशीतले सम्भोगेन कामतापरिवृतादित्यभिप्रायः॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

जितेति। हे सखि! जिते विसशकले मृणालखण्डे येन तादृशे ततोऽत्यन्तकोमल।

रमयति सुभृशं[१] कामपि सुदृशं खलु हलधरसोदरे ।
किमफलमवसं चिरमिह विरसं वद सखि ! विटपोदरे ॥ ७ ॥

इत्यर्थः । करतल एव नलिनीदले कमलपत्रे यस्य तादृशे, दलस्थानाङ्गुलीयककरतलरूपकमलसमेत इत्यर्थः । हिमशीतले नीहारवत् देहतापहारिणी, उपभोगोचित सौख्यसमेत इत्यर्थः, एतादृश मृदुभुजयुगले कस्याश्चित्कोमलबाहुयुगले मधुकरनिचयं वस्तुरूपकमेतत् भ्रमररूपमित्यर्थः मरकतवलयं गारुत्मतरत्नकङ्कणानि वलयमिति जातावेकवचनम् ! वितरति निक्षिपति कमलकल्पकरतलान्तकृते विससमानबाहुषु गतमधुकरपटलतुल अमरकतवलयानि परिष्करोति, इत्यनेन प्रकारेण जपते इत्यन्वयः ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

खलु हलधरसोदरे कृष्णे कामपि सुदृशं रमणीं सुभृशमतिशयं यथा स्यादेवं रमयति सतीह विटपोदरे वनमध्ये विरसम् अफलं यथा स्यादेवं चिरमवसं किमेतत् सखि ! वदेति वाक्यार्थः हलधरो बलभद्रः तस्य सोदरो भ्रातेति वाक्यार्थः । छलतस्तु हलधरः कर्षकः स प्रायेण मूर्खो भवति तस्यायं भ्राता किमितयस्य बुद्धिर्भविष्यति इत्येतत्प्रतिपादितम् । मामभिसारस्थलं प्रेष्यान्यया सह रमत इति हरेः खलत्वम् ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

ध्यायतीति । हे सखि ! हलधरसोदरे बलभद्रानुजे श्रीकृष्णे सदृशं स्वानुरूपां कामपि लोकोत्तरां सदृशं कान्तां ध्यायति सति इह खलु अस्मिन् खलु इति वाक्यालङ्कारे ।

विटपोदरे लतामन्दिरे अफलं निरर्थकं किमिति स्थातव्यमित्यर्थः । अतएवावशं

१ । ख. ध्यायति सदृशं ।

इह रसभणने कृतहरिगुणने मधुरिपुपदसेवके ।
कलियुगचरितं न वसतु दुरितं कविनृपजयदेवके ॥ ८॥

---

परायत्तां वा किमिति स्थातव्यम्। विरसं रसाभावेन किमिति स्थातव्यम्। वद कथय। स्वकान्तेऽद्यानुरक्ते सति तदागमनपर्य्यन्तं निष्फलावस्थानम्। अवस्थाने वा पश्चादागतस्य कान्तानुभूतस्य पतेरुपभोगिन्याः अत्र तुच्छत्वात्। ततोऽपि नावस्थातव्यमितिभावः ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

इह मधुरिपुपदसेवके कविनृपजयदेवके, कलियुगचरितं न वसत्विति योजना। कीदृशे रसभणने कृतहरिगुणने, रसभणितविषये कृतं हरिचिन्तनं येन इति विग्रहः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

इहेति। रसस्य विप्रयोगश्रृङ्गारस्य भणनं कथनं यस्मिन् तादृशे विप्रयोगे श्रृङ्गाररसप्रतिपादक इत्यर्थः। नन्द्याल्यु प्रत्ययान्तो भणनशब्दः। इहगीतेऽधिकरणे कृतं निर्मितं हरेः श्रीकृष्णस्य गुणनं कीर्त्तनं येन तादृशे गीते हरिविहारस्वागत इत्यर्थः। अतएव मधुरिपोः श्रीकृष्णस्य पदसेवके दिव्यश्रीपादपद्माराधिके कवीनां नृपो राजा स चासौ जयदेवश्च तस्मिन कलियुगेन चरितम् आचरितं कलिस्वभावायेत्यर्थः। दूरितं पापं न वसतु न तिष्ठतु हरिस्मर्त्तरि प्राप्तावस्थानादितिभावः उक्तम्—

स्थिते मनसि गोविन्दे दूरतो याति पातकम्।
उदयाचलमारूढ़े दिननाथे तमो यथा ॥

इति ॥ ८ ॥

नायातः सखि! निर्दयो यदि शठस्त्वं दूति किं दूयसे
स्वच्छन्दं बहुवल्लभः स रमते किं तत्र ते दूषणम्।
पश्याद्य प्रियसङ्गमाय दयितस्याकृष्यमाणं गुणै-
रुत्कण्ठार्त्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥ ६॥

॥ सर्वाङ्गसुन्दरी ॥

हे सखि ! हे दूति ! यदि स निर्दयः शठो नायातः तत्र किं दूयसे मा व्यथस्वेत्यर्थः। अस्योपमा—

बालको नानृतो भोगी शुचिर्दक्षो यतेन्द्रियः ।
विदग्धा सात्विकस्त्यागी अगरः सद्भिरुच्यते ॥

ननु यमानेतुमहं गता तमानेतुं न शक्तास्मीति दूयते मम हृदयमित्याह। स्वच्छन्दं बहुवल्लभः स रमते, किं तत्र ते दूषणम् इति सोपालम्भनमिदम्, उपालम्भस्त्वत्कृतकार्य्याय सखीति सम्बोध्य पुनर्दूतीति सम्बोधनादधिगन्तव्यम् । साधु साधु खल्वसि दूति ! यतः इदृक् कर्म त्वयाकृतमित्युपलम्भार्थः। इत्थं दूतिमुपालम्भाभ्युरुषिता भङ्ग्या निज-मरणं प्रतिपादयन्त्याह । पश्येत्यादि दयितस्य गुणैरातथ्यमाणमिदं चेतः प्रियसङ्गमाय स्वयं यास्यति किम्। तदानयनार्थं भवत्यनुनीयत इति भावः। उत्कण्ठार्त्तिभरादिव स्फुटदिति अन्यदपि वस्त्वाधेयभरात् स्फुटत्यभिप्राय राधां प्रेष्यन्यया सह रमत इति हरेः शठत्वं तस्यास्तादृशीं दुरवस्थां ज्ञात्वापि नागच्छतीति हरेर्निदयत्वम् ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

अथानिष्टवल्लभानयनजनितं परितापं परिहारचेतसा किञ्चिद्रहस्यं कथयति। नायात इति। हे सखि! मत्प्रियाचरणशी······दयः परितापपरिहर्त्ता अतएव शठोऽच्युतः विप्रियकारी नायातस्तादृशः श्रीकृष्णो यदि नायातः तावता त्वं किमिति दूयसे परितापं प्राप्नोसीत्यर्थः। शठस्य निर्दयस्य परितापपरिहाराय अनागमनस्य युक्त-

॥ षोडशः प्रबन्धः ॥

बराडीरागेण[१] गीयते

अनिलतरलकुवलयनयनेन ।
पतति[२]न सा किशलयशयनेन।
सखि या रमिता वनमालिना ॥ ध्रुवम् ॥ १ ॥

---

त्वादिति भावः। किञ्च हे दूति! परानयनशीले! परार्थमनुचित्तत्वादिति भावः। अतएव तादृशस्यानयनमपि न त्वदाशीर्वहमितिभावः। इतोऽपि त्वया प्रियो नानीत इति खेदयितव्यमित्याह। पश्येति। हे सखि इदं चेतः मदीयमन्तःकरणं दयितस्य श्रीकृष्णस्य सङ्गमाय सम्भोगाय उत्कण्ठा वाञ्छा तया आर्त्तिः पीडा तस्याः भरादिव भरात् स्वयमेव स्फुटं यथा तथा यास्यति, श्रीकृष्ण समीपं प्रतिगमिष्यति। मारपीडतस्य परागमन-पर्य्यन्तम् अवस्थानयोगादिति तद्भारनिवर्त्तकपुरुषशमनस्योचितत्वादिति भावः। पश्य अत्र वाक्यार्थः कर्म अतश्च मम सख्याः राधायाः प्रियसमागमो न जात इति खेदं परित्यज्य सुखेनात्मशरीरसमागमान्मनसः समागमस्यातिशयितत्वादितिभावः तदुक्तम्—

अहमिहैव वसन्नपि तावक-
स्त्वमपि तत्र वसन्नपि मामकः।
न तनुसङ्गम एव सुसङ्गमो
हृदयसङ्गम एव हि सङ्गमः ॥ इति ॥

अत्र द्वितीयावस्था ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

कथं त्वच्चेतः कृष्णसकाशं गन्तुमिच्छतीति सखीप्रतिवचनमाशङ्क्याह। इदानीं

---

१। घ. देशवराडीरागेण।
छ. देशाख्यरागेण।
२। तपतीतीति पाठान्तरम्।

विकसित-सरसिज-ललितमुखेन।
स्फुटति न सा मनसिजविशिखेन॥ २ ॥

---

राधा स्वकीयं विरहदुःखं सखीमुद्दिश्य व्याजेन प्रलपति। विप्रलम्भश्रृङ्गारे प्रलापवतीयं नायिका। वराड़िरागेण गीयते।

अत्र गीते सर्वस्मिन् पदे पूर्वार्द्धं वनमालिनो विशेषणम् अपरार्द्धं स्त्रियाः विशेषणम्। अनिलेत्यादिः या वनमालिना रमिता सा किशलशयनेन न पततीति वाक्यार्थः किशलयशयनेनेति विवक्षावशात् सप्तम्यर्थे तृतीता यथा स्थल्या पच्यते। कीदृशी अनिलतरलकुवलयनयनेन अनिलेन वायुना यत्तरलं कुवलयं नीलोत्पलं तादृक् नयनं यस्येति विग्रहः। सर्वसां गोपीनां सन्तोषार्थं दृष्टेश्चाञ्चल्यम्॥ १ ॥

॥ श्रुतिरञ्जनी ॥

अथ राधा कृष्णानुभूतानां कामिनीनां सौभाग्यं सख्याः पुरतो वर्णयति। अनिलेत्यादि। रूपकतालेन गेयम्। तत्र या रमिता वनमालिनेत्येतद्ध्रुवपदमिदम्। हे सखि! अनिलेन पवनेन तरलानि चञ्चलानि कुवलयानि इन्दीवराणि तत्कल्पे नयने यस्य। कुवलयनयनेन इत्यत्र मध्यपदलोपी समासः। न समासान्तरम्। उक्तं च वामनेन। बिम्बाधरादौ मध्यपदलोपीन्यामिति नयनचापल्यस्योद्दीपकत्वात् तरलकुवलयसाम्यमवगन्तव्यम् पल्लवतल्पेनापीति यथाहं विरहातुरा उद्दीपकेन पल्लवतल्पदर्शनेन भूमौ पतामि तथा न सा पततीत्यर्थः॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

या वनमालिना रमिता सा मनसिजविशिशेन न स्फुटतीति न विद्धा भवती-

अमृतमधुरमृदुतरवचनेन ।
ज्वलति न सा मलयजरचनेन[१] ॥ ३ ॥

---

त्यर्थः ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

विकसितेति । विकसितमुत्फुल्लं यत्सरसिजं तद्वल्ललितं सुन्दरं मुखं यस्य तेन वनमालिना या रमिता सा मनसिजविशिखेन कुसुमरूपमन्मथबाणेन न स्फुटति न भिनत्ति । अथवा मनसिजविशिखेनारविन्देन स्फुटत सति तत्तुल्यसम्बद्धितस्य सजातीयतरेण बाधायोगादित्यर्थः ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

या वनमालिना रमिता सा अमृतमधुरमृदुतरवचनेन मलयजरचनेन न ज्वलतीति वाक्यार्थः ॥ ३ ॥

॥श्रुतिरञ्जनी॥

अमृतेति । अमृतमिव मधुराण्यास्वाद्यानि मृदुतराणि अत्यन्तकोमलानि वचनानि चाटूक्तयो यस्य तादृशेन वनमालिना या रमिता सा मलयजरचनेन चन्दनानुलेन न ज्वलति विरहकालेऽपि तापं न प्राप्नोति । अमृतकल्पवचनोपलालितस्यान्येन तापायोगादिति भावः ॥ ३ ॥

---

१। मलयजपवनेन इति पाठान्तरम् ।

स्थलजलरुहरुचिकरचरणेन।
लुठति[1] न सा हिमकरकिरणेन ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

या वनमालिना रमिता सा हिमकरकिरणेन न लुठतीति वाक्यार्थः। कीदृशेन स्थलजलरुहरुचिकरचरणेन स्थलकमलवत्पाणिपादेनेत्यर्थः ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

स्थलेति। स्थलजलरुहस्य स्थलकमलस्य रुचिरिव रुचिर्यस्य तत्तादृशं करौ चरणौ च करचरणम्। प्राण्यङ्गत्वादेकवद्भावः। स्थलजलरुहवत् करचरणं यस्य तादृशेन वनमालिना श्रीकृष्णेन। अत्रस्थलजलग्रहणं जलरुहस्यात्यन्तकोमलता वर्णोत्कर्षार्थं स्थलनलिनस्य तादृशत्वादत्र जलरुहशब्दो रूढ़िभेदो न यौगिकः। तदपि रक्तवर्णमेव ग्राह्यम्। तस्यैव भगवतः सौभाग्यसूचकत्वात् उक्तं च—

पाणिपादतले रक्ते नेत्रान्तौ च नखानि च।
तालुजिह्वाधरोष्ठं च सप्तरक्तं प्रशस्यते ॥

या रमिता सा हिमकरकिरणेन चन्द्रकिरणैः जातावेकवचनम्। न लुठति विरहवेदनया भूमौ गात्रपरिवर्त्तनं न करोतीत्यर्थः। चन्द्रविरोधिजलजसमानकरोपलालितस्य चन्द्र किरणबाधाया असम्भवत्वादितिभावः ॥ ४ ॥

१। लुलतीतीतिपाठान्तरम्।

सजल-जलद्-समुद्य-रुचिरेण ।
दलति न सा हृदि विरहभरेण[१] ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी॥

या वनमालिना रमिता सा चिरविरहभरेण हृदि न दलति विदीर्णाशा भवतीति वाक्यार्थः। कीदृशसजलजलदसमुदयरुचिरेण। "समुदायः समुदयः" इत्यमरः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

सजलेति। सजलानां जलसहितानां जलदानां मेघानां समुदायः समूहः तद्वत् रुचिरेण जलदेत्यत्र योगाक्षदरः। अन्यथा पौनरुक्त्यापत्तेः। अथवा सजलत्वादेव जलदत्वमवगन्तव्यम् एतेन वनमालिना या रमिता सा हृदि हृदये विरहभरेण विरह-भावेन न दलति न प्राप्नोति। जलदसमानवर्द्धितस्य वियोगकालेऽपि जलददर्शन-सम्बर्द्धितविरहभारस्य समञ्जसदितिभावः। जलदस्य विरहिजनतापकारित्वं कवि-प्रसिद्धमेव। उक्तं च मालतीमाधवेऽपि—

दैवादहमत्रतया चपलायतनो त्रयोर्वियुक्ताश्च।
अविरलविलोलजलदकालः समुपातश्चायमिति॥

दहतीति क्वचित् पाठः। तदा जलदसमानाश्लेषसम्भावितायाः विरहाग्निना च भस्मीभावायोगादिति भावः॥ ५ ॥

१। विरहेण इति पाठान्तरम्।

कनकनिचयरुचि-शुचिवसनेन[1] ।
श्वसिति न सा परिजनहसनेन[2] ॥ ६ ॥

सकलभुवनजनवरतरुणेन ।
वहति न सा रुजमतिकरुणेन ॥ ७ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

या वनमालिना रमिता परिजनहसनेन न श्वसिति निःश्वासं न त्यजतीत्यर्थः। कीदृशा कनकनिचयस्येव रुचिर्यस्य तदेवंभूतं शुचिः निर्मलं वसनं यस्येति विग्रहः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

कनकेति । कनकनिचयस्य सुवर्णसदृशस्य रुचिः कान्तिरिव कान्तिर्यस्य तादृशं शुचि पवित्रं वसनं अम्बरं यस्य तादृशेन वनमालिना या रमिता सा परिजनहसनेन परिचारिका परिहसनेन न श्वसिति निःश्वासं न प्राप्नोति । पीताम्बरपरिभुक्तेनावकाशित्वादिति भावः । श्वसितीत्यत्र रुधादिभ्यः सर्वधातुकेतीडागमः ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

या वनमालिना रमिता सा अतिकरुणेन अतिशयेन करुणनाम्ना रसेन रुजं पीडां न वहतीत्यर्थः ॥ ७ ॥

---

१ । कनकनिकषरुचि इति पठान्तरम् ।

२ । परिजनहसितेन इति पाठान्तरम् ।

श्रीजयदेवभणितवचनेन ।
प्रविशतु हरिरपि हृदयमनेन ॥ ८ ॥

---

॥ श्रुतिरञ्जनी ॥

सकलेति । सकलानि समस्तानि यानि भुवनानि तेषु ये जनवराः नरश्रेष्ठाः तेषु तरुणेन युना श्रीपुरुषोत्तमेनेत्यर्थः । अतिकरुणेनात्यन्तकरुणावता वनमालिना या रमिता अतिकरुणेनेति भिन्नं वा पदम् अत्यन्तदययेत्यर्थः । सा रुजं वियोगदुःखं न वहति । अनेन करुणावता गृहीताया वियोगजनितदुःखस्यासम्भवादितिभावः ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

अपिशब्दो भिन्नक्रमोऽनेनेत्यस्यानन्तरं द्रष्टव्यस्तदयमत्रार्थः । सतां हृदि हरिरस्त्येव असतां हृदि अनेनापि प्रविशत्वित्यादि ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । अनेन श्रीजयदेवेन भणितवचनेन जयदेवगदितगीतेन हरिरपि हृदयं प्रविशतु । गीतेन सन्तुष्टो हरिः श्रोतॄणां गातॄणां च मनसि आविर्भवतु इत्यर्थः । अपिशब्देनोक्तकिशलयशयनयातनादिदुःखभावः समुच्चीयते । हरिरित्यनेन राधायाः तापहारित्वसूचनाय तद्धृदयप्रवेशोऽपि सूचितः ॥ ८ ॥

मनोभवानन्दनचन्दनानिल
प्रसीद्रे दक्षिण मुञ्च वामताम् ।
क्षणं जगत्प्राण विधाय माधवं
पुरो मम प्राणहरो भविष्यसि ॥ ७॥

॥ सर्वाङ्गसुन्दरी ॥

अत्रावसरे मलयानिलेन पीडिता सती तां प्राह । मनोभवेति मनोभवानन्दनत्वेन चन्दनानिलस्य परोपकाररसिकता प्रतिपादिता । परोपकारश्चाक्रूरे एव भवतीति प्रसीदेत्युक्तम् । हे दक्षिण ! मुञ्च वामतामिति दक्षिणपथप्रवृत्तस्य वामपथप्रवृत्ताभाव प्रतिभावनात् । क्षणं जगत् प्राण विधाय माधवं पुरो मम प्राणहरो भविष्यसीति अन्योऽपि यः क्वचिदासन्नमरणः सोऽपि माधवं द्रष्टुमिच्छतीत्यभिप्रायः । जगत्प्राणस्य प्राणहरताऽनुपयुक्तेति माधवदर्शनाकाङ्क्षाव्याजेन प्राणहरणप्रतिबन्धः । वंशस्थं नाम वृत्तम् ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

राधा तत्समये आगतमुद्दीपकं दक्षिणपवनं निन्दति । मनोभवेति । हे मनोभवानन्दन ! मन्मथोद्दीपक हृदयाल्हादनशीलेति ध्वन्यते । चन्दनानिल मलयमारुत प्रसीद तापहारित्वं विहाय प्रसन्नो भव । उक्तगुणसम्पन्नस्य प्रमादमुक्तत्वादितिभावः । पाघ्राध्मा इत्यादिना सीदादेशः । रे दक्षिण ! दक्षिणदेशेभव ! सरसवासेतरेति ध्वन्यते । वामतां वक्रत्वं सव्येतरत्वं ध्वन्यते मुञ्च त्यज । दक्षिणस्य सतो वामतायाविरोधादितिभावः । अतएव रे ! इति नीच सम्बोधनम् । हे जगत्प्राण ! सर्वप्राणिनां प्राणभूतं माधवं श्रीकृष्णं क्षणं क्षणमात्रं मम पुरोऽग्रभागे विधाय मम प्राणहरः मम प्राणापहर्त्ता । "हरतेरनुद्यमने" (३-२-६) इत्यच् प्रत्ययः भविष्यसि । प्राणस्य सतः

रिपुरिव सखीसंवासोऽयं शिखीव हिमानिलो
विषमिव सुधारश्मिर्यस्मिन्दुनोति मनोगते ।
हृदयमदये तस्मिन्नेवं पुनर्बलते वला-
त्कुवलयदृशां वामः कामो निकामनिरङ्कुशः ॥ ८ ॥

क्षणमात्रेणैव प्राणापहारकत्वरूपापकीर्त्तिर्भविष्यतीति भावः। धवं पतिं श्रीकृष्णं पुरो विधाय निक्षिप्य मा शब्दः प्रतिषेधवाची प्राणहरो भविष्यसि किमिति शेषः। तस्य भविष्यसीत्यस्मात्पूर्वमन्वयः। किमिति भविष्यसीत्यर्थः तथा चापकीर्त्ति-परिहाराय वा मह्यं परित्यज्य श्रीकृष्णागमनपर्य्यन्तं प्रसादोन्मुखत्वमेवेदानीमेव तव युक्तमिति तात्पर्य्यम् ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

सम्प्रति निराशे दयिते सानुरागं चित्तं विचिन्वतीत्याह। राधा समनोगतमाह। रिपुरिवेति। यस्मिन हरौ मनोगते सखीसंवासः सखीभिरेकत्रवासो रिपुरिव दुनोति, स्वच्छन्दगमनप्रतिरोधकत्वादित्यभिप्रायः। शिखीव हिमानिल इति तापकत्वात् "शिखिनौ वह्निवर्हिणौ" इत्यमरः। विषमिव सुधारश्मिर्यस्मिन्निति दाहकत्वादित्यभि-प्रायः। तस्मिन् अदये निर्दये प्रणयिनी कान्ते हृदयमेवं पूर्वोक्तप्रकारेण वलाद् बलते स कथम उक्तः स्यात्। कथमित्यर्थान्तरन्यासमाह। कुवलयदृशां वामः कामो निकाम-निरङ्कुशः इति कामो निकामभित्यर्थामुदामस्या निरङ्कुश इति। अस्योपमा उक्तं च रसिकसर्वस्वे—

गुरुचिप्रस्त्रियं दासीं विधवां वा सुरक्षिताम्।

निषिद्धे वर्त्तते प्रायः कामो वामः स्वभावतः ॥

स्वच्छन्द गो निरङ्कुश इति। हरिणी नाम वृत्तम् ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीकृष्णवियोगदुःखं पुनरपि सख्यै निवेदयति रिपुरिवेति। हे सखि! यस्मिन् कृष्णे मनोगते वियोगकाले मनसि स्थिते सति अयं परिदृश्यमानः सखीसंवासः सहचरीमण्डलं तत्सहवासो वा रिपुरिव शत्रुरिव हृदयमदीयं चेतः कर्त्तृकर्म दुनोति कम्पयति। दुनोतीति पाठे पीडयति। कृष्णवियोगदशाया सखीसमाजो रिपुसमाजवत् त्याज्यः प्रतिभातीत्यर्थः। तथा हिमानिलः शीतलवातः शिखीव हुताशनवत् मद्धृदयं धूनोति। कृष्णवियोगकाले श्रीचलानिलः शिखीकल्पप्रतिभातीत्यर्थः। तथा सुधारश्मिरमृतकिरणः विषं गरलमिव धुनोति।

मुकुन्दविश्लेषसमये अमृतमपि विषकल्पं भवतीत्यर्थः। यस्मिन्मनोगते सखीसंवासादीनां रिपुप्रमुखकल्पता तस्मिन् कृष्णे एवं पूर्वोक्तप्रकारेण अदये मयि निष्करुणे सति तस्मिन् समये वलाहकभृङ्गमलयमारुतादिभट्टसम्पत्तिः वामः वक्रस्वभावः निकाममत्यर्थं निरङ्कुशः निरर्गलगतिः काम मन्मथः कुवलयदृशामिन्दीवराक्षीणां पुनर्भूयोऽपि वलिते प्रवर्द्धते कुवलयदृशामुपरितीतिशेषः। वलते धारारूपेण निर्गच्छति वल्लभपरिग्रहाभावे पुरन्ध्रीणां कामोद्रेकः प्रतिक्षणं प्रवर्द्धत इति। अत्र कामबाधाविरहिणीनां सर्वसां साधारणेति द्योतयितुं कुवलयदृशमितिवहुशचनम्। अथवा यस्मिन् श्रीकृष्णे मां परित्यज्य अन्यत्र गते गतवति सखीसंवासादयः रिपु प्रमुख इव मम मनो धुनोतीत्यन्वयः। तस्मिन् कृष्णे अदये पुनरागतिरहिते सति एवं परितापप्राप्तिमदिव

वाधां विधेहि मलयानिल पञ्चबाण
प्राणान् गृहाण न गृहं पुनराश्रयिष्ये ।
किं ते कृतान्तभगिनि क्षमया तरङ्गै-
रङ्गानि सिञ्च मम शाम्यतु देहदाहः ॥ ६ ॥

मच्चित्तं वलते । कामादयो बाधकाः किं करिष्यन्तीति वलते कम्पत इत्यर्थः । उक्त-मर्थान्तरन्यासेन द्रढयति । कुवलयेति । तथाहि कुवलयदृशामुपरीति शेषः । कामः वामः निकामं निरङ्कुशमित्यन्वयः । अत्र सतत हेतुना हेतुत्वप्रतिपादनं रूपवस्तुनः श्रीकृष्ण-वियोगस्यातिदुःसहतारूपं वस्तु व्यज्यत इति वस्तुध्वनिः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

सम्प्रति विरहानलदग्धा जीवोत्सर्गे कृतमती राधा हि वाधामित्यादि । हे मलया-निल ! बाधां विधेहि कुर्वीत्यर्थः पञ्चवाण ! प्राणान् गृहाण, इति पञ्चवाणाः यस्येति विग्रहः ।

सम्मोहनः क्षोभणश्च दहनः शोषणस्तथर ।
उच्चाटनश्च कामस्य वाणाः पञ्च प्रकीर्त्तिता ॥

कथमित्थं प्रार्थयसेत्याह । न गृहं पुनराश्रयिष्ये इति किं कृतान्तभगिनित्वेन यमुनायाः निर्दयत्वं प्रतिपादितम् । ननु क्षमां त्यक्त्वा सम्प्रति किं कर्त्तव्यं तदादिशतीत्याह । तरङ्गैरङ्गानि सिञ्च मम शाम्यतु देहदाहः इत्ययमत्राशयः । स्मृतान्यपि शीतवस्तूनि दंदह्यन्ते, तेषां तूपभोगो मृत्यवे इत्यबधार्य्य विरहसन्तापातुराधाया मर्त्तुकामया शीतवारिणा सेकः प्रार्थितः ।

सन्निपाते तु दाहर्त्तुं यः सिञ्चेच्छीतवारिणा ।
आतुरः स कथं जीवेद्भिषग्रः स कथं भवेत् ॥ इति ॥ ६ ॥

इति श्रीकविराज श्रीनारायणदासकृतायां सर्वाङ्गसुन्दर्य्यां विप्रलब्धावर्णने नाग-रनारायणो नाम सप्तमसर्गविवरणम् ।

॥ श्रुतिरञ्जनी ॥

राधा कृष्णविरहमसहमाना सख्याः पुरः प्रलपति। बाधामिति। हे मलयानिल! मदष्टमातङ्गपटीरपवमानप्राणहानिपर्य्यन्तं पीडां बिधेहि निर्द्दयं कुरु तादृशबाधा-बिधाने शीघ्रमेव प्राणनिर्गमने वहुकालं वियोगजव्याधिवेदनानुभवस्याभावादिति भावः। हे पञ्चबाण! प्राणान् गृहाण अपहर क्षिप्रमेवप्राणहरणे श्रीकृष्णविश्लेषदुःखा-नुभवस्याभावादिति तात्पर्य्यम्। अत्र प्राणानां पञ्चत्वात्तदपहरणेत्युक्तमवगन्तब्यम्। ननु कथमरण्ये तपसि पत्युपसदनाभावमात्रेण प्राणापहरणप्रार्थनात्सहजं सहजं पति-गृहं निजाश्रयावासमन्दिरं नाश्रयिष्ये न गमिष्यामि। एतादृशसौख्यस्य तत्राभावात्। "स्त्रिये जारणे तुष्यन्तीति न्यायादित भावः।"

अथ विरहवेदनावशात्तन्निवृत्त्यै मलयानिलमदनयोरकिञ्चित्करत्वं विचार्य्य ताप-निवृत्तये समीपवर्त्तिनीं यमुनामवलोक्य सोपालम्भं प्रार्थयते। किमिति हे कृतान्तभगिनि यमसोदरि! यमुने! अत्र परदुःखापहर्त्तृत्वरूपमर्मसूचनार्थमेतत्सम्बोधनमवगन्तव्यम्। कृतान्तस्यापि तादृशत्वेन तद्भगिन्यपि तादृक्त्वात्। ते तव क्षमया परदाहावलो-केऽपि क्षमया अविदीर्णता लक्षणशान्त्या किं किं प्रयोजनमलमित्यर्थः। क्षमया किमित्यत्र कारणानां योगे तृतीया वक्तव्येति तृतीया। तर्हि किं कर्त्तव्यं तदाह। तरङ्गैरिति। हे कृतान्तभगिनि! तरङ्गैस्तवोर्मिभिरङ्गानि मम करचरणादीनि सिञ्च अभिषेचय। तद्वा किमर्थं तत्राह ममेति। मम देहदाहः श्रीकृष्ण विरहानलजनितशरीर तापः शाम्यतु शान्तिं गच्छतु। तदेव तरङ्गाणां प्रयोजनं भविष्यति। अन्यथा निर-र्थकं स्यादिति तात्पर्य्यम्। अत्र सर्वा क्षतबाधाबिधानप्राणापहरणरूपवेदनयोरङ्गीका-रयति। मदनरूप वस्तुनः श्रीकृष्णविरहवेदनयोस्ताभ्यां गतदुःसहरूपां वस्तु व्यज्यत इति वस्तुना वस्तुध्वनिः॥ ६॥

इति श्री गीतगोविन्दव्याख्यायां सप्तमः सर्गः

अष्टमः सर्गः

॥ विलक्ष्य लक्ष्मीपतिः ॥

**कथं कथमपि यामिनीं विनीय**
**स्मरशरजर्जरितापि सा प्रभाते ।**
**अनुनयविनयं[1] वदन्तमग्रे**
**प्रणतमपि प्रियमाह साभ्यसूयम् ॥ १ ॥**

---

॥सर्वाङ्गसुन्दरी॥

अस्मिन्नष्टमे सर्गे खण्डिता वर्णनीया ।

निद्राकषायमुकुलीकृतताम्रनेत्रो
नारीनखव्रणविशेषविचित्रिताङ्गः ।
यस्याः कुतोऽपि पतिरेति गृहं प्रभाते
सा खण्डिता नगदिता कविभिः पुराणैः ॥

उत्तरगीतमवतारयति । अथेति । अथ कथमपि रात्रिंनीत्वा कामार्त्तापि सा प्रभाते प्रणतमपि प्रियं साभ्यसूयं यथा स्यादेवमाहेति वाक्यार्थः । पुष्पिताग्रावृत्तम् ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

अथ तस्याः एव राधाया अवस्थान्तररूपखण्डितानायिकात्वं वर्णयति । अथेति । खण्डिता नायिका लक्षणं तु—

ज्ञातेऽन्यासङ्गविकृतौ कान्ते रोषकषायिता ।
निःश्वासखेदकम्पाद्यैः खण्डितेत्यभिधीयते ॥

अथवा नयत्यन्यत्र निशां प्रातरागते प्राणवल्लभे ।
अन्यसम्भोग चिह्नैस्तु कुपिता खण्डिता मता ॥ इति ।

अथ सख्यै विरहनिवेदनानन्तरं स्मरशरैः कामबाणैः जर्जरितापि विद्धापि कथमपि

---

१ । छ. अनुनय वचनम् ।

॥ सप्तदशः प्रबन्धः ॥

भैरवीरागेण[1] गीयते

रजनिजनितगुरुजागररागकषायितमलसनिमेषम्[2] ।
वहति नयनमनुरागमिव स्फुटमुदितरसाभिनिवेशम् ।
हरि हरि याहि माधव याहि केशव मा वद कैतववादम् ।
तामनुसर सरसीरुहलोचन या तव हरति विषादम् ॥

॥ ध्रुवम् ॥ १ ॥

अतिप्रयासेनैव यामिनीं निशां विनीय कृष्णं विना नीत्वा प्रभाते प्रातःकाले अनुनय उपशान्त्वनाय विनयो नम्रीभावो यस्मिन् कर्मणि तद् यथा तथा । एतद् कृष्णविशेषणं वा वदन्तं गदन्तं न केवलं प्रियालापमात्रं अपि त्वग्रे पादकमलपुरोभागे प्रणतं नमस्कुर्वन्तमपि किमु तथाविधमितिभावः । प्रियं वल्लभं श्रीकृष्णम् अथवा प्रियं प्रियं वदन्तं श्रीकृष्णमिति वान्वयः । आभ्यसूया ईर्ष्या तया सहितं यथा तथा आह वक्ति । अन्यसम्भोगरूपमार्गः कृतवन्तं श्रीकृष्णसोपालम्भं वदतीत्यर्थः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

सा किमुवाचेत्याशयेनाह । भैरवीरागेण गीयते । अस्य स्वरूपम्—

सरोवरस्थे स्फटिकस्य मण्डपे सरोरुहैः शङ्कर मर्चयन्ती ।
ताल प्रयोगे प्रतिबद्धगीता गौरी शुचोर्नागर भैरवीयम् ॥

अथवा सरोवरस्था स्फटिकस्य मन्दिरे सरोरुहैः शङ्करमर्चयन्ती ।
ताल प्रयोग प्रतिरङ्ग गीतै- गौरी तनु भैरिविका सतीयम् ॥

रजनीति । हरिहरीति खेदऽन्वयः । या तव विषादं हरति तामनुसर कैतववादं मा मा वदेति योजना । माधव ! केशव ! सरसीरुहलोचन ! इत्युपालम्बनपरं सम्बोधन-

१ । ग. क. भैरवी रागेण ।

२ । छ. निवेशम् ।

पदत्रयं स्फुटं माधवः त्वं स्फुटं केशवः त्वं स्फुटं सरसीरुहलोचनस्त्वं, यतो मां परिहृत्य यां काचित् स्त्रियं प्राप्यैव रमयसीत्युपालम्भार्थः। छलादाक्षेपोऽप्यत्र बोध्यः तथाहि—

मधुदैत्यस्य पुत्रो वै दैत्योऽपि माधवः स्मृत।
कमलाक्षो निशान्धोऽपि रात्रौ कमलमुद्रणात्॥
चैतन्यरहितं मर्त्यमपि केशकमस्यधुः।
जले मृतस्य सा दृश्या वध्वा कुम्भं गले क्रुधेति॥

नाहमन्याङ्गनासङ्गत इति कृष्णप्रतिवचनमाशङ्क्याह—

रजनीत्यादि। रजनिजागर एव रागो रञ्जनद्रव्यं तेन कषायितं लोहितीकृतं, तदा हे श्रीकृष्ण! तव नयनमनुरागं स्फुटं वहतीवेत्युत्प्रेक्षा। तां प्रत्यनुरागप्राचुर्य्यात्तव हृदि स्थितिमविन्दन चक्षुषा निर्गत इत्युत्प्रेक्षार्थः "निर्य्यासे च कषायोऽस्त्री सुरभौ लोहितेऽन्यबदिति विश्वः"। अत्रापि खण्डित इव प्रतिभाति। यदि त्वं नान्यङ्गनासङ्गतः कथमेतदित्यभिप्रायः॥ १॥

॥ श्रुतिरञ्जनी॥

अन्याः सम्भोगचिह्नदर्शनपूर्वकमुक्तप्रकारमेव विषदयति। रजनीत्यादि। भैरवरागेण गीयत इत्युक्तं तस्यायमभिप्रायः। अयं रागः पुंरागः। एतत्पत्न्यस्तु देवक्रिया मेघरञ्जोकुरञ्जी भैरवस्त्रियाःरूपक तालेन गेयम्। तत् लक्षणं तु "भूत द्वन्द्वं विरामान्तं रूपकः परिकीर्त्तित इति"। तत्र याहीत्यादि विषादन्तं ध्रुवपदम्। हे माधव यत्र कारणा दुदितेउत्पन्ने रसेऽनुभूते श्रृङ्गारे अभिनिवेश आग्रहो यस्य तादृशं तव नयनं रजन्यां रात्रौ जनितो यो गुरुजागरः प्रबलनिद्राभाव: तेन यो रागः रक्तिमा तेन कषायितं संजातरक्तरूपं सत् स्फुटमसन्दिग्धम् अनुरागमन्यस्यामासक्तिं वहतीव रागस्य रक्तवर्णता प्रागव प्रतिपादिता, स्फुटमिति क्रिया विशेषणं वा नयनं "कर्त्तृ

कज्जलमलिनविलोचनचुम्बनविरचितनीलिमरूपम् ।
दशनवसनमरुणं तव कृष्ण तनोति तनोरनुरूपम् ॥२॥

कषायितमिति क्यवन्ताभावे निष्ठा" जागरेण यत्कषायितं रक्तवर्णवदाचरणं तत्कर्मानुरागमिव वहतीत्यन्वयः । तस्मात् कारणात् हे माधव ! लक्ष्मीपते ! इदं तु दयिता दायकत्व सूचनात्तम् अतएव तामनुसरेत्यादि सम्भवति । हे केशव ! याहि अन्यत्रैव गच्छेत्यर्थः । अत्यन्तासूयाद्योतनार्थं द्विरुक्तिः । न केवलामत्रानवस्थानमात्रम् । अपितु कैतववादं धूर्तप्रलापम् उन्मत्तः कितवो धूर्तः" इत्यमरः । मा वद मा ब्रूहि । अपि तु सरसीरुहलोचन ! पुण्डरीकाक्ष ! अन्यानुसरणमार्गदर्शनेन तवापि वैकल्यमस्तीति सोल्लुण्ठनार्थमेतत्सम्बोधनमवगन्तव्यम् । या नायिका तव विषादं मन्मथकृतमनःपीड़ां हरत्यपाकरोति । तत्रैव गच्छेत्यर्थः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

त्वच्चिन्ताजागरार्थें नेत्रे रागो नान्यङ्गनारिति जागरादिति कृष्ण प्रतिवचने दूषणान्तरमाह कज्वलेति । हे कृष्ण ! तव दशनवसनम् अधरः स्वभावादरुणं सम्प्रति तनोरनुरूपं सादृश्यं तनोतीति वाक्यार्थः । कीदृशं, कज्वलमलिनविलोचनचुम्बनेन विरचितं नीलिमरूपं यस्येति विग्रहः । यदि त्वं नान्यङ्गना सङ्गतः कथमेतदित्यभिप्रायः ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

कज्जलेति । हे कृष्ण ! यस्मात् कारणात् कज्जलेनाञ्जनेन मलिने ये विलोचने तयोश्च चुम्बने विरचितं सम्पादितं संक्रान्तमिति यावत् तादृशं नीलिमरूपं नीलवर्णं यस्य तत्तादृशम् । नयनस्य चुम्बनस्थानत्वे प्रागेव कथितम् । किञ्च अरुणम् अञ्जनाक्तनयनचुम्बनात् पूर्वं शोणवर्णं दशनवसनं दन्तच्छदः अधरः इत्यर्थः । तवतनोः शरीरस्यानुरूपं सदृशं समानरूपं तनोति भवति सत्तायाः व्याख्यातं तस्माद् याहि इत्यन्वयः साधारणेनेह एव ॥ २ ॥

वपुरनुहरति तव स्मरसङ्गरखरनखरक्षतरेखम् ।
मरकतशकलकलितकलधौतलिपेरिव रतिजयलेखम् ॥ ३॥

॥ सर्वाङ्गसुन्दरी ॥

त्वच्चिन्ताबलात्कृष्णो ममाधरो न नारीनेत्राञ्जनैरिति कृष्णप्रतिवचने दूषणान्तरमाह- वपुरिति। तव वपुः कर्त्तृरिति रतिजयलेखमनुहरतीतियोजना। स्मरसङ्गरे वपुरिदं जयतीति रतिजयलेखः, कीदृशं वपुः स्मरसङ्गरे खरनखरक्षता रेखा यत्रेति विग्रहः। कस्येव इत्यादि। मरकतशकलकलितकलधौतलिपेरिव मरकतखण्डार्पित काञ्चनाक्षरपङ्क्तेरिव इत्यर्थः। कलधौतं रौप्यहेम्नोरित्यमरः"। वपुषः कृष्णवर्णत्वात् नखक्षतस्य रक्तवर्णत्वात् मरकतार्पितसुवर्णलिपेः साम्यम् ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

वपुरिति। हे कृष्ण ! यतः कारणात् स्मरस्य कामदेवस्य सङ्गरे युद्धे खरास्तीक्ष्णाः ये नखराः नखास्तैः क्षतरेखा नखरेखा यस्मिन् तादृशं वपुः शरीरं मरकतमणेः शकले खण्डे कलिता लिखिता या कलधौतलिपिः तद्। अत्र कलधौतशब्देन सुवर्णमेव ग्राह्यं न रजतम्। "कलधौतरूप्यहेम्नोरित्यमरः"। रतिजयलेखम् अन्यत् सुरतविजय पत्रम् अनुहरति अनुकरोति ततो याहीत्यन्वयः ॥ ३ ॥

चरणकमलगलदलक्तकसिक्तमिदं तव हृदयमुदारम् ।
दर्शयतीव बहिर्मदनद्रुम नवकिशलयपरिवारम् ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

त्वां मृगतयो वने ममेदं वपुः कण्टकक्षतं न नारीनखक्षतमिति कृष्णवचने दूषणान्तरमाह। चरणेति। क्रौञ्चबन्धे हि सुरते नारीपदद्वयं कान्तस्य हृदये न्यस्यति यदुक्तम्—

योषित्पादौ हृदि न्यस्य कराभ्यां धारयेत्कचान् ।
यथेष्टं ताडयेद्योनिं क्रौञ्चबन्धः प्रकीर्त्तितः ॥

इति स्मरदीपिकायां चरणकमलगलदलक्तकासिक्तं तवेदं हृदयं बहिर्मदनद्रुमनवकिशलयपरिवारं दर्शयति इवेत्युत्प्रेक्षा । मदन एव द्रुमो मयूरव्यंसकादित्वात्समासः । कीदृशम् उदारं श्रेष्ठं कौटिल्यरहितमिति यावत् । अथ आभ्यन्तरं कामं बहिः प्रकटयांचक्रे । यदि त्वं नान्याङ्गनासङ्गतः कथमेतदित्यभिप्रायः ॥ ४ ॥

॥श्रुतिरञ्जनी॥

चरणेति । हे कृष्ण ! यस्मात् कारणात् चरणकमलाभ्याम् अन्यस्याः पादसरोरुहाभ्यां गलत् स्रवदलक्तकं लाक्षारसं तेन सिक्तमार्द्रमुदारं विशालम्, अथवा अन्यालिङ्गनदानशौण्डमित्यर्थः । एतादृशं तव इदं परिदृश्यमानं हृदयं भरःस्थलं कर्त्तृ मदनद्रुमस्य हृदयान्तवर्द्धमानकामतरोः नवानि नूतनानि यानि किशलयानि पल्लवा तेषां परिवारं हृदयाद्वहिः प्रवेशे दर्शयति प्रकाशयतीव । अतो याहीत्यन्वयः । कस्मिश्चित्सुरतविशेषे चरणयो हृदयसम्बन्धस्यापि सम्भवात्तत्र लाक्षारससेचनमविरुद्धमित्यवगन्तव्यम् । अथवा समनन्तरमविरत प्रणयकलहवशादाचरितचरणाघातादलक्तक-

दशनपदं भवदधरगतं मम जनयति चेतसि खेदम् ।
कथयति कथमधुनापि मया सह तव वपुरेतदभेदम् ॥ ५ ॥

---

सेचनमवगन्तव्यम् । यद्वा प्रेमातिशयात्तच्चरणयोर्हृदयनिवेशेन वा लाक्षासम्बन्धमित्यवगन्तव्यम् । उत्प्रेक्षा ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

त्वां मृगयतो मम हृदयं गिरौ मनः शिलामृष्टं न चरणालक्तकैरितिकृष्णप्रतिवचन दूषणान्तरमाह । दशनेति । हे कृष्ण ! तव वपुः कथमधुनापि मया सह एतद् भेदमैक्यं कथयति । नैरपेक्षाभिन्नताजातैवेत्यभिप्रायः । कथमभेदागम इत्याह । दशनेत्यादि । भवदधरगतं दशनपदं याते मम चेतसि खेदं जनयतीतिभङ्ग युक्तिः वस्तुतस्तु प्रागुक्तं नयनादिरागादिकं कपटेनाच्छादितं इदं तु दशनपदम् । उदितचन्द्र इव केन निवारणीयमित्यभिप्रायः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

दशनेति । हे कृष्ण ! भवदधरगतं तव दन्तच्छविगतं दशनपदम् अन्यकामिनीकृतदन्तक्षतं मम चेतसि खेदं तापं परं जनयति रचयति । आवयोरभेदात्कथं मे तापं करोतीत्याशङ्क्याह । कथयतीति । हे कृष्ण ! एतदन्याः सम्भोगचिह्नतत्वेन प्रतीयमानं तव वपुः अधुनेदानीं मया सह अभेदमपि कथं कथयति । पूर्वं तुल्यरतिचिह्नाङ्कितयोरभेदो घटते । इदानीं विलक्षणाकारयोरावयोरभेदो दुर्घट एव । तथा च मम चेतसि खेदो युक्त इति तात्पर्य्यम् । अतश्च याहीत्यन्वयः ॥ ५ ॥

बहिरिव मलिनतरं तव कृष्ण मनोऽपि भविष्यति नूनम्।
कथमथ वञ्चयसे जनमनुगतमसमशरज्वरदूनम् ॥ ६ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

कथं प्रश्ने संभ्रमे च "प्रकारार्थे च संशये" इति विश्वः । अव्ययानामा नेकार्थत्वादयमशब्दोऽन्यथावाची तदेयमत्रार्थः । कथमन्यथा कामज्वरपीडितमनुगतं जनं वञ्चयसे। शुद्धात्मनो नैष व्यवहार इत्यभिप्रायः अनुमानोऽयमलङ्कारः। अनुमानं तदुक्तम्—"यत्साध्यसाधकयोर्वचन" इति काव्यप्रकाशे । अत्र ह्यनुगतजनवञ्चकत्वेन साध्यते मलिनतरत्वम्॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

बहिरिति । हे कृष्ण ! अतः कारणात् तव मनः चित्तमपि बहिरिव तव बाह्याकार इव मलिनतरमतिमलिनं नीलवर्ण चेति यावत्। केषांचिन्मतेऽन्तः करणस्य तैजसत्वा देवतालोचनसम्भावना युज्यते । भविष्यति नूनम् असंशयमित्यर्थः । परहृदयस्या प्रत्यक्षत्वात्कथमेवं कथमिति, अथवा अन्यथा अव्ययानामनेकार्थत्वादेवं व्याकृत असमशरज्वरेण मन्मथज्वरेण दूनं परितप्तं न केवलं परितापमात्रम् अपितु अनुगन्तुं तव मनोऽनुगमनमित्यर्थः । एतादृश जनप्रतारणादेव भवन्मनसः मालिन्यमवगम्यत इति तात्पर्य्यम् अतो याहीत्वन्वयः ॥ ६ ॥

भ्रमति भवानवलाकवलाय वनेषु किमत्र विचित्रम् ।
प्रथयति पूतनिकैव वधूवधनिर्दयबालचरित्रम् ॥ ७ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

भवान् वनेषु भ्रमति अवलाकवलाय युवतिजनग्रासाय स्त्री वधायेति यावत् । अत्र किं विचित्रम्, न किमपीत्यर्थः । अत्रोपपत्तिमाह वधूवधः तत्रेति निर्दयबालचरित्रं पूतनिकैव प्रथयतीत्यर्थः । पुरा किल भवता शिशुना विषदिग्धस्तनदात्री पूतना नामासुरी हतेति पौराणिकी कथा ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

भ्रमतीति । हे कृष्ण ! यतः कारणात् भवान् अवलानां मादृशां दुर्बलकान्तानां कवलाय ग्रासाय नाशायेति यावत् । अत्रावलापदेन स्त्रीग्रहणसमनन्तरकार्य्ययेत्यर्थः । एतच्च भवार्थे स्फुटी भवति । वनेषु भ्रमति अटति । अत्र भवद् योगात् प्रथमपुरुषः । किं विचित्रं, किमाश्चर्य्यं ? कथं न चित्रमिति शङ्कायामाह प्रथयतीति, हे कृष्ण ! तव वधूवधे कामिनीमारणे निर्दयबालचरित्रमपि न चेष्टितम् । पूतनिका नाम काचिद्राक्षसी प्रथयति प्रख्यापयति । प्रथयते घटादित्वादुपधाह्रस्वः । बाल्यकाल एव महाबलशालीमानुषाशनीकामिनीवधपाण्डित्यं प्रसिद्धं किल यूनः सतः तवेदानीमबलामारणप्रावीण्यं किमु वक्तव्यमितिभावः । अतो याहीत्यन्वयः ॥ ७ ॥

श्रीजयदेवभणितरतिवञ्चितखण्डितयुवतिविलापम् ।
शृणुत सुधामधुरं विबुधालयतोऽपि सुखं दुरवापम् ॥८॥

---

॥ सर्वाङ्गसुन्दरी॥

हे विबुधा ! धीराः ! श्रीजयदेवभणितरतिवञ्चित खण्डितयुवतिविलापं शृणुतेति वाक्यार्थः। रतिवञ्चिता चासौ खण्डितयुवतिश्चेति कर्मधारयः। कीदृशं, सुधा मधुरम् अतएव विबुधालयतोऽपि स्वर्गेऽपि दुरवापं सप्तम्यर्थे तसिः । खण्डितयुवतिलक्षणं, ननु रतिवञ्चितैव च खण्डिता इत्युच्यते । तत्कथमत्र रतिवञ्चितेति खण्डितयुवते विशेषणं प्रतीयते, उच्यते वञ्चितमिति नपुंसके भावे क्तः श्री जयदेव भणितं रतिवञ्चितं शृङ्गारवञ्चितं यस्या इति विग्रहः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । हे विबुधाः ! सुधामधुरममृतमधुरं श्रीजयदेवेन भणितः गदितः यो रतिवञ्चितायाः सुरतप्रतारितायाः खण्डितयुवत्या खण्डिता नायिकायाः विलापः विलापवर्णनात्मकप्रबन्धः तं शृणुत आकर्णयत न केवलं श्रवणमात्रम् अपि तु सुदुरापं पापकृतामत्यन्तदुष्पापम् । आप्नोते "रीषदुः स्वत्यादिना" ( ३ । ३ । १२६ ) खलच् प्रत्ययः । सुखं सुखहेतुभूतं मम प्रबन्धं वदतोऽपि पठतश्चेत् वदतेर्लोटस्थे स्तेत्यादिनापदेशः । परमानन्द प्रेप्सुभिरेत त्प्रबन्धश्रवणपठनमवश्य कर्त्तव्यमिति भावः ॥ ८ ॥

तवेदं पश्यन्त्याः प्रसरदनुरागं बहिरिव
प्रियापादालक्तच्छ रितमरुणछायहृदयम् ।
ममाद्य प्रख्यातप्रणयभरभङ्गेन कितव
त्वदालोकः शोकादपि किमपि लज्जां जनयति ॥ २ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

गीतार्थं संक्षिप्याह । तवेदमिति । हे कितव ! त्वदालोकोऽद्य ममाशोकादपि त्वद्वियोगदुःखादपि किमपि लज्जां जनयतीति वाक्यार्थः ।

किमपीत्येतावतीसेति वक्तुं न शक्यत इत्यर्थः । कुतो लज्जां जनयतीत्याह । प्रख्यातेत्यादिः "प्रणयः प्रसरे प्रेम्णि याच्ञा विश्रम्भयोरपीति विश्वः । मम कीदृश्याः तवेद मरुणच्छायहृदयं पश्यन्त्याः अरुणच्छायं च तत् हृदयं चेति कर्मधारयः । "छाया सूर्यप्रियाकान्तिः प्रतिबिम्बमनातप" इत्यमरः । अरुणत्वे हृदयस्य हेतुमाह । प्रियापादालक्तच्छुरितमित्युत्प्रेक्षते । प्रसरुदनुरागं बहिरिवेति तां प्रत्यानुरागः प्राचुर्यात्तवास्तः स्थितिमविन्दन् हृदयं भित्वा निर्गत इवेत्यर्थः ॥ २ ॥

इति श्रीकविराजश्रीनारायणदासकृतायां श्रीगीतगोविन्दटीकायां सर्वाङ्गसुन्दर्यां खण्डितावर्णने विलक्षलक्ष्मीपतिर्नामाष्टमसर्गविवरणम् ॥

॥ श्रुतिरञ्जनी ॥

इतोऽपि त्वया न स्थेयमित्याह । तवेति । हे कितव । हे धूर्त्त । प्रियायाः यद्व्यति-

रिक्ततायाः वल्लभायाः पादालक्तेन पादनिहितलाक्षारसेन च्छुरितं रुषितं व्याप्तमिति यावत्तत्रापि लाक्षारससम्बन्धः पूर्ववदवगन्तव्यः । अतएव बहिः हृदयवाह्यदेशे प्रसरन्निर्गच्छन्ननुरागः अन्यकान्तायां ते विशेषो यस्य तादृशमिदं परिदृश्यमानं तवारुणच्छायहृदयं शोणवर्ण्णम् उरः स्थलं कर्म । पश्यन्त्याः वीक्ष्यमाणायाः मम प्रख्यातः प्रसिद्धः प्रणयभरः आवयोः पुरातनस्नेहाधिकां तस्य भङ्गेनापायेन हेतुना त्वदालोकः त्वदालोकनं शोकादपि वियोग दुःखादपि किमपि अनिर्वाच्यभूतां मम खण्डितायाः लज्जां जनयत्युत्पादयति । लोके हि पूर्वं येना साधारणसम्मानः कृतः पश्चात्तत्कृतय वमानस्यातिलज्जा करत्वादिति भावः अतश्च शोकाधिकलज्जाकरमन्याः सम्भोगचिह्नितभवदवलोकनं यथा न स्यात्तथा कर्त्तव्यमिति तात्पर्य्यम् ॥ २ ॥

इति श्रीगीतगोविन्दव्याख्यायामष्टमः सर्गः ॥

## नवमः सर्गः

॥ मुग्धमुकुन्दः ॥[1]

तामथ[2] मन्मथखिन्नां रतिरसभिन्नां विषादसम्पन्नाम् ।
अनुचिन्तित हरिचरितां कलहान्तरितामुवाच रहसि सखी
॥ १ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

अस्मिन् सर्गे कलहान्तरिता वर्णनीया । तस्यास्तु स्वरूपमुक्तं नायिका लक्षणे :—

ईर्ष्या कलह निष्क्रान्तो यस्याः नागछति प्रियः ।
तस्यागमनदुःखार्त्ता कलहान्तरिता मता ॥

अपिच— पादयोः पतिते कान्ते या च मानं न मुञ्चति ।
तस्मिन् गतेऽनुतापार्त्ता कलहान्तरिता मता ॥

अथ विशेषमाह । रसपञ्चकमध्ये क्रमेण व्याख्या, हरिचरितमनुचिन्त्य रतिरसाद्विरम्य श्रितविषादां राधां सख्युवाचेति विग्रहः । कीदृशां कलहान्तरितां कलहेन मानेनान्तरितां दूरीकृतामित्यर्थः । तल्लक्षणं यथा—

प्राणेश्वरं प्रणयकोपभरेण भीतं
या चाटुकार मधधीर्ष्य विशेष वाग्भिः ।
सन्तप्यते मदन वह्निशिखासहस्रै-
र्वाष्पाकुला च कलहान्तरिता हि सा स्यात् ।
॥ इति ॥ ॥ १ ॥

---

१. छ मन्दमुकुन्दः ।

२. ङ च अथ तां ।

॥ अष्टादशः प्रबन्धः ॥

गुर्जरीरागेण गीयते ।

हरिरभिसरति वहति मधुपवने ।
किमपरमधिकसुखं सखि भवने ।
माधवे मा कुरु मानिनि मानमये ॥ ध्रुवम् ॥ १ ॥

---

॥ श्रुतिरञ्जनी ॥

अथ तस्या एव राधाया अवस्थान्तररूपकलहान्तरितनायिकात्वं वर्णयति । कलहान्तरितालक्षणं तु—

कोपात्कान्तं पराभूय पश्चाद्भागेन पीडिता ।
श्वासाश्रुदैन्य चिन्ताद्यैः कलहान्तरिता मता ॥

अथ श्रीकृष्णभर्त्सनानन्तरं सखी मन्मथेन मनसो मथन करेण कामेन खिन्नाम् अतएव रतिरसेन सुरताभिलाषेण भिन्नां विदारिताम् अतएव विषादेन सम्भोगाभावनिबन्धनखेदेन सम्पन्नां समेतामतएव अनुचिन्तितं पुनरालोचितं हरेः श्रीकृष्णस्य चरितं निष्कारणस्वपरित्यागादिरूपं यया तादृशम् अतएव कलहेन श्रीकृष्णविषय प्रणयकोपे नान्तरितां श्रीकृष्णसकाशाद्व्यवहितां राधां रहः एकान्ते उवाच हितमाचचक्षे ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

किमुवाच राधां सखीत्याह । गुर्जरी रागेण गीयते । हरिरिति । अये मानिनि ! माधवे मानं मा कुरु इति योजना । "अये कोपे विषादे च सम्भ्रमे स्मरणेऽपि चेति विश्व" । माधवो मधुवंशोद्भवः भक्तिश्लेषात् श्रियः पतिः । कथं माधवे मानो न विधेय इति आह । हे सखि ! मधुपवने वहति सति हरिरभिसरति, अतः कारणात् भवने अपरमधिकमुखं किमस्ति । हरिरभिसरतीत्याह ॥ १ ॥

तालफलादपि गुरुमतिसरसम् ।
किमु विफलीकुरुषे कुचकलशम् ॥ २ ॥

॥श्रुतिरञ्जनी॥

उक्तप्रकारमेव स्फुटयति । हरिरित्यादि । रूपकतालेन गेयम् । तत्र माधवेत्यादि अये इत्यन्तं ध्रुवपदमिदम् । अये मानिनि ! मानवति ! माधवे लक्ष्मीपतौ हेतुगर्भविशेषणं त्वयाभिमाने क्रियमाणे त्वां परित्यज्य लक्ष्मीरूपरुक्मिणीमेव रन्तुं गमिष्यतीति भीत्युत्पादनार्थं इत्युक्तमित्यवगन्तव्यम् । मानमहं तस्य समीपं न गच्छामीत्यभिमानं मा कुरु । कुतो न कर्त्तव्यमित्या काङ्क्षाया माह । हरिरिति । यतः कारणात् मधुपवने वसन्तपवमाने वहति सति हरिः सर्वतापहारी श्रीकृष्णः अभिसरति अनुसरति त्वामिति शेषः । हरेः अनुसरणेन किं फलं ? तत्राह किमिति, हे सखि ! राधे ! अधिकं हर्य्यभिसरणसुखातिरिक्तमपरमन्यत्किं भवने गृहे भुवन इति क्वचित्पाठः । तदालोक इत्यर्थः सुखं न किमपीत्यर्थः । अथवा अपरम् अधिकं च किं सुखं भविष्यतीत्यर्थः; । अतश्च मानं परित्यज्य योगीव परसौख्याय हरिमेवानुसर इति तात्पर्य्यम् ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

तालफलादिति । कुचकलशं किमु विफली कुरुषे इति योजना । तालफलादपि गुरुं गुरुत्वात् पतनमचिराद् भावीति सूचितम् । पुनः कीदृशम्, अतिसरसम् अतिशयेन रसेन शृङ्गारादिना सहितम् अतिसरसम् । "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवेरस इत्यमरः ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

इतोऽपि माधवे मानमयुक्तमित्याह । हे सखि ! तालफलादपि गुरु पृथुलं कठिनम् अतएवातिसरसमत्यन्त मनोहरम् । अथवा रसेन शृङ्गारेण सह वर्त्तते इति सरसः,

कति न कथितमिदमनुपदमचिरम् ।
मा परिहर हरिमतिशयरुचिरम् ॥ ३ ॥

---

तमतिक्रान्तः अतिसरसः अत्यादय क्रान्ताद्यर्थे द्वितीययेति द्वितीयासमासः । स्वभावेन सरसं दृष्टिमनसोरावर्जकमित्यर्थः । एतादृशं कुचकलशं कुचकुम्भं विफलीकुरुषे किमु ? कोपेन हरिपरिरम्भणमनङ्गीकुर्वाणा त्वं युगलं निष्प्रयोजनं कुरुषे ।

अत्र विफलीकरणे अत्यन्तविरोधद्योतनाय कुचकलशयोः फलाकारवर्णना गौरवमित्यवगन्तव्यम् । अतश्च माधवे मानं मा कुरुरित्यर्थः । विफलीकुरुषे इति पदद्वयं गतिरुद्वात्तत्पदातितेति भाषाकारवचनात् ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे सखि ! अनुपदं प्रतिपदं कतिवारात् अचिरं निकटे इदं तव प्रियं न कथितम् । सर्वं मद्वचः कथितमात्रेण त्वया क्रियते । अधुना कथं विलम्बसे, अतः कारणान्मगवचसा हरिं किंभूतम् अतिशयेन रुचिरं मनोहरम् अतिशयरुचरिम् । हरिशब्दस्यार्थमाह । दर्शनमात्रेण मनो हरतीति हरिस्तम् तादृशस्य परिहरणमनुचितमेव ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

कतीति । हे सखि ! अतिशयेनाधिक्येन रुचिरं रमणीयं लोकोत्कृष्टसौन्दर्य्यसम्पन्नमित्यर्थः । एतादृशं हरिं मा परिहर मा त्यज । इदं पूर्वोक्तमर्थजातमनुपदं प्रतिक्षणं समनन्तरमेव अचिरमविलम्बं यथा तथा कति कतिवारं न कथितं नोक्तम् । अतो माधवे मानं मा कुरु इत्यर्थः ॥ ३ ॥

किमिति विषीदसि रोदिषि विकला ।
विहसति युवतिसभा तव सकला ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

विकला सति किमिति विषीदसि किम्वा रोदिषि इति वाक्यार्थः । कथमेवं विधेयमित्याह । विहसति युवतिसभा तव सकलेति । युवतिसभेत्येतत्सभाराजेत्यादिना क्लीवत्वं नास्त्येव अमनुष्यपूर्वत्वात् अराजपूर्वत्वाच्च सभाया इत्याह धृतिदासः तव समीक्षिताभिधानम् । सत्यश्वेवमाशालावेति क्लीवत्वमनिर्वार्य्यं स्यात् । अत्र केचिदाहुः युवतिकृता सभा युवतिसभेति मध्यपदलोपी कर्मधारयः इत्यनुवृत्तान्तः । वयमत्राचक्ष्महे । हे युवतीति राधासम्बोधनम् । हे युवति ! राधे ! तव तुल्यं सकला सभा विहसतीति वाक्यार्थः कथं सकलसभा विहसति तदुपदिशेत्याह ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

किमितीति । हे सखि ! राधे किमिति किमर्थं विषीदसि दुखमनुभवसीत्यर्थः । विकला विकलचित्ता सती किमिति रोदिषि विषादरोदने त्याज्य इति भावः । किमत्रमित्याशङ्क्याह विहसतीति । यतः सकला समग्रा सकलकलाभिः सम्पन्ना वा तव सम्वन्धिनी युवतिसभा अथवा तवेत्यत्र कर्मण्यपीति केचिदितिवचनात् । भजे शम्भोश्वरणयोरिति कर्मणि षष्ठी । अस्मिन् पक्षे युवतिसभायास्तदीयत्वं प्रकरणसिद्धम् । अतः प्रणयकोपात्कृष्णं पराभूय विषीदन्तीं त्वामवलोक्य सकलसखीजनो हसिष्यति, अतो माधवे मानं मा कुरु इत्यर्थः । अथवा वर्त्तमानार्थो वा घटते ॥ ४ ॥

सजल[1]नलिनदलशीलित[2]शयने ।
हरिमवलोकय सफलय नयने ॥ ५ ॥

जनयसि मनसि किमिति गुरुखेदम् ।
शृणु मम वचनमनीहितभेदम् ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

सजलनलिनीदलशीलितशयने इति राधा सम्बोधनं, शाम्बपद्मपत्रैः शय्यां विरच्य किं तिष्ठसि नहीत्थमुपतापः शाम्यतीत्यर्थः । कथमुपतापः शाम्यतीत्याह । हरिमवलोकय सफलय नयने, इति अन्त: शृङ्गारसमाप्तौ तावन्नयनसुखमनुभवेत्यर्थः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

मृदुलेति । हे सखि ! मृदुलानि कोमलानि नलिनदलानि कमलपलाशानि तैः शीलितं परिशीलितं परीतमिति यावत् । शीतलेति क्वचित्पाठः । तदा तापापनोदनाय पटुतरमित्यर्थः । एतादृशं यत् शयनं तस्मिन् हरिं श्रीकृष्णमवलोकय पश्य अवलोकनेन किं फलमित्याह । सफलयेति । नयने भवन्नेत्रे सफलाय साफल्ययुक्ते कुरु । यदि कोपं परिहाय कोटिकन्दर्परूपं श्रीकृष्णस्य दिव्यमङ्गलविग्रहं तदभ्यर्णं गत्वा कुसुमशयनेन पश्यसि तर्हि नयनयोः जन्मैव वृथा स्यादित्यर्थः । अतश्च मानं मा कुर्वित्यर्थः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

प्राप्तप्रणया दूती पुनराह । मनसि किमिति गुरुखेदं जनयसि, नैवं विधेहि । मम

१ । ख. मृदुल ।
२ । छ. शीतल ।

हरिरुपयातु वदतु बहुमधुरम् ।
किमिति करोषि हृदयमतिविधुरम्[१] ॥ ७ ॥
श्रीजयदेव भणितमिति ललितम् ।
सुखयतु रसिक जनं हरिचरितम् ॥ ८ ॥

---

वचनमनीहितभेदं शृण्विति योजना । अनीहितभेदमिति अनभिमतभेदमच्छिद्रमित्यर्थः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

जनयसीति । किञ्च हे सखि ! आवयोर्मनसि अन्तरङ्गे गुरुखेदं प्रबलविक्षेपं किमिति किमर्थं जनयसि उत्पादयसि । किं तर्हि कर्त्तव्यम् ? तत्राह । शृण्विति । अनीहितोऽन्यस्त अस्पष्टस्तिरष्कृत इति यावत् तादृशो भेदो युवयोर्वियोगावस्थारूपो यस्मिन् तादृशम् । उभयोरैक्यप्रतिपादकमित्यर्थः । तादृशं मम वचनं शृणु ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

किं ते वचनं श्रोतव्यं तदुपदिशेत्याह हरिः तव समीपं गच्छतु इति वाक्यार्थः । वदतु बहुमधुरमिति बहु चाटु करोत्वित्यर्थः । किमिति करोषि हृदयमति विधुरमिति कृष्णचाटुना मोदमानं चित्तं न खेदयेत्यर्थः ॥

न केवल मधुनेदमुच्यते । प्रागप्येतदुपदिष्टमितीत्थं स्वदोषं परिजिहीर्षुराह । श्रीजयदेवेन भणितं हरिचरितं कर्त्तृ रसिकजनं सुखयत्विति वाक्यार्थः ॥ ७-८ ॥

॥ श्रुतिरञ्जनी ॥

हरिरिति । श्रोतव्यं वचनं किमित्याकाङ्क्षायामाह । हे सखि ! हरिः श्रीकृष्णः

---

१ । हृदयमति मधुरमिति पाठान्तरम् ।

स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि
द्वेषस्थासि[१] यदुन्मुखे विमुखतां यातासि तस्मिन्प्रिये ।
तद् युक्तं विपरीतकारिणि तव श्रीखण्डचर्चाविषं
शीतांशुस्तपनो हिमं हुतवहः क्रीड़ामुदो यातनाः ॥ २ ॥

उपयातु तव कुञ्जमध्यं प्रविशत्वित्यर्थः । नकेवल मुपगमनमपि तु हरिरेव बहुमधुरं तवात्यन्तहृदयङ्गम यथा तथा वदतु । तव हृदयमतीवविधुरम् अत्यन्तविकलं किमिति किं निमित्तं करोषि । निरर्थकं हृदयकौटल्यं परित्यज्य हरेर्भवदावासगमनमङ्गी कुरु । माधवे मानं मा कुर्वित्यर्थः ॥ श्रीजयदेवेति स्पष्टार्थमेतत् ॥ ७-८ ॥

॥ सर्वाङ्गसुन्दरी ॥

स्निग्धे ! यत्परुषासि इति यस्मादनिष्ठुरे निष्ठुरासि इत्यर्थः, यत् प्रणमति स्तब्धासि इति यस्मात् प्रणये दण्डवत् स्तब्धा असि इत्यर्थः । यद्रागिणि द्वेषस्था असीति यस्मात् अनुरक्ते विरक्तासीत्यर्थः । यदुन्मुखे विमुखतां यात्यसीति यस्मादुन्मुखे प्रणयपराङ्मुखी भूतासीत्यर्थः । तद्विपरीतकारिणि राधे यदेति वक्ष्यते तत्ते युक्तमिति वाक्यार्थः । तं किमित्याह । श्रीखण्डेन चर्चेत्याह । चन्दनलेपो विषमिव उद्वेगजनक इत्यर्थः शीतांशुस्तपन इति चन्द्रः सूर्य्यवत्तापकर इत्यर्थः । हिमं हुतवह इति तुहिनं वह्निवत्तापक इत्यर्थः । क्रीडामुदो यातना इति क्रीड़ा जनितहर्षाः । तीव्रवेदना इत्यर्थः । "यातना तीव्रवेदना इत्यमरः" ॥ २ ॥

इति श्रीकविराज श्रीनारायणदासकृतायां श्रीगीतगोविन्दटीकायां सर्वाङ्गसुन्दर्यां कलहान्तरिता वर्णने मुग्ध मकुन्दो नाम नवमसर्गः विवरणम् ॥

१ । ग. द्वेषस्थापि ।

॥ श्रुतिरञ्जनी ॥

यदागतं हरिं न मानयसि तर्हि सकललोकसौख्यसम्पादकानां श्रीखण्डादीनां त्वद्विषयेऽसाधु कारित्वे न जनशोच्यमित्याह । स्निग्धे इति । हे विपरीतकारिणि ! प्रतिकूलाचरणशीले । यत् यस्मात् कारणात् स्निग्धे त्वयि निष्कपटचित्ते तस्मिन् प्रिये श्रीकृष्णे परुषासि क्रूरहृदयासि यद् यस्मात्तस्मिन्नेव प्रिये त्वां प्रणमति नमस्कुर्वति सति स्तब्धा निश्चलासि यत् यस्मात्तस्मिन्नेव प्रिये अनुरागिणि त्वय्यनुरागवति सति द्वेषस्थासि तस्मिन् कोपाविष्टासि । यद् यस्मात्तस्मिन् प्रिये उन्मुखे त्वयि उन्मुखवति तस्मिन् विमुखतां वैमुख्यतां वैमुख्यमेव याता प्राप्तासि, तत्तस्मात्कारणादस्य सर्वेषु वाक्येष्वन्वयः । तव श्रीखण्डचर्चा मलयजलेपः विषं कालकूटवदनर्थकारीत्युक्तम् । तथा शीतांशुः अमृतकिरणः तव तपनः शरीरतापकारी सूर्यो जातः । तथा हिमं नीहारस्तद्वद्दहस्तत्कल्पो जातः इति इदमपि युक्तम् । तथा क्रीडा मुदः विनोदः सन्तोषः तव यातना तीव्रवेदनाकल्पाः इत्यपि च युक्तं तथा च क्ष्मापि सौख्यसमयाधःकृतः प्रभूणामिति न्यायेन महाप्रभुं स्निग्धत्वादिगुणसम्पन्नं भगवन्तं श्रीकृष्णं निष्कारुणं परिभूय तस्मिन्नेव पारुष्या चरणादिमहापराध कारिण्यास्तव सकलाह्लादकारिणा श्रीखण्डादिनापि सौख्याभावो युक्त इति भावः । अस्मिन्नपि कलहान्तरितैव नायिकामानस्य कलहजातत्वात् ॥ २ ॥

इति श्रीगीतगोविन्दव्याख्यायां नवम सर्गः ।

# दशमः सर्गः

॥ चतुरचतुर्भुजः ॥

अत्रान्तरे मसृणरोषवशामसीम[1]-
निःश्वासनिःसहमुखीं सुमुखीमुपेत्य ।
सव्रीड़मीक्षितसखीवदनां दिनान्ते
सानन्दगद्गदपदं हरिरित्युवाच ॥ १ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

अस्मिन् दशमे सर्गे मानिनी वर्णनीया । मानस्य कलहजनकत्वात् कलहान्तरितत्वान्तरतायां मानिनी समाविशति । सम्भोगशृङ्गारमल्लयुद्धनिविडगाढरागोरुस्फुटनिवद्धरणरागरञ्जितहृदयत्वात् चण्ड़चुम्बनापातविलिप्ताधररागात्तीक्ष्ण नखरालंकृतकलेवराङ्गलाटिकाचुम्बन संक्रान्त नायिकोचितार्द्धनारीश्वरकामदेवेतिलकत्वादनुमेय मानस्य व्यक्तिः ।

इह हि जयदेवो राधायाः चतुर्विधं मानं हृदि निधाय तदपनोदाय श्रीकृष्णस्य चाटुवचनद्वारेण वर्णयितुमाह । अत्रेति । अत्रावसरे सुमुखीं राधां दिनान्ते प्रदोषसमये उपेत्य सानन्दगद्गदपदं यथा स्यादेवं हरिरुवाचेति वाक्यार्थः । कीदृशीं मसृणरोषवशां "चिक्कणं मसृणं स्निग्धमित्यमरः" पुनः कीदृशीम् । असीमनिःश्वासानां निःसहमसहिष्णुमुखं यस्या इति विग्रहः पाण्डुवर्णमुखीमित्यर्थः । पुनः कीदृशीं, सव्रीडमीक्षितसखीवदनां किमधुना विधेयमिति कृत्वा सव्रीडं यथा स्यादेवं सखीमुखं ददर्शेत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १ ॥

---

१ । रोषवशादसीम, रोषवशामापार इति पाठान्तरद्वयम् ।

॥ ऊनविंशः प्रबन्धः ॥

देशीरागेण[1] गीयते

वदसि यदि किञ्चिदपि दन्तरुचिकौमुदी
हरति दरतिमिरमतिघोरम् ।
स्फुरदधरसीधवे तव वदनचन्द्रमा
रोचयतु लोचनचकोरम् ॥
प्रिये चारुशीले मुञ्च मयि मानमनिदानम् ।

॥ श्रुतिरञ्जनी ॥

अथ गोविन्दः समागत्य मानिनीं प्रियां प्रियालापैः प्रार्थयते । अत्रान्तर इत्यादि । अत्रान्तरे अस्मिन्नेवावसरे हरिः श्रीकृष्णः मसृणः श्लक्ष्णः निविड इति यावत् । तादृशश्चासौ रोषश्चेति तस्य वशात्तन्निमित्तात् असीमः निमर्य्यादः उद्वेलोऽतिप्रवल इति यावत् । तादृशो यः निःश्वासः तेन निःसहं अप्रसन्नमित्यर्थः । तादृशं मुखं यस्याः तादृशीं स्वाङ्गादित्यादिना ङीप् । व्रीड़या वल्लभावमानजनितलज्जया सहितं यथा तथा सव्रीड़ानि वीक्षितान्यवलोकितानि सखीनां सख्या वा वदनानि यया तादृशीं सुमुखीं शोभनाननां दिनान्ते सायंकाले उपेत्य प्राप्य समीपं गत्वेत्यर्थः । आनन्दः प्रियादर्शनजनितसन्तोषस्तेन गद्गदानि पदानि प्रतिक्षणं जल्पितानि तैः सहितं यथा भवति तथा इति वक्ष्यमाणमुवाच उक्तवान् । वियुक्तसम्भाषणसमये गद्गदस्वरूपसम्भवात् तथोक्तमित्यवगन्तव्यम् ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

देशी रागेण गीयते । अस्य लक्षणं –

कुन्देन्दुकान्ता तनुदेह वल्ली शुक्लाम्बरा पत्रवतातिवेशा ।
भर्त्तुः स्मरन्ती शयनं विदग्धा संखिद्यमाना निशि देशिकेयम् ॥

१ । घ, छ, देशीवराडीरागेण ।

सपदि मदनानलो दहति मम मानसं
देहि मुखकमलमधुपानम् ॥ ध्रुवम् ॥ १ ॥

---

अपि च — आरब्धमौनमुद्रा निद्रया घूर्णिताननाब्जा ।
स्मरतादिष्वपि दयिते मुनिभिः ख्यातापि देशीयम् ॥

पूर्वमस्य स्वरूपमुक्तम् ।

ककोलपल्लवं पाणौ बिभ्राणाः स्वर्णकङ्कणाः ।
चुम्बन्ति दयितं रागाद्देशी हेमगिरिप्रभा ॥

किमुवाच हरिरित्याह । वदसीति । हे चारुशीले ! हे प्रिये ! मयि मानं मुञ्चेति योजना । किदृशमनिदानमकारणमित्यर्थः । चारुशीलायास्तव अकारणमानोऽनुचित इत्यभिप्रायः । उक्तं च—

या कुप्यति विनादोषैस्तुष्यत्यनुनयं विना ।
अहेतुकप्रवृत्तिश्च चलचित्तेति साधमे ॥

कथं मानापहा वदसीत्याह, सपदि तत्क्षणात् तव मानावधेरिति यावत् । मदनानलः कामाग्निर्मम मानसं दहति, ततो मुखकमलमधुपानं देहीत्यत्राह । भवत्योः वरवर्ण्णिन्योः दुःखिनां वेदनाच्छिद इत्यभिप्रायः । वदसीत्यादि, हे प्रिये ! यदि किञ्चिदपि वदसि, तदा तव दन्तरुचिकौमुदी ममातिघोरं दरतिमिरं भयान्धकारं हरत्विति वाक्यार्थः । दन्तरुचिरेव कौमुदी दरमेवान्धकारम् । तव वदनचन्द्रमा नाम लोचनचकोरं स्फुरदधरसीधवे राचयत्वित्यपरो वाक्यार्थः । प्रिये ! यदि मन्यसे तदा मम नयनचकोरः त्वन्मुखचन्द्रस्याधरामृतपानं करोत्वितीव वस्त्वर्थः । स्फुरदधर-सीधवे इति तादर्थ्ये चतुर्थी, रुच्यर्थानां प्रीयमाण इति सूत्रं नात्र प्रवर्त्तते रुचेरण्य-स्वतन्त्रत्वात् ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

उक्तप्रकारमेव विषदयति । वदसीत्यादिना देशीरागेण गीयत इत्युक्तम् । तस्याय-मभिप्रायः । पुरुषरागानन्तरं पत्नीं सूचयितुं तथोक्तमिति तत्पतिस्तु पदपञ्जररागः । तदुक्तम्—"देशी च ललिता तोण्डीपदपञ्जरयोषित" इति त्रिपुटतालेन गेयम् । तल्लक्षणंतु—"द्रुतद्वन्द्वं लघुश्चैव त्रिपुटः परीकोर्त्ततः ।" इति झम्पा वा । अत्र प्रियेत्यादि मधुपानमित्यन्तं ध्रुवपदं व्याक्रियते । हे प्रिये ! चारुशीले ! विमलस्वभावे ! राधे ! हेतुगर्भविशेषणद्वयमिदम् । तन्त्रन्यायेन मयि इत्यनेनापि योज्यम् । एतादृशे मयि अनिदानमनिमित्तं मानं मुञ्च त्यज । प्रियायाः चारुशीलायाः तव प्रिये चारु-शीले च मयि आवयोराननुरूप्यादनिमित्ताभिमानस्यायुक्तत्वादिति भावः । अथवा अचारुशीले इति वा पदच्छेदः । तदा आकारो विष्णुपरः तस्मिन् विष्णौ अवक्रं शीलं यस्याः सा तादृशी, अतएव प्रिये ! एवं विधायास्तवानिमित्तमानस्यायुक्त त्वादिति भावः ।

यद्वा अचारुशीले ! दुःस्वभावे ! दुःस्वभावश्चास्या अनिमित्तमानधारणादव-गन्तव्यः । न केवलं मानत्यागः अपितु मधुपानमपि देहीत्याह । देहीति । हे प्रिये ! मुखमेव कमलं यस्याः तस्या मधुपुष्परसः माधुर्य्यं साम्यादमृतं च "मधुमद्यं पुष्परस इत्यमरः ।" तस्य पानं देहि प्रपच्छ । किमर्थमित्याकाङ्क्षायामाह सपदीति । यस्मान्मदनानलः अनङ्गदहनः मम मानसं दहति व्यथयति । तस्यास्तापनिवृत्त्यर्थ-मवश्यममृतपानेन भवितव्यमित्यर्थः । वदसीति । हे प्रिये ! यदि किञ्चिदपि स्वल्प मीप्सितमपि किमु अनल्पनर्मवचनादिकमिति भावः । वदसि यदि चेत् तर्हि दन्तरुचि-कौमुदी दशनकान्तिः चन्द्रिका अतिघोरम् अतिभयङ्करं दरतिमिरं भयान्धकारं दरोऽस्त्रियांभयेष्वभ्रे इत्यमरः । हरति हरिष्यति लोकेऽपि प्रियालापस्य भीतिनिवर्त्त-कत्वादिति भावः ।

किञ्च हे चारुशीले ! तव वदनचन्द्रमा लोचनचकोरं मम नयनजीवं जीवम् अत्र

सत्यमेवासि यदि सुदति मयि कोपिनी
देहि खरनयनशरघातम् । [1]
घटय भुजबन्धनं जनय रद्खण्डनं
येन वा भवति सुखजातम् ॥ २ ॥

---

एकत्वमविवक्षितम् । स्फुरन् भासमानः योऽधरः सीधुवत् सीधुः सुधासीधुर्मद्यः । "मैरयमासवः सीधुरित्यमरः ।" तं पातुं सीधवे पातुं सीधुं पातुमित्यर्थः । क्रियार्थोपपदस्येत्यादिना" ( २ । ३ । ४ ) कर्मणि चतुर्थी । रोचयतु रुचिमन्तं करोतु । अत्र तत्करोति तदाचष्टे इति रुचिमच्छब्दाण्णिजिति शाविष्टप्रतिपादिकेष्विति इष्टवद्भावे चिण्मतो लुगिति मतु लुक् ।" सम्भाषणपूर्वकं तव मुखकमलदर्शनेन मां सम्भाजयेति तात्पर्य्यम् ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे सुदति ! राधे ! मयि सत्यमेव यदि कोपिन्यसि, तदा खरनयनशरघातादिकं देहीति वाक्यार्थः । अन्यो यः क्रुद्धो भवति सोऽभ्याघातादिकं करोतीत्यभिप्रायः । सुदतीति शोभना दन्ता यस्या इति विग्रहः । "वयसि दन्तस्य दतृ" अनेन दतृ इत्यादेशः । खरनयनशरघातमिति नयनमेव शरः प्राक् विग्रहः । तत खरश्चासौ नयनशरश्चेति कर्मधारयः । ततः खरनयनशरघातमिति षष्ठी समासः ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

यदि कोपेन ममाशानुरूपम् उपकारं कर्त्तुं नेच्छसि ह्यर्तपकारमेतादृशं कुर्वित्याह ।

---

[1] । ग-छ, खरनखरशारघातम् ।

त्वमसि मम भूषणं त्वमसि ममजीवनं
त्वमसि मम भवजलधिरत्नम् ।
भवतु भवतीह मयि सततमनुरोधिनो
तत्र मम हृदयमतियत्नम् ॥ ३ ॥

---

सत्यमिति । हे प्रिये, सुदति ! शोभना दन्ता यस्या सा तादृशी तस्याः सम्बुद्धिः । "वयसि दतीति" दन्तशब्दस्य दत्रादेशः । दत्रादेशे उषितश्चेति नीप् । प्रियं वदे मयि कोपे एवासम्भावितोऽयुक्तश्च, तथापि विध्युपदेशरूपशिक्षणे न मामनुग्रहीतुं यदि सत्यमेव मयि कोपिनी कोपशीलासि । यद्वा कोपिन्यसीति यदि सत्यं यदिवान्वयः तर्हि कोपविषये मयि खरास्तीक्ष्णाः ये नयनरूपाः शराः तैर्घातं प्रहारं देहि प्रयच्छ । यथा लोके कोपितः कोपविषयं शरैर्विध्वा सन्तुष्टो भवति तथा त्वमपि नयनशरैर्मां विध्वा सन्तुष्टा भवेति तात्पर्य्यम् । न केवलं प्रहारमात्रमपितु बन्धनं कुर्वित्याह । घटयेति । हे सुदति ! भुजाभ्यां बन्धनं भुजयोर्बन्धनं घटय योजय । "घटादयोमित्" इति मित्संज्ञायामुपधा ह्रस्वः । न केवलं प्रहारबन्धने अपि तु दशनक्षतमपि कुर्वित्याह । जनयेति । हे सुदति ! रदाभ्यां दन्ताभ्यां खण्डनं मदीयाधरभेदाधानं जनय सम्पादय । यथा लोके महाकोपः पुमान् कोपविषयस्याङ्गच्छेदनं कृत्वा यथा निष्पापो भवति तथा त्वद्दन्ताग्रैर्मदीयमङ्गं छित्वा निरस्तकोपा भवेति तात्पर्य्यम् । ननु लोकविरुद्धमात्मनि शरोघातादिकं कथं प्रार्थ्यत इत्याशङ्क्याह । येनेति । येन शरीराघातादिना सुखजातं सुखजन्म भवति । अथवा सुखजातं सुखसन्दोहो भवति तादृशशरघातादिप्रार्थनं न विरुद्धमिति भावः । अथवा शरघातादिना मध्ये येन कार्य्येण तव सुखजातं भवति तज्जनयेत्यनुषङ्गः ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

त्वमसीति मम भवजलधिरत्नमिति, भवः संसारः स एव जलधिः समुद्रः तत्र मे त्वं

नीलनलिनाभमपि तन्वि तव लोचनं
धारयति कोकनदरूपम् ।
कुसुमशरबाणभावेन यदि रञ्जयसि
कृष्णमिदमेतदनुरूपम् ॥ ४ ॥

---

रत्नमसि सहस्रेषु श्रेष्ठेत्यर्थः । "जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते" इति पदसागरः । यतस्त्वं रत्नरूपा ततो भवत्विति तत्रार्थे, मम हृदयमतियत्नम्, अत्र वृद्धो यत्नो यस्येति विग्रहः ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

इतोऽपि नयनप्रमुखप्रहारादिप्रार्थनां युक्तमित्याह, त्वमसीति । हे प्रिये ! यतः मम भूषणम् अलङ्कारस्त्वदासीन केवलमलङ्कारमात्रमपि तु जीवनमेव त्वमेवासि । न केवलं जीवनमात्रमपितु मम भवः संसारः उत्पत्तिर्वा, स एव जलधिस्तत्र रत्नम् । रत्नमिव त्वमेव संसारसाफल्यसम्पादिका जन्म साफल्यसम्पादिका चेत्यर्थः । अत्र राधायां अनुरोधत्वे इह तु त्रयं क्रमेणाधिक्यद्योतनार्थं मुख्य इत्यवगन्तव्यम् । अतश्चैवं विधया राधया हृदयाद्जीवननयनप्रार्थनमुक्तमेवेतिभावः । अतः कारणात् इह मयि अस्मिन् मयि सततमनवरतमनुरोधिनी अनुसरणशीला भवतु, भवद्योगात् प्रथमपुरुषः । अनुवर्त्तनं किमर्थमुक्तमित्याकाङ्क्षायामाह ! तत्रेति । हे भवति ! तत्र त्वत्कृतानुरोधे मम हृदयमतियत्नम् अतिशयेन साभिलाषं वर्त्तत इत्यर्थः । अतश्च मच्चित्तसन्तोषाय मदनुसरणं त्वया कार्य्यमिति तात्पर्य्यम् ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे तन्वि ! तव लोचनं नीलनलिनाभमपि सम्प्रति कोलनदरूपं रक्तोत्पलसादृश्यं धारयति तदेतेन त्वयि लोहितलोहितीकरणविद्यास्तीत्यवधारितं मन्यते । यदि कृष्णं

कृष्णभासं त्वं कुसुमशरवाणभावेन रञ्जयसि कामवाणेन लोहितीकुरुषेत्यर्थः । प्रायेण मन्मथवाणाः रक्तपुष्पविनिर्मिता इत्यागमः । नीलिम्नो लोहितकरणान्न महती प्रतिष्ठेत्यभिप्राय । छलतस्तु कृष्णनामानं मां यदि कुसुमशरवाणभावेन कटाक्षेण रञ्जयसि अनुरागिणं करोषीत्यर्थः प्रतिपादितः । "भाव स्वभावनिर्मोक्ष निश्चयाध्याय सृष्टिष्वित्यमरः" ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

स्फुटकोपमङ्गीकुर्वत्यास्तस्यानुरूपं कार्य्यं वर्णयति नीलेति । हे तन्वि ! प्रिये ! तवलोचनं नयनं नीलनलिनाभं नीलोत्पलसमानवर्णमपि कोकनदस्य रक्तोत्पलस्य रक्तोत्पलं कोकनदमित्यमरः । तस्य रूपं तत्समवर्णमित्यर्थः धारयति धत्ते ।

अरविन्दमशोकश्च चूतश्च नवमल्लिका ।
तथा कोकनदं चैव पञ्चबाणस्य सायकाः ॥

इति वचनान्मन्मथसायककोकनदभावं कोपेन तत्समानवर्णं च धत्ते इत्यर्थः । इदं कोकनदरूपत्वेन परिदृश्यमानं नीलचक्षुः कुसुमशरस्य कामदेवस्य वाणभावेन वाण-रूपकोकनदाकारत्वेन कृष्णं कृष्णाभिधानं नीलवर्णं च मां यदि रञ्जयति अनुरक्तं करोति रक्तवर्णं च करोति तदा तत्कोकनदरूपत्वम् अनुरुपमुचितं भवति । लोके रक्तं जबाकुसुमादिकं स्वसन्निधानादन्यं रञ्जयति । कामसायकः काममनुरञ्जयति । कामसायकः काममनुरञ्जयति । धृतकोकनदभावमिदं चक्षुः यदि स्वोचितकार्य्यं न करोति तदा स्वरूपमेव गच्छेत् । अतएव कोपं परित्यज्य मामनुरञ्जयेति भावः ॥ ४ ॥

स्फुरतु कुचकुम्भयोरुपरि मणिमञ्जरी
रञ्जयतु तव हृदयदेशम् ।
रसतु रसनापि तव घनजघनमण्डले
घोषयतु मन्मथनिदेशम् ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

कुचकुम्भोयोरुपरि मणिमञ्जरी स्फुरतु इति योजना । मणिमञ्जरीति मणयो मञ्जरी वेति विग्रहः । प्रवालविरचितहार इत्यर्थः । किमेवं सिद्धतीत्याह । रञ्जयतु तव हृदयदेशमिति शोभत्वित्यर्थः । न केवलमेव रसना काञ्ची घनजघनमण्डले रसतु शब्दायतां, किं शब्दं कुरुतामित्याह । घोषयतु मन्मथनिदेशमिति । निदेशः शासनं शिष्टिः । "उच्चघुष्टं तु घोषणा," इत्यमरः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

कोपपरित्यागे किं कार्य्यं तदाह । स्फुरत्विति । हे प्रिये ! मणीनां मञ्जरी खचित पद्मराग सन्दोहानिष्कख्यालङ्कारविशेषः । तव कुचकुम्भयोरुपरि स्फुरतु प्रकाशताम् । कोपं परित्यज्य निष्कधारणं कुर्विति तात्पर्य्यम् ।

तद्धारणं किमर्थमित्याकाङ्क्षायामाह । रञ्जयतीति सा मणिमञ्जरी तव हृदयदेशं वक्षस्थलं स्तनदेशं रञ्जयति रंक्षति अनुरक्तवर्णं करिष्यतीत्यर्थः । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति भविष्यति लट् । मणिमञ्जरीधारणे तव हृदयं विषतपोपकटुष्टं सत् मय्येव लग्नं भविष्यतीति तात्पर्य्यम् । रञ्जयत्विति । लोडन्तपाठे स्फुटोऽर्थः । किञ्च, रसना काञ्ची कलापोऽपि तव जघनमण्डले कटिपुरोभागे "पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं पुरः" इत्यमरः । रसतु ध्वनतु रसशब्द इत्यस्माल्लोट् । कोपं परित्यज्य रसनां धृत्वा च परिसर तव पारेणतां ध्वनयेदिति तात्पर्य्यम् ।

**स्थलकमलगञ्जनं मम हृदयरञ्जनं**
**जनितरतिरङ्गपरभागम् ।**
**भण मसृणवाणि करवाणि चरणद्वयं**
**सरसरसदलक्तकरागम् ॥ ६ ॥**

---

रसना रसनेन किं प्रयोजनमित्याकांक्षायामाह । घोषयत्विति । स्वनन्ती सा रसना मन्मथस्य रतिनाथस्य निदेशमाज्ञां घोषयतु उद्घोषयतु । इति एतादृशकर्माचरणे तव दण्डो भविष्यतीत्येवं रूपं मन्मथशासनं श्रावयत्वित्यर्थः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे मसृणवाणि ! पुरुषेतरवचने ! तव चरणद्वयं सरसरसदलक्तकरागं करोमीति भण ब्रूहि शाधीति यावत् । सरसो लसदलक्तकरागो यत्रेति विग्रहः । कीदृशं स्थलकमल-गञ्जनम् आरक्तकत्वादित्यभिप्रायः । पुनः कीदृशं मम हृदयरञ्जनं वक्षबन्धविषये एतदधिगन्तव्यम् । पुनः कीदृशं जनितरतिरङ्गपरभागं जनितो रतिरङ्गस्य परभागः श्रेष्ठता येनेति विग्रहः । कदापि हरिणा करार्पितत्वात्कदापि वक्षस्यार्पितत्वादिति-भावः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

एवमुक्तेऽप्यसम्भाषमाणां त्वाम् असकृत् सेवारूपगुडजिह्वकया भाषणाय प्रार्थ्यते । स्थलेति । हे मसृणवाणि । मधुरालापे ! भण कोपं परित्यज्य मया साकं सम्भाषयेत्यर्थः । सम्भाषणे को लाभः इत्याकाङ्क्षायामाह । स्थलेति । स्थलकमलस्य गञ्जनं तिरस्कारकं ततोऽप्यधिकं कोमलमित्यर्थः । अतीवमृदुता सूचनाय स्थल-ग्रहणम् । अत एनं मम हृदयस्य रञ्जनं लाक्षारसद्वारा वक्षस्थलस्य रक्तपादकम् ।

स्मरगरलखण्डनं मम शिरसि मण्डनं
देहि पदपल्लवमुदारम् ।
ज्वलति मयि दारुणो मदनकदनारुणो[१]
हरतु तदुपाहितविकारम् ॥ ७ ॥

---

कस्मिंश्चिद्बन्धविशेषे प्रसाधनसमये वा स्त्रीपादद्वयस्य वक्षस्थलघटनायाः सम्भावितत्वादुक्तमित्यवगन्तव्यम् । अतएव जनित उत्पादित रतिरङ्गे काम संग्रामभूमौ अथवा रतौ नृत्यस्थले वा परभागकण्णोत्कर्षो येन तत्तादृशं रतिकालीनमहोत्कर्षाधायकमित्यर्थः । एवं चरणद्वयं तव पदयुगलं सरसं सार्द्रं लसद्भासमानं यदलक्तकस्य तस्य रागो रक्तिमा यस्मिन् तादृशं करवाणि कुर्वे । करोतेर्लोट् । आभृतिमस्यापि चेत्यादि टिलोपात् णेरिति णिनिः । यावकेन तावकपादालङ्कारमेव फलमिति तात्पर्य्यम् ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

मम शिरसि पदपल्लवं देहि अर्पयेति वाक्यार्थः । कीदृशं मण्डनमलङ्काररूपं, पुनः कीदृशं स्मरगलखण्डनं स्मर एव गरलं विषम् उपतापकत्वात्तद्विनाशकमित्यर्थः । कथमेव प्रार्थयसेत्याह । ज्वलतीत्यादि । मदनकदनं कामसन्तापः तदेवारुणः सूर्य्यः मयि ज्वलति । पदपल्लवं शिरसि पतितं सत् तदुपाहितविकारं नाशयत्वित्यर्थः । "कदनं कर्द्दनं पापे परितापे च दृश्यते" इति पदसागरः ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

तस्या औन्मुख्याय तदनुकूलं स्वस्य कर्त्तव्यानन्तरं प्रार्थयते । स्मरेति हे प्रिये !

---

१ । ख, घ, मदनकदनानल ।

इति चटुल चाटु-पटु-चारु-मु र-वैरिणो
राधिकामधिवचनजातम् ।

स्मरगरलस्य मन्मथरूपविषस्य खण्डनं भेदकं स्मरकृतपीडानिवर्त्तकमित्यर्थः । अतएव मम शिरसि मण्डनम लङ्कारं शिरोभूषणकल्पमित्यर्थः । एतच्च प्रणयकलहानन्तरं प्रणामाचरणेन शिरश्चरणयोः संश्लेषसम्भवान्न विरुद्धम । अतएव उदारम् इष्टार्थदम् । तद्वन्मनोहरमित्यर्थः । एतादृशं पादपल्लवं चरणकिशलयं देहि प्रयच्छ । अत्रौ-चित्याच्छिरस्येव तस्य दानत्वम्, धेहीति क्वचित्पाठः ।

तदा मण्डनं ममालकंरणं शिरसि धेहि निधेहीत्यर्थः । यथा लोके महासर्पदष्टस्य विषसर्वाङ्गीणे सति क्षुरेण ब्रह्मरन्ध्रप्रदेशं शनैरुत्खाट्य शिरसि विषनिवर्त्तनसमर्थं महौषधिं निक्षिपन्ति तद्वत्सर्वाङ्गीणस्मरगरलनिवर्त्तनसमर्थं पदपल्लवं मम मूर्ध्नि देहीत्यर्थः ।

नन्विदानीं निवर्त्याभावात्पदपल्लवौषधं किमर्थं देयमित्याकाङ्क्षायामाह । ज्वलतीति । हे प्रिये दारुणो भयङ्करः प्रयासासाध्य इत्यर्थः । मदनकदनानलः काम-सङ्गर दहनः सम्भोगविलावह्निरित्यर्थः । मयि ज्वलति सर्वविदितत्वे प्रकाशते, अत्र चिकित्सकस्य सम्भवादौषधमिदानीमेवावश्यं देयमित्यर्थः । तर्हि तेन किं न स्यादित्याह । हरत्विति । तव पादएव पल्लवः तेन मदनानलेन उपाहित समनन्तरमेव न्यस्ते । यो विकारः शरीरकम्पादि तं हरतु निवर्त्तयतु यथा लोके विषानहरणाय प्रयुक्तमौषधं विषनिवर्त्तनद्वारा तत्कृतशरीरकम्पादिकं निवर्त्तयति तथा भवदीय पादपल्लवमपि मदीय सम्भोगाभिलाषरूपमहाव्याधिनिराशद्वारा तत्कृतशरीरतापादिकं निवर्त्तयत्वित्यर्थः ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

इत्युक्तप्रकारं सुरवैरिणो राधिकामधिलक्षीकृत्य वचनजातं जयतीति योजना ।

जयति पद्मावतीरमणजयदेवकवि-
भारतीभणितमिति गीतम्[१] ॥ ८ ॥

कीदृश, चटुल चाटु पटु चञ्चलं चञ्चलमनेकप्रकारमिति यावत् । चाटु पटुरिति प्रसिद्धः । चटुल चाटुना पटिवति विग्रहः । गर्वितशोभनमित्यर्थः । चारु शोभन-मतिशातमिति अतिसुखप्रदमित्यर्थः । 'सुन्दरं रुचिरं चारु शर्मशातसुखानि च'' इत्यमरः । पुनः कीदृशं पद्मावतीरमणाजयदेवकविभारतीभणितं, पद्मावतीरमणश्चासौ जयदेवकविश्चेति विग्रहः । एतेनान्यङ्गनावैमुख्यं जयदेवकविनात्मनः प्रतिपादितम् । शेषार्थं श्लोकेन सूचयति ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

इतीति । इति पूर्वोक्तप्रकारेण मुरवैरिणः श्रीकृष्णस्य चटुलमस्थिरं यच्चाटुप्रियं प्रियस्यास्थिरत्वं चेतसः बहुवल्लभत्वादवगन्तव्यम् । तत्र प्रिये पटु समर्थं तेन वा पटु कपटपटुघटितमित्यर्थः । चारु मनोहरं च राधिकामधिकृत्य प्रवर्त्तमानं यद्वचनं जातं तद्रूपं, किञ्च पद्मावती नाम जयदेवस्य निजनायिका तस्या रमणो रन्ता यो जयदेव नामा कवि तस्य भारती वाणी तया भणितं गीतम् इति इदं प्रकारं जयतु सर्वोत्कर्षेण वर्त्तन्ताम् । सर्वजनमनोहारी भवत्वित्यर्थः ॥ ८ ॥

१ । जयति जयदेव कवि भारती भूषितं,
मानिनी जनजनित शातमिति पाठान्तरम् ।

परिहर कृतातङ्के शङ्कां त्वया सततं घन-
स्तनजघनयाक्रान्ते स्वान्ते परानवकाशिनि ।
विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं
स्तनभरपरीरम्भारम्भे[१] विधेहि विधेयताम् ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे कृतातङ्के ! शङ्कां परिहरेतियोजना अन्यस्त्रीसम्भोगवितर्कशङ्का कृतातङ्के इति । कृतः आतङ्कः शङ्का ययेति विग्रहः । "आतङ्को रोसन्तापशङ्कास्विति विश्वः" । कथं शङ्कात्याज्या इत्याह । त्वयेत्यादि । त्वयाक्रान्ते यन्त्रिते स्वान्ते मनसि मम अन्तर-मन्तःकरणं धन्यः कोऽपि पदार्थो न विशतीत्यर्थः । मनोद्वारेणैवान्तःकरणं प्रविश्यते । मनश्चेत्त्वया यन्त्रितं केन पथा प्रवेष्टव्यमित्यभिप्रायः मनस्तापवदुभयविषयं युगपन्न गृह्णाति, तच्चेत् त्वय्यासक्तं कथमन्यामभिनषिष्यतीति । अतएव परा नवकाशिनी-त्युक्तम । वितानोरन्य इति कामस्त्वनङ्गत्वात् प्रवेष्टुं शक्त इत्यर्थः । ननु त्यक्तैव शङ्का, सम्प्रति किं कार्य्यं तदुपदिशेत्याह, स्तनभरेत्यादि । विधेयतामिति कर्त्तव्यता-मित्यर्थः । हरिणीनाम वृत्तम् ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

एवं प्रियालापैः प्रियां राधामुपलाल्य स्वस्यान्यासक्तिं परिहरन् तस्याः सन्तोषाय स्वाचितकृत्यं प्रार्थयते । परिहरेति । हे राधे ! कुतस्त्वया निष्पादित आतङ्कः पीडा यस्मिन् तादृशे, मयि शङ्का मन्यासङ्गसन्देहं परिहर परित्यज । अथवा कृतातङ्कम् इति राधाविशेषणम् , तदा मयि निष्पादित आतङ्को यस्यां तस्याः सम्बोधनं, हे कृतातङ्के

१ । प्रणयिनि परिरम्भारम्भे स्तनभर परीरम्भारम्भे । इति पाठान्तर द्वयम् ।

मुग्धे ! विधेहि मयि निर्दयदन्तदंश-
दोर्वल्लिबन्धनिविड़स्तनपीड़ितानि ।
चण्डि ! त्वमेव वत मुञ्च न पञ्चबाण-
चण्डालकाण्डदलनादसवः प्रयान्तु[1] ॥ ३ ॥

---

अस्मिन् पक्षे शङ्कां परिहरेत्यत्र मयि इति शेषः । कुत इत्याकाङ्क्षायामाह । हे राधे । स्तनजघनं "प्राण्यङ्गत्वादेकवद्भावः" । घनं पृथुलं स्तनजघनं यस्यास्तया अत्र जघनग्रहणं आक्रमणेऽन्यानवकाशं सूचनार्थम् सौन्दर्य्यातिशयद्योतनार्थं वा ।

तादृश्या त्वया आक्रान्ते आवृत्ते इत्यर्थः । तादृशे स्वान्ते समान्तःकरणे परेषां भवद्व्यतिरिक्तछनानामनवकाशिनि अवस्थानावकाशहीनु अन्यानवकाशित्वं च स्वान्तस्यसूक्ष्मत्वात् । घनस्तनजघनाक्रान्तत्वादवगन्तव्यम् ।

वितनोरनङ्गादन्यः धन्यस्त्वमिव पुण्यात्मा कोऽपि स्त्रीजनः समान्तरं न विशति । बाधकत्वेनाधन्यो मन्मथ एव केवलं प्रविष्टः । वेदनानिवर्त्तकत्वेन धन्यः पुण्यात्मा भवादृशस्तु जनो समान्तरं न प्रविष्ट इत्यर्थः । तथाच, त्वया मय्यन्यासक्तिशङ्केव न कार्य्येति तात्पर्य्यम् अत्र वितनुशब्देन मन्मथबोधनं तस्या स्वान्ते प्रवेश सौकर्य्यार्थम् । अङ्गहीनत्वेन प्रवेशस्तस्य निर्लज्जता सूचनार्थम् । वितनोरधन्यत्वं च पितृचित्तक्षोभ-कारित्वा दवगन्तव्यम् । एवमन्यासक्तिशङ्कां निरस्य स्वेप्सितं कृत्यमाह । स्तनेति । हे राधे स्तनभरस्य कुचभारस्य स्तनमण्ड़लस्येत्यर्थः । परीरम्भ आलिङ्गनम् "उपसर्गस्य यञमनुष्ये" ( ६ । ३ । १२ ) बहुलमिति दीर्घः । तस्यारम्भे निर्माणे प्रणयिनि परीरम्भेति क्वचित्पाठः । तदा हे प्रणयितित्यत्र मम विधेयतामनुकूलभावं विधेहि प्रकाशय । त्वं हृष्टा गाढालिङ्गनरूपकार्य्ये मां मियोज्य कृतार्थयेत्यर्थः । काव्यलिङ्गमलङ्कारः ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

सुन्दरि ! चण्डि ! कोपने ! वत मुञ्च खेदं त्यजेत्यर्थः । "खेदानुकम्पा सन्तोष-

---

१ । घ. प्रयान्ति ।

विस्मया मन्त्रणेवतेत्यमरः"। ननु अत्यजमेव खेदं सम्प्रति किं कार्य्यं तदुपदिशेत्याह। विधेहि मयीत्यादि। किमेतावता प्रेप्सितं सिध्यतीत्याह। न पञ्चबाणेत्यादि, काम एव चण्डालो दुष्टचेतनत्वात् तस्य स्थाने मरणात् गतिरिति स्यादित्यभिप्रायः। वसन्ततिलकं वृत्तम्॥ ३॥

॥ श्रुतिरञ्जनी ॥

प्रकारान्तरेण तामेव प्रार्थयते। मुग्ध इति। हे मुग्धे! युक्तायुक्तविचारशून्ये तच्छून्यत्वं बाधाप्रतिकाराज्ञस्तेन कौशलाभावादवगन्तव्यम्। बाधाप्रकारं स्वयमेवोपदिशति। मयिअपराध कारिणि स्वस्मिन दन्तदंशो दन्तक्षतं दोर्वल्लिभ्यां बन्धो निरोधः निविडाभ्यां स्तनाभ्यां पीडनं मर्दनं च निर्दयानि दयापराङ्मुखानि च दन्तदंशदोर्वल्लिबन्धनिविड़स्तन पीडनानिअथवा निर्दयं यथा भवति तथा दन्तदंशादीनिति दन्तदंशादिक्रियाविशेषणं वा। एतानि विधेहि कुरु। हे चण्डि! कोपशीले! त्वमेव मुदमानन्दमञ्च प्राप्नुहि। यथा लोके कस्मिंश्चिद्देशविशेषे कश्चित कोपशीलो जनः अपराधकारिणं स्वजनं दन्तैरुपदंश्य रज्ज्वादिभिर्बध्वा कठिनैः पाषाणादिभिरुपपीड्य स्वयमेव प्रशान्त कोपः सन् सन्तुष्टो भवति तथा त्वमपीति भावः। तर्हि प्राणहानिर्यन्त्रं मया कर्त्तव्येत्याशङ्कायामाह। नेत्यादि। हे चण्डि!

पञ्चववाणो मन्मथः स एव चण्डालः दिवाकीर्त्तिः तस्य चण्डालत्वं पुरुषगौरवमनालोच्य बाधकत्वान्निर्दयत्वादितित्रबाधकत्वाद्बावगन्तव्यम्। तस्य काण्डानि बाणास्तैर्दलनाद्विदारणाद्धेतोः असवः मम प्राणाः न प्रयान्तु न गच्छन्तु। अत्रासव इति

शशिमुखि ! तव भाति भङ्गुरभ्रू-
युवजनमोहकरालकालसर्पः ।
तदुदितसुमहाविपत्तिशान्त्यै[1]
त्वदधरसीधुसुधां निधेहि शीघ्रम्[2] ॥ ४ ॥

---

बहुवचनप्रयोगाद्‌जात्यसंख्यानुगुण्याय पञ्चबाण इत्युक्तमित्यवगन्तव्यम् । हन्तुं जीवयितुं च । समर्थे जने विद्यमाने तदितरशास्त्रनिषिध्य चण्डालकृतबाधाया अयुक्तत्वादि भावः । एवं च सति शास्त्रमुल्लंघ्यानेन बाधयत्यास्तव मुग्धत्वं सुव्यक्तमेवेति भावः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

शशिमुखीति । हे चन्द्रवदने तव भङ्गुरभ्रूर्भातीति योजना । कीदृशी, युवजनमोहनकरालकालसर्पो, तर्हि महाननर्थः । तया दृष्टानां यूनामौषधभावान्मरणापत्तेरित्याह । तदुदितेत्यादि । तदुदितसुमहाविपत्तिर्मोहः तच्छान्त्यै त्वदधरसीधुसुधेति, सीधुशब्देनैव गतार्थत्वात्सुधाशब्देन संघातनिशो वाक्यार्थः । यथा वज्राशनिसमस्वनमिति विष्णुपुराणे । पुष्पिताग्रावृत्तम् ॥ ४ ॥

---

१ । तदुदितभयमञ्जनाय यूनामिति पाठान्तरम् ।

२ । ख.-छ. पुस्तकेषु श्लोकोऽयं न दृश्यते ।

व्यथयति वृथा मौनं तन्वि ! प्रपञ्चय पञ्चमं
तरुणि ! मधुरालापैस्तापं विनोदय दृष्टिभिः ।
सुमुखि ! विमुखीभावं तावद्विमुञ्च न मुञ्च मां[१]
स्वयमतिशयस्निग्धे मुग्धे ! प्रियोऽहमुपस्थितः[२] ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

व्यथयति वृथा मौनं तन्वीति मामनालप्य त्वमपि कृशासीत्यभिप्रायः । प्रपञ्चय पञ्चमं तरुणिमधुरालापैरिति । "पञ्चमो रागभेदे स्यात्पञ्चानामपि पूरणे" इति विश्वः । तापं विनोदय दृष्टिभिरिति । तरुणि ! अत्रापि सम्बोध्यते । युवत्या एव कटाक्षदाने न चातुर्य्यादित्यभिप्रायः । सुमुखि ! विमुखीभावं तद्विमुञ्चेति, सुमुख्या वैमुख्यस्यानुचितत्वात्यन्ताप्रतिभावनादित्यभिप्रायः । न मुञ्च मामिति परीरम्भादिना मामनुगृहाणीष्वेति भावः । किं कारणमित्याह स्वयमित्यादिः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

पुनरपि तामेव प्रार्थयते । व्यथयतीति । हे तन्वि ! राधे ! तव मौनं वृथा निरर्थकं मां व्यथयति पीडयति । अथवा वृथा मौनं निरर्थकं मौनं मां व्यथयतीति वा योजना । सदयहृदययोर्निर्निमित्तप्रियालापपरित्यागस्य अतिव्यथादायकत्वादिति तात्पर्य्यम् । किञ्च, हे सुमुखि ! तर्हि किं कर्त्तव्यं तत्राह । प्रपञ्चयेति । तरुणीमधुरोलापैः श्रुतिसुखव्याहारैः पञ्चममुद्दीपतीति भावः । सुमुखि विमुखीभावं वैमुख्यं तावत् साकल्येन यावत्तावत्साकल्येत्यमरः । मुञ्च त्यज । अन्यथा सौख्यस्य विरोधा-

---

१ । तावद् विमुञ्च न वञ्च न इति पाठान्तरम् ।

२ । ख. प्रियोऽयमुपस्थितः ।

बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधूकच्छवि-
र्गण्डश्चण्डि चकास्ति नीलनलिनश्रीमोचनं लोचनम् ।
नासाभ्येति तिलप्रसूनपदवीं कुन्दाभदन्ति ! प्रिये !
प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥ ६ ॥

दितिभावः । प्रसङ्गेन स्वस्यापि त्यागमाशङ्क्याह । मामिति, मां न मुञ्च न त्यज । प्रियपरित्यागस्य लोकविरुद्धत्वादितिभावः । हे मुग्धे । हिताहितविचारशून्ये ! तच्छून्यत्वं वक्ष्यमाणमौग्ध्यादि गुणपरिगणनादवगन्तव्यम् । तदेव दर्शयति । यमित्यादि अयं जनः अतिशयस्निग्धः अत्यन्तस्वच्छहृदयः न वञ्चनापर इत्यर्थः, न केवलं स्निग्धहृदय अपितु प्रियः पूर्वं तव मनोहर इत्यर्थः । एतादृशोऽयं जनः स्वयं स्वतएव नान्योपाधिनेत्यर्थः उपस्थितः निकटं प्राप्तः । तथागत छनस्य गौरवं न्यपराधं चाकलय्य भवद्गुण सन्ततिं च पर्य्यालोच्य त्वयाप्ययं जनो बहुमाननीय इति तात्पर्य्यम् । काव्यलिङ्गमलङ्कारः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे प्रिये ! चण्डि ! कोपने ! त्वन्मुखसेवया स पुष्पायुधो कामो विश्वं विजयते । इति एतदहं उत्प्रेक्षे । "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥"

इति काव्यादर्शः । पुष्पाणि त्वमुखे सन्तीति पुष्पायुधस्य त्वन्मुखसेवोत्प्रेक्षितः । नीलनलिनश्रीमोचनं लोचनमिति कार्ष्ण्यात्साम्यम् । नासाभ्येति तिलप्रसूनपदवीम् इति आकृत्या तत्साम्यम् । कुन्दाभदन्तीति तत्सम्बोधनम् । कुन्दाभौ दन्तौ यस्या इति विग्रहः । शौक्ल्यात् साम्यम् । चकास्तीति चकासृ दीप्तौ ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

ननु पञ्चबाणस्य ममापि बाधकत्वात्तव बाधकत्वमपि तस्यैव युक्तमित्याशङ्क्य

तस्य पराधीनविश्वविजयकारित्वमाह । बन्धूकेति । हे प्रिये ! राधे ! स्निग्धो निर्मलः अधरो दन्तवासः बन्धूकनाम रक्तपुष्पम् । पल्वलावस्थायिबन्धूजीवकाख्यो गुल्म-विशेषः । तस्य पुष्पं बन्धूकम् । बन्धूको बन्धुजीवकः" इत्यमरः । तस्य द्युतिः कान्ति-रस्याः बान्धवो बन्धुः । प्रज्ञादित्वात् स्वार्थेऽचि प्रत्ययः तत्किल्प इत्यर्थः । हे चण्डि ! कोपशीले ! गण्डे तव कपोलभागे मधूकछविः गुडपुष्पसमानकान्तिः चकास्ति प्रकाशते । मधूकवत् कोमलप्रदेशो भातीत्यर्थः । हे प्रिये ! तव लोचनं नीलनलिनश्रियो नीलोत्पल कान्तेर्मोचनः तापसारणहेतुः । ततोऽप्यतिमनोहरमित्यर्थः । यत् सा तव नासा तिल-प्रसूनस्य पदवीमन्वेत्यनुसरति तिलकुसुमसमानमनुवर्त्तत इत्यर्थः । अनेन पद्मिनी जाति सूचिता । तदुक्तं रति रहस्ये स्त्रीजाति निर्णयस्थले ।

तिलकुसुमानां नासिका बिभ्रति येति । कुन्दाभदन्ता यस्याः सा कुन्दाभदन्ती "नासिकोऽधरौष्ठेत्यादिना ( ४ । १ । ५५ ) ङीष् तस्य सम्बुद्धौ हे कुन्दाभदन्ति ! स प्रसिद्धः पुष्पायुधः बन्धूकादिकुसुमसमान भवदधरादिरूप कुसुमशरः त्वन्मुख-सेवया पूर्वोक्तबन्धूककुसुमादिसमाना धरादिशराधार भवन्मुखसेवनेन वैरित्वेन यत् विश्वं लोकत्रयं विजयते जयति । अथवा विश्वक्नामानं मां तन्नामकं च तस्य विश्वं विष्णुर्वषट्कार इति वचनाद्वगन्तव्यम् अतः स्वतन्त्रया भवत्या दन्तदंशा-दिभिरयं जनो बाध्यताम् । न तु पराधीनविजयेन मदनचण्डालेन बाध्यतामिति भावः । उपमा समासोक्तिश्च ॥ ६ ॥

दृशौ तव मदालसे । वदनमिन्दुरत्युज्ज्वलं[१]
गतिर्जनमनोरमा विधूतरम्भमूरुद्वयम्[२] ।
रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवा-
वहो विबुधयौवतं वहसि तन्वि ! पृथ्वीगता ॥ ७ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

इदानीं मानीनिप्रबोधनाय चाटुवचनं पूर्वकमात्मनोऽशक्यत्वमाणादयितुमाह । दृशाविति । हे तन्वि ! पृथ्वीगता सती विबुधयौवतं देवयुवतिवृन्दं वहसीत्यहो आश्चर्यम् । वहने प्रकारमाह, दृशावित्यादि । दृशौ मदालसे इति विग्रहः । गन्धर्वकन्या च मदालसा, वदनमिन्दुमत्युज्ज्वलमतिक्रम्य रदनमित्यर्थः । देवस्त्री च मनोरमा । विधुतरम्भमूरुद्वयमिति दधति रम्भा कदलीकाण्डश्री येनेति विग्रहः । स्ववेंश्या रम्भा, रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवाविति रुचिरचित्रलेखा लेखा इति विग्रहः । अप्सरोवरा च चित्रलेखा । वृत्तं चास्य पृथ्वीगता । " जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" ॥ ७ ॥

इति श्रीकविराजश्रीनारायणदासकृतायां श्रीगीतगोविन्दटीकायां सर्वाङ्गसुन्दर्यां मानिनीवर्णने चतुरचतुर्भुजो नाम दशमसर्गविवरणम् ॥

॥ श्रुतिरञ्जनी ॥

ननु मय्येव किमर्थमासक्तिः, मद्व्यतिरिक्तानामतिरूपवतीनामप्सरप्रभृतीनाम् अन्यासां दीप्तमानत्वादित्याशङ्क्याह । दृशाविति । हे तन्वि ! तव दृशौ मदेन यौवनदर्पेणालसे मन्दगती मदालसा नाम काचिदप्सरसेव वदनं मदालसे तवाननम् । इन्दु-

---

१ । वदनमिन्दुसन्दीपनं, वदनमिन्दुसन्दीपकमिति पाठान्तरंद्वयम् ।

ख बदनमिन्दुमत्युन्नतम् ।

२ । विजितरम्भमूरुद्वयमिति पाठान्तरम ।

रितिमतिरिन्दु मतिश्चन्द्र इति बुद्धिरित्यर्थः । तयोरुन्नतं सर्वोत्कृष्टतया भासमानम् अथवा इन्दुमतिक्रम्य उन्नतमुत्कृष्टम्। इन्दोरप्यति मनोहरमित्यर्थः इन्दुमत्युज्ज्वलमिती क्वचित्पाठः। तदप्ययमर्थः समानः।

इन्दुमती नाम काचिदप्सरा तद्वदुज्ज्वलं तद्वदनकल्पं च । गतिस्तव गमनक्रिया जननां प्राणिनां मनोरमा चित्तसन्तोषकारिणी, मनोरमा नाम काचिदमरकामिनी तद्वन्मनोरमेति च तद्गतिकल्पेत्यर्थः । ऊरुद्वयं तवोरुयुगलं विधुततरं कृतारम्भा कदलीतरुयेन तादृशं, रम्भा नाम स्ववेंश्या तव रतिः सुरतं कलावती कामशास्त्रप्रसिद्धकलासम्पन्ना कलाभिव्यक्तिमतीत्यर्थः ।

कलावती नाम काचिदमराङ्गना च तव भ्रुवौ रुचिरं रमणीयं तच्च चित्रं लेखकर्म तस्य लेखे इव रेखे ययोस्ते तादृशे चित्रलेखा नाम काचित्त्रिदशतरुणी, अतश्च हे तन्वि ! पृथ्वीगता भूलोकवासिन्यपि त्वं पृथ्वीगतमिति क्वचित्पाठः । तथा यौवतविशेषणम् ।

युवतीनां समूहो यौवतं विबुधकामिनीकदम्बकमित्यर्थः । तद्वहसि धारयसि अहो आश्चर्यम् । स्वर्लोकवासिनीनां मदालसाप्रभृतीनां भूलोकवासिन्यां त्वयि दृगादिगतमदालसत्वादि धर्मसम्बन्धव्याजेनावस्थानम् अत्यन्तमाश्चर्यकरमित्यर्थः । तथाच अप्सरः प्रभृतयः सकलकामिनीर्विहायत्वय्येवानुरक्तिर्युक्तेति तात्पर्यम् । यौवतमित्यत्र "भैक्षादित्वादचि" प्रत्ययः न चात्र भस्यादेतद्धिति पुंवद्भावः । युवतिशब्दसामर्थ्यात् श्लेषानुप्राणित उत्प्रेक्षालङ्कारः कवि कौशलेन निहितं छन्दोऽपि पृथ्वी। "जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ ७ ॥

इति श्रीगीतगोविन्दव्याख्यायां दशमः सर्गः ॥

# एकादशः सर्गः

॥ सानन्दगोविन्दः[१] ॥

स चिरमनुनयेन प्रीणयित्वा मृगाक्षीं
गतवति कृतवेशे केशवे कुञ्जशय्याम् ।
रतिरुचिरविभूषां दृष्टिमोषे प्रदोषे
स्फुरति निरवसादां कापि राधां जगाद ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

अस्मिन् सर्गे गोविन्दवचनेन श्रीराधामानभङ्गे जातेऽपि सखीगणेषु लज्जन्तीं माधवसमीपं न गच्छन्तीं राधिकां प्रति सखी जगाद । एतदेवाह । श्लोकेन गीतं संजनयति । सुचिरमिति । दृष्टिमोषे प्रदोषे स्फुरति सति कापि सखी राधां जगादेत्येवं योजना । प्रदोषे कथंभूते, दृष्टिमोषे दृष्टिं दर्शनं मोषयते खण्डयते, खण्डयतीति कर्मण्यण् । मुषखण्डने इति वचनात् । सुचिरमनुनयेनेत्यादि, कीदृशीं राधां रचितरुचिरभूषां, पुनः कीदृशीं निरवसादाम्, अनुनयेन मानभङ्गादित्यभिप्रायः । मालिनीनाम वृत्तम् ॥ १ ॥

॥श्रुतिरञ्जनी॥

कृष्ण सान्त्वनानन्तरं कृत्यमाह सुचिरमिति । सुचिरं बहुकालम् अनुनयेन बहुप्रकारप्रियोक्त्या मृगस्याक्षिणीव विशाले अक्षिणी यस्याः सा तथोक्ता बहुव्रीहौ सक्थ्यक्ष्णोरत्यौशसि ( ५।४।११३ ) समासान्ते णित्वान्मयट् । एवंविधां राधां प्रीणयित्वा सन्तोष्य स्वाभिसरणोन्मुखीकृत्य इति यावत् । कृतवेशे धृतकामुकालङ्कारसम्पदकेशवे कृष्णे कुञ्जे संकेतीकृतलतातागृहे शय्यां पल्लवतल्पं प्रति गतवति प्रयाते सति दृष्टीनां मोषः अपसरणं निरोधो यत्र तादृशे दृग्व्यापारप्रतिवन्धकगाढ़ान्धकारे इत्यर्थः ।

---

१। घ, छ, सानन्ददामोदरः ।

॥ विंशः प्रबन्धः ॥

वसन्तरागेण गीयते

विरचितचाटुवचनरचनं चरणे रचितप्रणिपातम् ।

सम्प्रति मञ्जुलवञ्जुलसीमनि केलिशयनमनुजातम् ।

मुग्धे मधुमथनमनुगतमनुसर[1] राधिके ॥ ध्रुवम् ॥ १ ॥

---

एतादृशे प्रदोषे रजनीमुखे "प्रदोषो रजनीमुखमित्यमरः" । स्फुरति आविर्भूते सति रचिता धृता रुचिरा रमणीया भूषा उद्दीपकालङ्काराः केयूरादयः यया तादृशीं निर्गतः अवसादः कृष्णस्य कार्य्य संसिद्धिः यस्याः सकाशात् तादृशीं तत्समये मानवशात् वा निष्फलीकृत कृष्णप्रार्थनामनोरथामित्यर्थः ।

राधा संसिद्धेतो घञ्प्रत्ययः । निरवसादामिति केषुचित् पाठः । स तु अनुप्रासननुगुणः । तथापि व्याक्रियते निर्गतोऽवसादः खेदशेषो यस्याः सकाशात् निरादयो गताद्यर्थे पञ्चम्येतत्समासः । कृष्णसान्त्वनेनापगतखेदामित्यर्थः । एवंविधां कापि काचित् सखी जगाद उचे ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे मुग्धे ! हे राधिके ! अनुगतं मधुमथनम् अनुसरेति योजना । हरेरनुगतत्वं प्रकटयन्नाह । विरचिता नानाभङ्ग्या प्रतिपादिता चाटुवचनस्य रचना येनेति विग्रहः । पुनः कीदृशम्, मञ्जुलवञ्जुलसीमनि केलिशयनमनयातं, मञ्जुलवञ्जुलसीमनीति मनोज्ञवेतसपर्य्यन्ते, निकुञ्जे इति यावत् ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

जगादेत्युक्तं तत्प्रकारमेव विशदयति विरचितेत्यादिना । वसन्तरागेण गीयते

---

१ । ख. अनुचर ।

घनजघनस्तनभारभरे दरमन्थरचरणविहारम् ।
मुखरितमणिमञ्जीरमुपैहि विधेहि मरालविकारम्[1] ॥ २ ॥

---

इत्युक्तं तस्यायमभिप्रायः केल्युपयोगित्वात् कवेः प्रियत्वाद्वा पुनरुपादानमिति । एकतालीतालेन रूपकतालेन वा गेयम् इति तत्र मुग्धे इत्यादिराधिकेत्यन्तं ध्रुवपदम्।

तस्यार्थः, हे मुग्धे ! हिताहितानभिज्ञे ! तदनभिज्ञत्वं च प्रियम्बवदतात्यङ्गीकरणादवगन्तव्यम् एवं विधे हे राधिके ! अनुगतमनुकूलं वशम्बदमित्यर्थः । मधुमथनं श्रीकृष्णम् , अत्र मधुमथनशब्देन कृष्णाभिधानं पौरुषाधिक्यप्रकाशनद्वारा सौन्दर्य्येण वसन्तमथनसूचनद्वारा च तस्यार्थवश्यानुसरणीयतासूचनार्थमित्यवगन्तव्यम् । अनुगतमित्येतदवश्यभजनीयता सूचनार्थमेतद्बोद्धव्यम् । अनुचर भजस्व । अनुसरेति क्वचित्पाठः। तदानुसरानुयाहि अनुभजेति पाठः स्फुटः । कीदृशं कृष्णमित्याशङ्कायामाह । विरचितेत्यादि । विरचिता विशेषेण निर्मिता चाटुवचनरचना प्रियोक्तिप्रपञ्चा येन तादृशं चरणे पादयुगले रचितः प्रणिपातः दण्डप्रणामे येन, अनेनात्यन्तमान्यता सूचिता । लोकेऽपि ह्येतादृस्यैवातिमान्यता दर्शनात् सम्प्रतीदानीं-मञ्जुला रमणीया पादाङ्गुलसीमा वानीरदेशः तस्यां वर्त्तमानं यत्केलिशयनं विहारशय्या तदनुयातम् अनुगतं भवन्तमित्यर्थः । एतादृशं मधुमथनम् अनुसरेत्वन्वयः ॥ १ ।

॥ सर्वाङ्गसुन्दरी ॥

हे राधे ! घनजघनस्तनभारभरे ! दरमन्थरचरणं विहारं यथा स्यादेवमुपेहीति योजना । घनजघनस्य स्तनभारस्य चातिभरो यस्यास्तस्या इति विग्रहः । तथा,

---

१ । मरालविहारं मरालनिकारमिति वा पाठान्तरम् ।

दरमन्थरयोः चरणयोर्विहारो यत्रेति विग्रहः । मुखरितमणिमञ्जीरमित्यपि क्रिया-विशेषणम् । मुखरितौ मणिमञ्जीरौ यत्रेति विग्रहः. विधेहि मरालविकारं, मरालो हंसः पादकटकस्तस्य विकोरो ध्वनिस्तं विधेहि कुर्वित्यर्थः । धातूनामनेकार्थत्वात् विपूर्वं करोति पदार्थः । मरालशब्दो हंसपर्य्यायः । मरालिचरणेन नूपुरकारित्वा-दित्यभिप्रायः । तदुक्तं श्रीनिवासेन—

इह हि सरसि सायं चारुपत्रं विधुन्वन्
दरतरलिततिर्य्यक् चञ्चु कण्डुयिताङ्गः ।
अनुसरति सरागः प्रेयसीमुत्प्रयाती-
मनुपदसमुदञ्चत्कण्ठनादो मरालः ॥ २ ॥

मरालो हंसपक्षिणीति विश्वः ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

घनेति, हे मुग्धे ! जघने स्तनौ च जघनस्तनं प्राण्यङ्गत्वादेकवद्भावः । घनं पृथुलं यद् जघनस्तनं तत् एव भारो गुरुद्रव्यं तस्य भरे भरणे सति, अथवा, भारः भरः जघनादीनां भारातिशयः "अन्यथातिशयो भरः" इत्यमरः । अत्यन्तभार इत्यर्थ । तस्मिन् सतीति वा राधायाः सम्बोधनं वा घनग्रहणं च विहारस्य मान्द्यताघटना-र्थमित्यवगन्तव्यम् । अतएव, दरमीषन्मन्थरः मन्दीभूतः चरणविहारः पादन्यासो यस्मिन् कर्मणि तद्यथा भवति तथा अतएव मुखरितं नादितं मणिमञ्जीरं रत्न-खचितनूपुरं यस्मिन् कर्मणि तद् यथा भवति तथा मधुमथनमुपेहि प्राप्नुहि । अथच, मरालस्य राजहंसस्य विहार इव विहारे गतिविशेषस्तं विधेहि, आचरणविहारमिति विशेष्यं द्वितीयान्तं श्लिष्टं तद्विशेषणं निकारमिति पाठे निकारं तिरस्कारं विधेहि कुरु गमनेन मरालं निराकुर्वित्यर्थः ॥ २ ॥

श्रृणु रमणीयतरं तरुणीजनमोहनमधुरिपुरावम्[१] ।
कुसुमशरासनशासनवन्दिनि पिकनिकरे भज भावम् ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

तरुणीजनमोहनमधुरिपुरावं श्रृण्वितीतियोजना । किं भूतं रमणीयतरं, पिकनिकरे भजभावं कुर्वित्यर्थः । विरहे यद्यसौ यन्मनः वैपरीत्यं तदपयात्विति यावत् । कीदृशे कुसुमशरासनशासनवन्दिनि कामाज्ञास्तावकेत्यर्थः । भो युवत्यः कान्तसन्नाहमन्तरेण मद्बाणादन्योऽविषादः तन्मानं विजहतेति कामाज्ञा ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

अनेन हेतुनाऽवश्यमङ्गीकरणीयं मद्वचनमित्याह । श्रृण्विति । कामिनीजनस्य मोहनः परवश्यः जनको यो मधुपविरावः भ्रमरझङ्कारः तं श्रृणु आकर्णय अन्यथा तव श्रवणसद्भाव एव वृथा स्यादितिभावः । किञ्च हे मुग्धे ! कुसुमशरासनस्य मदनमहाराजस्य शासनमाज्ञां तस्य वन्दिनि वैतालिके मदनमहाराजस्याज्ञा नोल्लंघनीयेति युवतिरतिविकारं प्रत्युद्घोषक इत्यर्थः । एवंविधे पिकनिकरे कोकिलनिकुरुम्बे अधिकरणे भावमन्तःकरणं भज । कूजति पिकनिकरेऽन्तःकरणं निधेहीत्यर्थः अथवा पिकनिकरे कुसुमशरासनवन्दिनि सति भावं भज । सम्भोगश्रृङ्गारस्थायीभावरतिभावं कुर्वित्यर्थ । अन्यथा महानपराधः कुसुमशरपीडा स्यादिति भावः । एतत्सूचनार्थमेव कुसुमशरासनेत्युक्तमिति ज्ञेयम् ।

अतश्च विरहिजनकर्णशूलायमानमधुपकोकिलालापे श्रूयमाने सति वल्लभं मधुमथनमवश्यमनुसरेति भावः ॥ ३ ॥

---

१ । ख, घ, मधुपविराबम् ।

मरालविकारमिति पाठान्तरम् ।

अनिलतरलकिशलयनिकरेण करेण लतानिकुरम्बम् ।
प्रेरणमिव करभोरु करोति गतिं प्रतिमुञ्च विलम्बम् ॥
॥ ४ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

हे करभोरु ! लतानिकुरम्बमनिलतरलकिशलयनिकरेण करेण तव प्रेरणमिव करोति, तस्माद्‌गतिं प्रतिविलम्बं मुञ्चेति योजना । अनिलतरलकिशलयनिकरेण करेण इत्यसमस्तरूपकं लतानिकुरम्बमिति व्रततिचय इत्यर्थः । "स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकमित्यमरः" । उरुत्तरपदादौपम्ये इति उङ् प्रत्ययः । पूर्वानुवृत्ता पूर्वतयारामरहितेन च उरोः करभोपमानता, "मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः" ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

अनिलेति । करभो नाम मणिबन्धकनिष्ठयोर्मध्यवर्त्तिदेशविशेषः । "मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः" । स इव उरुर्यस्या सा तथोक्ता तस्याः सम्बुद्धौ हे करभोरु ! उरुत्तरपदादौपम्य इति उङ् अम्बार्थो नद्योर्ह्रस्व इति ह्रस्वः । एतादृशे हे मुग्धे ! राधे ! लतानिकुरम्बं वल्लिकदम्बकं कर्त्तृ अनिलेन पवमानेन तरलानि चञ्चलानि किशलयानि तेषां निकरः समूहः तद्रूपेण करेण व्यस्तरूपकमेतत्, गतिं कृष्णवासगमनं प्रतिप्रेरणम् औन्मुख्यं करोति वा । अतश्च विलम्बं कृष्णाभिसरणे आलस्यं मुञ्च त्यज । अचेतनादिभिरपि भवत्कर्त्तृककृष्णानुसरणमनुमोदितं किल । अचेतनावत्यानुमोदितव्यमिति किमु वक्तव्यम् । तथा च विलम्बं विहाय कृष्णाभिसरणं कर्त्तव्यमिति तात्पर्य्यम् । उत्प्रेक्षानुप्राणितासमासोक्तिरलंकृतिः रूपकं च ॥ ४ ॥

**स्फुरितमनङ्गतरङ्गवशादिव सूचितहरिपरिरम्भम् ।**
**पृच्छ मनोहरहारविमलजलधारममुं कुचकुम्भम् ॥ ५ ॥**

॥ सर्वाङ्गसुन्दरी ॥

यदि मद्वाक्यं न करिष्यसि तदात्मीय कुचकुम्भं पृच्छेत्युपदिशन्त्याह । स्फुरितेति । हे सखि ! कुचकुम्भममुं पृच्छेति योजना । कीदृशमनङ्गतरङ्गवशात् स्फुरितं कामवशात् कम्पितमित्यर्थः । पुनः कीदृशं, मनोहरहारविमलजलधारं मनोहरहार एव विमलजलधारा यत्रेति विग्रहः । यो हि पूर्णकुम्भश्चलति तन्मुखात् जलधारा पतति । कुचश्चायं कुम्भत्वे निरूपितं कम्पितश्चानङ्गकल्लोलत्वेन तस्माज्जलधारात्वेन हारो रूपितः । उत्प्रेक्ष्यते सूचित हरिपरिरम्भमिवेति स्तनकम्पनं नार्य्याः प्रियसङ्गमं सूचयतीत्यस्ति स्मृतिरेषा ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

स्फुरितमिति । हे मुग्धे ! अनङ्गस्य कामदेवस्य तरङ्गा इव तरङ्गा निरन्तरमन्मथोद्दीपनोद्रेकपरम्परा इत्यर्थः । तद्वशादिव तन्निमित्तादिव स्फुरितं कम्पितम्, अतएव सूचितः ज्ञापितः हरिपरीरम्भः कृष्णालिङ्गनं येन तादृशम् । अत्र वामभागस्फुरणमङ्गीकार्य्यम् । तस्यैव स्त्रीणां शुभसूचकत्वात् । "कुचस्पन्दात्प्रियाश्लेषादूरुस्पन्दात् पतिं लभेत्" इति ।

मनोहारश्चित्ताकर्षको यो हारः मुक्ताहारः स एव विमला धारा यस्मिन् तादृशं जलाधारकल्पहारालङ्कृतमित्यर्थः । एतादृशं कुचकुम्भं स्तनकलशं पृच्छ आपृच्छ । समनन्तरमेव । मम प्रियालिङ्गनं भविष्यति किमिति, स्फुरितकुचकलशं प्रति प्रश्नं कुर्वित्यर्थः । कुचकुम्भमित्यत्रोपमानरूपकम् । तथा आरोप्यमाणप्राधान्ये तस्यैव प्रश्नकर्मत्वं स्यात् । तत्तु विरुद्धं स्फुरितविरोधादिति तदुक्तम् उपमायां हि पूर्वस्य पदार्थस्य प्रधानतारूपके तूत्तरपदार्थस्य प्राधान्यमिष्यते ॥ ५ ॥

अधिगतमखिलसखीभिरिदं तव वपुरपि रतिरणसज्जम् ।
चण्डि रसितरसनारवडिण्डिममभिसर सरसमलज्जम् ॥
॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

सम्प्रति माधवानुसरणे काञ्च्यादिभूषाग्रहणं प्रत्यक्षमप्यनुमानमाह । अधिगतेति । हे चण्डि ! हे कोपने ! तवेदं वपुरपि रतिरणसज्जम् इत्यखिलसखीभिरधिगतं कथमन्यथा काञ्च्यादिग्रहणमिति भावः । वपुरपीत्यत्रापि शब्दात् न केवलं मनो रतिरणसज्जमिति । वपुरपि तस्मादलज्जं लज्जां त्यक्त्वा सरसं यथा स्यात्तथाभिसरेति वाक्यार्थः । रसितरसनारवडिण्डिममित्यपि क्रियाविशेषणम् । रसिता या रसना तया रव एव डिण्डिमो वाद्यविशेषो यत्रेति विग्रहः । "वाद्य प्रभेदा डमरु मड्डु डिण्डिमझर्झरा इत्यमरः ।" ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

अधिगतमिति । हे मुग्धे ! अखिलसखीभिः समस्ताभिरालीभिः न त्वकयैव केवलमित्यर्थः । तव वपुः शरीरमपि रतिरणे मुखनखप्रहारादिरूपसुरतकदने सज्जं सन्नद्धमिति इदमधिगत विज्ञातमतश्च त्वया हृदयगोपनं न कार्य्यमिति तात्पर्य्यम् । हे चण्डि ! कोपनशीले ! हृदि स्थितार्थप्रकाशनेऽसम्भावितद्योतनार्थमेतत्सम्बोधनमित्यवगन्तव्यम् । रसिता शब्दायमाना या रसना काञ्ची रसशब्द इत्यस्मात्कर्त्तरि क्तः कर्मणि वा, तस्याः रवः स्वरः स्वनः स एव डिण्डिमो वाद्यविशेषः यस्मिन् कर्मणि तद् यथा तथा " वाद्यभेदाड्मरु मड्डु डिण्डिमझर्झरा इत्यमरः ।" सरसं साभिलाषं यथा स्यात्तथा अलज्जं निर्लज्जं यथा स्यात्तथाभिसर कृष्णसमीपं प्रतियाहि ॥ ६ ॥

**स्मरशरसुभगनखेन सखीमवलम्ब्य करेण सलीलम् ।**
**चल बलयक्वणितैरवबोधय हरिमपि निजगतिशीलम्[1] ॥**
**॥ ७ ॥**

---

॥ सर्वाङ्गसुन्दरी ॥

हे सखि ! हे राधिके ! करेण सखीमवलम्ब्य सलीलं चलेति योजना । कीदृशेन करेण स्मरशरसुभगनखेन अन्धकारे गच्छन्त्या भीतिः स्यादिति कामशास्त्रग्रहणम् । वलयक्वणितैरवबोधय हरिमपि निजगतिशीलमिति न केवलं चलेत्यपि शब्दार्थः । स्वभावचपलो हरिस्तव विलम्बात्काचिदन्यामभिसरिष्यतीति दूरतो हरौ निजगतिबोधनमुचितत् ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

ननु युद्धसाधनं सहायञ्च विना एकाकिन्या मया कथं गन्तव्यमित्याकाङ्क्षायामाह । स्मरेति । हे मुग्धे ! स्मरस्य कामदेवस्य शरा बाणास्तद्वत्सुभगाः संख्याकारेण च रमणीया नखा यस्मिन् तादृशेन करेण, सलीलं साभिलाषं यथा स्यात्तथा सखीमालीमवलम्ब्य सख्याः प्रकोष्ठं गृहीत्वेत्यर्थः । एतच्च विलापद्योतनार्थमित्यवगन्तव्यम् । चल कृष्णावासं प्रतिगच्छत्येनं केवलं चौरवद्गमनमात्रं, किन्तु प्रतिभट्टरूपं हरिं रणाय सन्नाहयेत्यर्थः । कलयेति । हे राधे ! वलयक्वणितैः कङ्कणरवैः निजगतिशीलमात्मगमनपरिपाटीं हरिमपि अधिबोधय ज्ञापय "गतिबुद्धी (१।४।५) त्यादिना" द्विकर्मकत्वम् । यथा लोके कश्चिदेकाकी युद्धाय गच्छन् धृतासीत्याद्यनेकप्रहरणः कस्यचित् भट्टस्य प्रकोष्ठं गृहीत्वा रणस्थलमभिगम्य स्वानुवृत्तिडिण्डिमघोषैः स्वागमनं ज्ञापयन् प्रतिभटं युद्धाय सन्नाह्वयति तद्वत्त्वमपीति भावः । दीपकालङ्कारः समासोक्तिः वा ॥ ७ ॥

---

१ । निगदितशीलम् इति पाठान्तरम् ।

श्रीजयदेव-भणितमधरीकृतहारमुदासितवामम् ।
हरिविनिहितमनसामधितिष्ठतु कण्ठतटीमभिरामम्[१] ॥
॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

श्रीजयदेवभणितं कर्तृ हरिविनिहितमनसां जनानां कण्ठतटीमभिरामं यथा स्यात्तथाधितिष्ठत्विति योजना । अधिशीङ्स्थासां कर्म इति कर्मत्वम् । ननु कथमभिरामं यदा कदापि हारार्पणेन कदापि कामिन्यार्पणेन विच्छेदादित्याह । अधरीकृतहारमित्यर्थः । "अधस्तादपि चाधरः" इत्यमरः । पुनः कीदृशम् । उदासितवामं दूरीकृतकामिनीकं इतोऽप्यधिकरसत्वादित्यभिप्रायः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । उदासितः स्थिरीकृतः वामः वक्रभावः यत् तादृशं हारस्य कण्ठसीमायां वक्राकारत्वेन लम्बमानत्वात् सूक्तिमालिकायास्तद्वैलक्षण्यसूचनार्थमिदं विशेषणमवगन्तव्यम् । अतएवाधरीकृतः सूक्तिमालिकया तिरस्कृतः हारः वक्राकारः मुक्ताहारो येन तादृशं श्रीजयदेवभणितसूक्तिमालिकारूपं गीतं अथवा जयदेवभणित मुक्तरूपं गीतं वा हरौ श्रीकृष्णे विनिहितानि विशेषणे न्यस्तानि मनांसि यैस्तेषां हरिप्रवणचित्तानामित्यर्थः । कण्ठतटीं कण्ठसीमानं अविरामं न विद्यते विरामो यस्मिन् कर्मणि तद् यथातथा निरन्तरमित्यर्थः । अभिराम इति क्वचित्पाठः, तदा गीतविशेषणं क्रियाविशेषणं वा अधितिष्ठत्वधिवसतु निरन्तरं हारवत् कण्ठदेशे तिष्ठत्वित्यर्थः । अधिशीङ्स्थासां कर्म ( १ । ४ । ४६ ) त्यादिना कर्मसंज्ञा ॥ ८ ॥

१ । ख-छ. कण्ठतटीमविरामम् ।

सा मां द्रक्ष्यति वक्ष्यति स्मरकथां प्रत्यङ्गमालिङ्गनैः
प्रीतिं यास्यति रंस्यते सखि समागत्येति चिन्ताकुलः ।
स त्वां पश्यति वेपते पुलकयत्यानन्दति स्विद्यति
प्रत्युद्गच्छति मूर्च्छति स्थिरतमः कुञ्जे निकुञ्जे प्रियः ॥
॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

सम्प्रति राधायां हरेरुत्कण्ठां सखी कथयत्याह । सखीनायकस्यानुरागं रञ्जयति । सा मामिति । समागत्य द्रक्ष्यति इत्यादिकं विचिन्त्य स्थिरतमः कुञ्जे निकुञ्जे प्रियो हरिः स त्वां पश्यति इत्यादि योजना । स त्वां पश्यति इति वेपते । पुलकयत्यानन्दति स्विद्यति प्रत्युद्गच्छति, मूर्च्छति, स्थिरतमः तत् सात्त्विकभावादित्यधिगन्तव्यम् । प्रत्युद्गच्छतीति सैषा प्रिया समागता इति कृत्वा ससम्भ्रममभ्युत्थानं करोति । मूर्च्छतीति अनन्तरध्यानं ध्यानभङ्गात् त्वामदृष्ट्वा ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

त्वया शीघ्रमभिसरणं न क्रियते चेत् प्रियचित्तव्यामोहो भविष्यतीत्याह । सामिति । हे सखि ! राधे स प्रियः श्रीकृष्णः सा मया कृतापराधा राधा समागत्य मत्समीपं प्राप्य अस्य सर्वत्रान्वयः । मां द्रक्ष्यति रोषं परित्यज्य वीक्षते । न केवलं दर्शनमात्रं तदनन्तरकृत्यं च सम्भाषणमपि सम्भविष्यतीत्याह । स्मरेति । स्मरकथां मन्मथोद्दीपकरतस्य वार्त्तां वक्ष्यति वदिष्यति न केवलमुद्दीपककथामात्रकरणम् अपि त्वनन्तरकृत्यमालिङ्गनमपि सम्भविष्यतीत्याह । प्रत्यङ्गमालिङ्गनैः प्रीतिं यास्यति । न केवलमालिङ्गनमात्रमपितु सम्भोगं करिष्यतीत्याह । रंस्यत रति रंस्यते सुरतसम्बन्धविशेषैः क्रीडिष्यत इति चिन्ताकुलः पूर्वोक्तविचार परम्पराव्याकुलितचित्तः

सन् त्वां पश्यति। चिन्तावशात् पुरः प्रादुर्भूतां भवतीं वीक्षिष्यते । भविष्यति लट् । अथवा चिन्तावशात् सन्निधानेन लट् । प्रयोगोपपत्तिर्न केवलं दर्शनमात्रम् अपि तु वेपते भवद्दर्शनात्कम्पिष्यते, अन्यसम्भोगरूपापकारिणः प्रियावलोकने कम्पस्य युक्तत्वादितिभावः । न केवलं कम्पनमात्रम् अपितु पुलकयति भवद्दर्शनजनितसात्त्विकोदयवशात् गात्रं पुलकवत् करोतीत्यर्थः । विरहपूर्वक्रिया दर्शनस्य रोमोद्गमत्वादिति भावः । पुलकयतीत्यत्र तत्करोति णिचिति णिच् । न केवलं पुलकजननमात्रं किन्तु उत्पुलकीभावानन्तरमनन्दोऽस्तीत्याह । आनन्देति । आ नन्दति मत्कृतापराधपरम्परामविगणय्यैव चिरपरिचितं मां विचार्य आगतेत्यन्तरमेव न केवलमानन्दमात्रं तदनुगुणस्वेदाख्यसात्त्विकभावोऽप्यस्तीति आह । स्विद्यतीति । स्विद्यति भवद्दर्शनजनित-सात्त्विकभावानुकूलकृत्यमस्तीत्याह । प्रत्यद्गेति प्रत्युद्गच्छति चिन्तावशात् पुरः प्रादुर्भूता त्वमागतेति प्रत्युत्थानं करोतीत्यर्थः अन्यथा सात्त्विकोदयस्य नैरर्थक्यं स्यादिति भावः। प्रत्युद्गमनान्तरं कृत्यमाह मूर्च्छतीति। तमः पुञ्जे उक्तवर्णनानुकूलमोहपटले सति निकुञ्जे लतामन्दिरे मूर्च्छति मूर्च्छां प्राप्नोति, त्वदागमनहेतुनेति शेषः ।

अथवा तमसोऽन्धकारस्य पुञ्जं समूहो यस्मिन्निति व्युत्पत्त्या इदं कुञ्जविशेषणं वा । अतश्च त्वया शीघ्रमेवाभिसर्त्तव्यमिति तात्पर्य्यम् यत्राष्टमे नवमेऽनङ्गावस्थे अनुसम्बन्धेषु सात्त्विकेषु मध्यरोमाञ्चादयः कति च न बोद्धव्याः-वेपते पुलकयतीत्यादिक्रियापदेषु पश्यतीत्यत्रैव प्रक्रियानुसन्धेया, अत्र सञ्चारिभावानां मध्ये केषांशच्चलवतानुसन्धेया ॥ ९ ॥

अक्ष्णोर्निक्षिपदञ्जनं श्रवणयोस्तापिञ्छगुच्छावलिं
मूर्ध्नि श्यामसरोजदाम कुचयोः कस्तूरिकापत्रकम् ।
धूर्त्तानामभिसारसत्वरहृदां[1] विष्वङ् निकुञ्जे सखि
ध्वान्तं नीलनिचोलचारुसुदृशां प्रत्यङ्गमालिङ्गति ॥

॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

सम्प्रत्यन्धकारनैविड्यमभिसारोचितं प्रतिपादयन्त्याह । इदानीं शीघ्रगमनायानुकूलार्थं श्लोकं दर्शयति । हे सखि ! राधिके ! विष्वक् सर्वतो व्यापि ध्वान्तं सुदृशां प्रत्यङ्गमालिङ्गतीति योजना । "समन्तस्तु परितः सर्वतो विष्वगित्यपीत्यमरः ।" कीदृशं नीलनिचोलचारु नीलवसनरुचिरं ननु सुदृशी भूषणं किं नास्त्येव येनान्धकारमलङ्कृत्यमित्याह । अभिसारसत्वरहृदामिति । अभिसारे सत्वरमलङ्कार ग्रहणेऽप्यविलम्बकं हृन्मानसं यासामीति विग्रहः; पुनः कीदृशानां धूर्त्तानां "पापी धूर्त्तस्तु वञ्चक इत्यमरः" । यथान्तःपुरस्त्री प्रसादयति सौविदल्लादौ । धूर्त्ता वस्त्रं विरहय्य प्रत्यङ्गमालिङ्गनसुखमाप्नुवन्तीत्यभिप्रायः ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

ननु सर्वेषु पश्यत्सु अकृतभूषणया च जारिण्या मया प्रियावासं प्रति कथमभिसर्त्तव्यमित्याशङ्क्याह । अक्ष्णोरिति । हे सखि ! राधे विषु अञ्चतीति विष्वक् सर्वतो व्यापी, ध्वान्तं गाढान्धकारः । निकुञ्जे सङ्केतस्थाने लतागृहेषु निकुञ्ज इति जाताबेकवचनम् । अभिसारो नाम सङ्केतस्थलगमनं तत्र सत्वरहृदां त्वरमाणमानसानां कितवाख्यानां धूर्त्तानां पत्यादिवञ्चनशीलानामिति यावत् । एतादृशां सुदृशां कामिनीनाम् अक्ष्णोः नयनयोः अञ्जनं कज्जलं निक्षिपत् निदधत् तद्भ्रान्तिं कुर्वन्नित्यर्थः ।

१ । सम्भ्रमजुषामिति पाठान्तरम् ।

काश्मीरगौरवपुषामभिसारिकाणा-
मावद्धरेखमभितो रुचिमञ्जरीभिः ।
एतत्तमालदलनीलतमं तमिस्रं
तत्प्रेमहेमनिकषोपलतां तनोति ॥ ४ ॥

---

श्रवणयोः कर्णयोः तापिञ्छगुच्छावलीं तमालस्तवकपुञ्जं निक्षिपत् मूर्ध्नि मस्तके श्यामसरोजदाम नीलोत्पलमालिकां निक्षिपत् कुचयोः कस्तूरिकापत्रकं मृगनाभिपत्रावलीर्निक्षिपत् नीलः नीलवर्णः निचोलः अन्यदर्शनप्रतिबन्धकप्रच्छदपटः तद्वचारु रमणीयं सत् तमः एव प्रत्यङ्गं प्रत्यवयवं आलिङ्गति आवृणोति । तथा चान्धकारस्यैवालङ्कारस्थानीयत्वात् सर्वदृष्टिविधायकावरणपटरूपत्वाच्चावश्यमिदानीमेवावगन्तव्यमिति तात्पर्य्यम् ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

एतत्तमिस्रमभिसारिकाणां रुचिमञ्जरीभिराबद्धरेखं तत्प्रेमहेमनिकषोपलतां तनोतीति योजना । यथा सुवर्णस्य निकषपाषाणे शुद्धिजिज्ञासा । तथा तत्प्रेम्णापि घनान्धकारे निःसाध्वसतया शुद्धिजिज्ञासेति भावः । एतेनाप्यन्धकारनैविड्यं प्रतिपादितम् । "काश्मीरं कुङ्कुमे प्रोक्तं टङ्क पुरष्करमूलयोः ।" ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

पुनरपि अभिसरणानुकूलं तमेव वर्णयति । काश्मीरेति । हे सखि ! राधे ! काश्मीरेण कुङ्कुमेन काश्मीरवद्गौराणि पीतवर्णानि वपूंषि शरीराणि यासां तादृशीनां "पीतो गौरो हरिद्राभः" इत्यमरः । अभिसारिकाणां स्वैरिणीनां रुचिमञ्जरीभिः कान्तिपुञ्जैः अभितः सर्वतः आवद्धा रेखा यस्मिन् तादृशं, तमालदलानीव तापिञ्छपर्णानीव नीलतममन्यन्तनीलम् एतत् प्रतीयमानं तमिस्रं कर्त्तृ, तस्मिन् श्रीकृष्णे प्रेमैव हेमसुवर्णं तस्य निकषोपलतां परीक्षाप्रस्तरभावं तनोतीव काश्मीररुषित गौरवपुः स्वैरिणी कषायकान्तिरेखालङ्कृतमिस्रं हेमरेखां निकषोपले इव कृष्ण-

हारावली-तरलकाञ्चन-काञ्चिदाम-
मञ्जीरकङ्कणमणिद्युतिदीपितस्य ।
द्वारे निकुञ्जनिलयस्य हरिं निरीक्ष्य
व्रीडावतीमथ सखीमियमित्युवाच[१] ॥ ५ ॥

---

प्रेमातिशयमभिसारिकाणामभिव्यञ्जयतीत्यर्थः । अतश्च त्वयापीदानीमेवावश्यं गन्तव्यमिति तात्पर्यम् । अत्र काव्यलिङ्गोत्प्रेक्षालङ्कारः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

सम्प्रति संकेतस्थानं गत्वा लज्जा वशात् प्रियपार्श्वमभजमानां राधां सखी प्राह । हारावलीति । निकुञ्जनिलयस्य द्वारे हरिं निरीक्ष्य व्रीडावतीं राधामियं दूती वक्षमाणमुवाचेति योजना । कीदृशस्य हारावली तरलकाञ्चनकाञ्चीदाममञ्जीरकङ्कणमणिद्युतिदीपितस्य "तरलो हारमध्यगः" इत्यमरः । हारावली तरलश्च काञ्चनकाञ्चीदाम्न मञ्जीरश्च कङ्कणमणिश्च इति द्वन्द्वः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

वर्णितान्धकारानन्तरकृत्यमाह । हारेति । अथानन्तरं काञ्चनस्य सुवर्णस्य काञ्चिदाम रसनाकलापः स च मञ्जीरश्च कङ्कणं च तानि तेषु मणयः तरलाः हारमध्यमणयः हारावल्यश्च मणयश्चेति द्वन्द्वः तेषां द्युतिभिर्दीप्तिभिः दीपितस्य प्रकाशितस्य निकुञ्जनिलयस्य लतामन्दिरस्य द्वारे स्थितमिति शेषः । हरिं श्रीकृष्णं निरीक्ष्य व्रीडावतीं सखीं राधां स्वीया सखी इति वक्ष्यमाणमुवाच उचे । अत्र हारादयः कृष्णसम्बन्धिनः एव ग्राह्याः । न राधासम्बन्धिनः एवाभिसारिकाणां कङ्कणमञ्जीरादेरसमीचीनत्वात् । यद्वा, उपपतिसमीपागमने उद्दीपकनूपुरादिधारणस्याविरोधाद्राधा – सम्बन्धिन एव ग्राह्याः ॥ ५ ॥

---

१ । सखी स्वयमित्युवाच इति पाठान्तरम् ।

॥ एकविंशः प्रबन्धः ॥

वराडीरागेण[१] गीयते

मञ्जुतरकुञ्जतलकेलिसदने ।
प्रविश राधे माधवसमीपमिह,
विलस रतिरभसहसितवदने ॥ ध्रुवम् ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

किमुवाच दूतीत्याह । वक्ष्यमाणं चेत्याह । मञ्जुतरेति । हे राधे ! माधव समीपं प्रविश, इह मञ्जुतरकुञ्जतलसदने विलस चेति सर्वत्र वाक्यार्थः । मञ्जुतरकुञ्जतलमेव केलिसदनमिति विग्रहः । रतिरभसहसितवदने ! इति सम्बोधनम् । रतिरभसेन हसितं वदनं यस्या इति विग्रहः ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

उक्तप्रकारमेव विषदयति । मञ्जुतरेत्यादि । वरालीरागेण गीयते इत्युक्तम् । तस्यायमभिप्रायः । पूर्वगीते वसन्तस्य उद्दीपकत्वात् । वरालिकायास्तत्पत्नीत्वात्तदनन्तरम् अस्या अवस्थानं युक्तमिति तदुक्तमिति "रामक्रिया वराली च कौशी वासन्तयोषित" इति, झम्पातालेन गेयम् । तल्लक्षणं तु—

द्रुतद्वयक्षं विरामान्तं लघ्व झम्पा प्रकीर्त्तित इति । रतिरभसेन सुरतार्थचापलेन सम्भ्रमेणेत्यर्थः । यद्यपि हसितं तद्वदने यस्या दरहसितवदना यस्याः सम्बुद्धिः । हे राधे ! मञ्जुतरमत्यन्तमनोहरं कुञ्जतटे केलिसदनं तस्मिन् । कुञ्जरूपविहारमन्दिरे माधवस्य लक्ष्मीपतिरूपश्रीकृष्णस्य समीपमभ्यर्णं लोके हि प्रायेण प्रेमवाजिकः सम्पन्नवल्लभानुसरणप्रवेशो भवति । तद्वत् प्रकृतेऽपि द्योतयितुं साधकसमीपमित्युक्तमिति ज्ञेयम् । यद्वा प्रवेशे विलम्बे क्रियमाणे सतुल्यलक्ष्मीसकाशं प्रति गमिष्यतीति

१ । ग, देशवराडीरागेण ।

नवभवदशोकदलशयनसारे ।
प्रविश राधे माधवसमीपमिह,
विलस कुचकलशतरलहारे ॥ २ ॥
कुसुमचयरचितशुचिवासगेहे ।
प्रविश राधे माधवसमीपमिह,
विलस कुसुमसुकुमारदेहे ॥ ६ ॥

भयसूचनार्थं माधवेत्युक्तमिति ज्ञेयम् । प्रविश इह रहःस्थले विलस विहर विलासं कुर्वित्यर्थः ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

अत्रापि पूर्ववन्मुखबन्धयोजना, मञ्जुतरकुञ्जतलकेलिसदने, कीदृशे, नवभवदशोकदलशयनसारे, नवभवदशोकदलमेव शयनसारः श्रेष्ठशय्या यत्रेति विग्रहः । कुचकलशतरलहारे इति सम्बोधनम् ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

नव भवेति । कुचकलशयोः पयोधरकुम्भयोः तरला रतिरभसादिना चञ्चला हारा यस्याः सम्बुद्धिः इदं तु भाविसुरतम्, अथवा तरलो नायकः रमणी प्रधाना हारा यस्यास्तस्या सम्बुद्धिः, शाकपार्थिवादित्वान्मध्यपदलोपि समासः । "तरलो हार मध्यगः'' इत्यमरः। एतादृशे हे राधे ! माधवसमीपं प्रविश । किञ्च नवंनूतनं यथा भवन्ति तथा भवन्ति उत्पद्यमानानि यान्यशोकदलानि पल्लवा इत्यर्थः । अशोकेति दलविशेषणं यौगिकं वा पदं तैः कृतः शयनसारस्तल्पोत्तमो यत्र तादृशे इह लतामन्दिरे विलस इत्यन्वयः ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

अत्रापि पूर्ववन्मुखबन्धयोजना । पुनः कीदृशे, कुसुमचय रचित शुचिवासगेहे ।

चलमलयवनपवनसुरभिशीते ।
प्रविश राधे माधवसमीपमिह,
विलस रसरसितललितगीते ॥ ४ ॥

कुसुमचयेन रचितं शुचिवासगेहं यत्रेति विग्रहः । निकुञ्जाभ्यन्तरे पुष्पगृहरचना विशेष इति पुनरुक्तशङ्काम् । कुसुमसुकुमारदेहे इति सम्बोधनम् ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

कुसुमेति । हे कुसुमसुकुमारदेहे कुसुमवत्कोमलशरीरे राधे ! माधवसमीपं प्रविश । न केवलं प्रवेशमात्रम् अपितु कुसुमचयेन सुमनः स्तोमेन रचितं निर्मितम् अतएव शुचिः पवित्रं मनोहरमिति यावत् । वासगेहं गर्भागारं यस्य तस्मिन् इह लतागृहे विलसेत्यन्वयः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

अत्रापि पूर्ववन्मुखबन्धयोजना । चलमलयवनपवनसुरभिशीते, चलस्य मलयवनस्य पवनेन सुरभि च तत् शीतं चेति विग्रहः । रसरसितललितगीते इति सम्बोधनम् ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

चलेति । रसेन श्रृङ्गारादिना वलिता संजाता रसभरितेत्यर्थः । बलितेत्यत्र तारकादित्वादच यस्येति चेतीकारलोपः । अतएव ललिता रमणीया गीतिर्गानं यस्याः सा तादृशी न वरसम्पन्ना गानचतुरेत्यर्थः । तस्याः सम्बुद्धिरिति केषुचित्पाठः । तदा रतिस्वभावो यस्याः सा तस्याः सम्बुद्धिः । अनेन राधाया गानचातुरी सूचिता । एतादृशे हे राधे ! चलश्चञ्चलस्वभावो यः मलयवनपवनः चन्दनवनानिलस्तेन सुरभिः शीतः शीतलः तादृशे इह लतामन्दिरविशेषणं वा । तदा गीतं भ्रमरीमङ्गी कर्त्तव्यम् ॥ ४ ॥

विततबहुवल्लिनवपल्लवघने ।
प्रविश राधे माधवसमीपमिह,
विलस चिरमलसपोनजघने ॥ ५ ॥

मधुमुदितमधुपकूलकलितरावे ।
प्रविश राधे ! माधवसमीपमिह,
विलस मदनशरसरसभावे ॥ ६ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

अत्रापि पूर्ववन्मुखबन्धयोजना । पुनः कीदृशे, वितत बहुवल्लिनवपल्लवघने, विततानां बहुवल्लीनां नवपल्लवेन घने सान्द्रे "घनं निरन्तरं सान्द्रमित्यमरः" । चिरमिति बिलस क्रियाविशेषणम् । अलसपीनजघने इति सम्बोधनम् । अलसं पीनं जघनं यस्या इति विग्रहः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

वितततेति । कुचौ कुम्भाविव कुचकुम्भौ जघने च कुचकुम्भजघनं प्राण्यङ्गत्वादेकवद्भावः । अथवा पीनं पीवरं वर्त्तुलं वा कुचजघनं यस्याः तस्याः सम्बृद्धिः । अत्र जघनयोर्मन्दगतिहेतुरलसत्वमित्यवगन्तव्यम् । अलसाः मन्दगतिः सा च पीनजघनेति योजना । पीनजघनत्वादेवास्याः मन्दगतिरवगन्तव्या । जघनेति न जाड्ये याहीति प्रतिषेधः । एतादृशे हे राधे ! वितता विस्तृता या बहुवल्लयः अनेकलता तासां पल्लवैः नूतनकिशलयैः तत्र विततबहुग्रहणं छाया बाहुल्याचौरानुकूल्यार्थं नवग्रहणं पल्लवानामत्यन्तमृदुलता द्योतनार्थमित्यवगन्तव्यम् । घने निविडे इह कुञ्जे इत्यादि पूर्ववत् ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

अत्रापि पूर्ववम्मुखबन्धयोजना । पुनः कीदृशे, मधुमुदितमधुपकुलेन कलितः कृतो

मधुरतरपिकनिकरनिनादमुखरे ।
प्रविश राधे माधवसमीपमिह
विलस दशनरुचिरुचिरशिखरे ॥ ७ ॥

रावो यत्रेति विग्रहः । मदनशरसरसभावे इति सम्बोधनम् । मदनशरेण सरसो भावो यस्या इति विग्रहः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

मधुमुदितेति । मदनशराः कामबाणाः तैः रभसः सुरतकरणवेगः "तृतीया तत्कृते ( २ । १ । ३० ) त्यादिना समासः " । रभसेन भावः । प्रियसङ्गमाभिप्रायो यस्या तस्या सम्बुद्धौ । रभसभावे तत्रापि समासः पूर्ववत् । अथवा मदनशरैः रभसभावः शीघ्रप्रियसङ्गमाभिप्रायो यस्याः तस्याः सम्बुद्धिः । अथवा मदनशरैः रभसश्चञ्चला-भावः अन्तः करणं यस्यास्तादृशी कामशरकृत चित्तचाञ्चल्येत्यर्थः । तस्याः सम्बुद्धिः चित्तचाञ्चल्यज्ञानं तु चेष्टावशादवगन्तव्यम् । अतएव सम्बुध्युपपत्तिः, मदनरसविवश भावेति क्वचित्पाठः । तदा मदनेन कामदेवेन रसः सम्भोगवाञ्छा "श्रृङ्गारादौ विषे वीर्य्यें गुणे रागे द्रवे रसः" इत्यमरः । समासः पूर्ववत् । तेन विवशभावः परायत्तं पारवश्यं वा यस्यास्तस्याः सम्बुद्धिः एवंविधे राधे मधुना मकरन्देन मुदिताः सन्तुष्टाः ये मधुपाः मधुव्रताः तेषां कुलेन संघातेन कलितः कृतः रावो झङ्कारो यत्तत्तादृशे । मधुकर झङ्कारकुल इत्यर्थः । उद्दीपनार्थमिदं गृहीतमिति मन्तव्यम् इह इत्यादि पूर्ववत् ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

अत्रापि पूर्ववन्मुखबन्धयोजना । पुनः कीदृशे, मधुरतरपिकनिकरनिनादमुखरे, मधुरौ स्वादुशोभनावित्यमरः । दशनरुचिरुचिरशिखरे इति सम्बोधनम् । दशनरुच्या रुचिरं शिखरं माणिक्यविशेषो यस्या इति विग्रहः । "पक्व दाडिमबीजाभं माणिक्यं शिखरं विदुः" ॥ ७ ॥

विहितपद्मावतीसुखसमाजे ।

कुरु मुरारे मङ्गलशतानि

भणति जयदेवकविराजराजे ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

मध्विति । दशनानां रुच्या कान्त्या रुचिराणि मनोहराणि शिखराणि यस्यास्तस्याः सम्बुद्धिः, अत्र पदसन्निधानान्निषदस्थपतिन्यायेन शिखराणां दन्त्यत्वमवगन्तव्यम् । रुचिरविजितशिखरेति क्वचित्पाठः । रुच्या विजितानि शिखराणि शृङ्गाणि यस्या इति विग्रहः । "कूटोऽस्त्री शिखरं शृङ्गमित्यमरः" । अत्र तीक्ष्णाग्रहणेन शृङ्गसाम्यमवगन्तव्यम् । एतादृशे हे राधे ! मधुना मकरन्देन "मधुमद्ये पुष्परसेत्यमरः" । अथवा मधुना वसन्तेन तरलाः कूजनचपलाः ये पिकाः कोकिलास्तेषां निकरस्य निकुरम्बस्य निनदेन निनादेन मुखरे मधुना तरलः चञ्चलः द्रुतानुद्रुतक इति यावत् तादृशपिकनिनदं प्रति वा योजना । मधुतरपिकनिनद इति क्वचित्पाठः । तदा मधुरतरः अत्यन्त सुखावह इत्यर्थः । एतादृशे इह निकुञ्जे शेषं पूर्ववत् ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे मुरारे ! भणति जयदेवकविराजराजे मङ्गलशतानि कुर्विति योजना । कीदृशे, विहितः पद्मावती सुखसमाजे, विहित. पद्मावत्या निजप्रेयस्याः सुखसमाजः सुखचयो येनेति विग्रहः । एतेन शृङ्गारित्वमात्मनः प्रतिपादितम् । उक्तं च—

शृङ्गारी चेत्कविकाव्ये जातं रसमयं जगत् ।

स एव चेदशृङ्गारी नीरसं सर्वमेव तत् ॥

गीतार्थं श्लोकेन संक्षिप्याह ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

विहितेति । हे मुरारे ! श्रीकृष्ण ! विहितः नृत्यानुकूलताघटनाकृतः पद्मावत्याः

त्वां चित्तेन चिरं वहन्नयमति श्रान्तो भृशं तापितः
कन्दर्पेण च पातुमिच्छति सुधासंवाधविम्बाधरम् ।
अस्याङ्कं तदलंकुरु क्षणमिह भ्रूक्षेपलक्ष्मी इव-
क्रीते दासजनेऽपि सेवितपदाम्भोजे कुतः संभ्रमः ॥
॥ ६ ॥

निजदयितायाः सुख समाजः नानाविधसुखसन्दोहो येन जयदेवकविराजे जयदेवाख्ये कविश्रेष्ठे भणति भगवद्रत्यर्थं गीतं गदति सति मङ्गलशतानिकल्याणपरम्परां विधेहि कुरु । मद्विरचितगीते प्रीतः सन् श्रोतॄणां मम च श्रेयपरम्पराम् अनुकूलयेत्यर्थः। समाजेत्यत्र मुदो रजःपशुष्यति पशुसंघटनावोपनीयमितित्वादत्र घञ् प्रत्ययः । कविराजेत्यत्र 'राजाह ( ५ । ४ । ९१ ) इत्यादिना टच् प्रत्ययः समासान्तः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

त्वां चित्तेन हरिश्चिरं वहन्नयमिति श्रान्त इति पीनस्तन श्रोणिभारगुरुत्वादित्यर्थादधिगन्तव्यम् । गुरुद्रव्यं हि चिर वहतो जनस्य श्रमो भवत्येवेत्यभिप्रायः । भृशं तापितः कन्दर्पेण च पातुमिच्छति सुधा सम्वोधविम्बाधरमिति । श्रान्तस्य सन्तप्तस्य च पिपासा भवत्येवेत्यभिप्रायः । "संकटं नातु सम्वाध" इत्यमरः । अस्याङ्कं तदलं कुर्विति तस्मादस्य क्रोडं भजस्वेत्यर्थः ।

ननु मत्कृतेऽयं श्रान्तः सन्तप्तश्च, ततोऽहं स्फुट यगतस्मादस्याङ्कं प्रवेष्टुं विभेमीत्याह । इहेत्यादि । इह कृष्णे सेवितपदाम्भोजे दास इव भ्रूक्षेप लक्ष्मीलवक्रीते कुतः सम्भ्रमो भविता, क्रयक्रीते भृत्ये भयं न भवतीत्यभिप्रायः । भ्रूक्षेपलक्ष्मी लवक्रीत इति भ्रुवो क्षेपः चलनं स एव लक्ष्मीः ऋद्धिस्तस्या लवेन लेशेन क्रीत इति विग्रहः । उत्तरगीतस्य सङ्गमाह ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

अन्यासङ्गिनस्तस्य समीपं कथं प्रविशामि इत्याकांक्षायामाह । त्वामिति । हे राधे ! यस्मात्कारणादयं श्रीकृष्णः चिरं बहुकालम् अतिभारद्योतनार्थमेवमुक्तमित्यवगन्तव्यम् । त्वां पृथुस्तनभारां भवतीं चित्तेन वहन् धरन् अतिश्रान्तो अत्यन्तखिन्नो जात इति शेषः । न केवलश्रान्तिमात्रम् अपितु कन्दर्पेण वामेन कुत्सितदर्पेण कामेन इत्यर्थः। कन्दर्पत्वं च तस्य वाध्यवाधकविवेकराहित्यादवगन्तव्यम । भृशं तापवान् कृतः सन् अतएव सुधयामृतेन सम्बाधः संवाधो यत्र तादृशः त्सुधारसभरित इत्यर्थः। विम्बकल्पाधरः बिम्बाधरः शाकपार्थिवत्वान्मध्यमपदलोपि समासः। उक्तं च वामनेन- विम्बाधराद्यौ वृत्तौ मध्यपदलोपिन्यामिति । सुधासम्बाधश्चासौ विम्बाधरश्च तं चामृतविम्बाधरमित्यर्थः। पातुमिच्छति वाञ्छते । "इषुगमियमांच्छः (७। ३। ७७) इति च्छादेशः। यथा लोके कश्चिन्महाभारवस्तु मस्तकादिना वहन् श्रान्तः कन्दर्पेण कुत्सित दर्पेण मदनेत्यर्थः। तापितश्च सन् अत्यातुरः सुधाकल्पं जलं पातुमिच्छति तव्ददयमपीति भावः। इतश्चन्यासक्तिशङ्का न कार्य्येति तात्पर्य्यम् । तत्तस्मात्कारणादिह लता मन्दिरे अस्य श्रीकृष्णस्याङ्कसमीपमलं कुरु तत्र गत्वा मण्डयेत्यर्थः। अथवा अलं विहारपर्य्याप्तं कुरु अङ्गमिति क्वचित्पाठः। तदा अङ्गं शरीरमलङ्कुरु आश्लेषादिना सम्भावयेत्यर्थः। अन्यथा तथावयव एव निरर्थकः स्यादिति भावः । इतोऽप्ययं सम्भावनीत इत्याह। भ्रूक्षेपेति। हे राधे! तव क्षणं क्षणमात्रम् अत्यन्तसंयोगे द्वितीया । भ्रूक्षेपः कटाक्षवीक्षणं तस्य लक्ष्म्या लवः सम्पदेकदेशः तेन क्रीते कटाक्षपतनमात्रेणैव वशीकृत इत्यर्थः। अनेनात्यन्तसौरभ्यं सूचितम्। अतएव दास इव भृत्य इव उपसेवित पदाम्भोजे आराधितभवच्चरणारविन्द। 'उपमानादित्यदिना' समासः। अनेन तस्याति विनय सम्पत्तिः सूचिता, तादृशे श्रीकृष्णे तव कुतः सम्भ्रम. । कस्मात्कोपारम्भः। यथाधीने क्रीते सेवितपदम्भोजे वशम्बदे च गर्भदासे कोपो न युक्तस्तद्वदस्मिन् कोपो न युक्त इत्यर्थ। अथवा दासजनोपसेवित पदाम्भोजे भृत्यवर्गाराधित चरणारविन्दे महाप्रभावित्यर्थः । एतादृशेऽपि भ्रूक्षेप लक्ष्मी लवक्रीते सति तस्मिन्

सा ससाध्वससानन्दं गोविन्दे लोललोचना ।
सिञ्जान मञ्जु मञ्जीरं प्रविवेश निवेशनम् ॥ ७ ॥

---

सम्भ्रमः । कुतः विशम्बदे महाप्रभौ कोपस्यायुक्तत्वादितिभावः । तथा च शीघ्रमेव तत्समीपं प्रतिगन्तव्यमिति तात्पर्यम् । काव्यलिङ्गोपमयोः संसृष्टिः ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

उत्तरगीतस्य सङ्गमाह । सा सिञ्जानमञ्जुमञ्जीरं यथा स्यादेवं निवेशनं लतागृहं विवेशेति वाक्यार्थः। ससाध्वससानन्दमित्यपि क्रियाविशेषणम् । सन्तापितोऽयमिति साध्वसं चिरादद्यसमागमोऽभवदित्यनन्दः। गोविन्दे लोललोचनेति हरौ सतृष्णलोचनेत्यर्थः। लोकश्चलसतृष्णयोरित्यमरः। पथ्यावक्त्रं नाम वृत्तम् ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

एवं राधा सखीप्रतिबोधिता सती तदुचितार्थमाचरति [ सेति । गाः दृशो विन्दति प्राप्नोतीति गोविन्दस्तस्मिन् श्रीकृष्णे समनन्तरवक्षमाणार्थानुग्रहार्थम् अनेन कृष्णाभिधानमित्यवगन्तव्यम् । अतएव लोके सतृष्णे लोचने यस्याः सा तादृशी श्रीकृष्णदर्शन लालसेत्यर्थः । "लोलश्चलसतृष्णयोरित्यमरः" । एवंविधा राया आनन्देन कृष्णदिव्यमङ्गल सम्बन्धसमनन्तरसम्भविष्यद्दर्शन जनितसन्तोषेणेह वर्त्तितमिति । संसाध्यधूचनात्तमानन्दं च । चूतं अवद्धि पूर्वपक्षद......एतावत् पर्य्यन्तं श्रीकृष्ण विषयपरिभवर्जित मित्यनु सन्देयम् । आनन्दमिश्राद्भुतसाध्वसमित्यर्थः । तेन सहितं यथा तथा । सिञ्जानं शब्दायमानं मञ्जु लोकोत्तरं च मञ्जीरं नूपुरं च यस्मिन् कर्मणि तथा । निवेशनं कृष्णवासभूतलताकुञ्जं प्रविवेश प्रविष्टवती । अत्र प्रवेश समयएव मञ्जीरग्रहणं ग्राह्यम् । तथा च मार्गेऽभिसरण कालानुगुण मञ्जीरत्याग प्रतिपादक, त्यज मञ्जीरमित्यादि न विरोध इत्यवगन्तव्यम् ॥ ७ ॥

॥ द्वाविंशः प्रबन्धः ॥

वराडीरागेण गीयते

राधावदनविलोकनविकसितविविधविकारविभङ्गम् ।
जलनिधिमिव विधुमण्डलदर्शनतरलिततुङ्गतरङ्गम् ॥
हरिमेकरसं चिरमभिलषितविलासं,
सा ददर्श गुरुहर्षवशम्बदवदनमनङ्गनिकाशम्[१] ।
॥ ध्रुवम् ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

वराडी रागेण गीयते । अस्य लक्षणं प्रागुक्तम् । राधा वदनेति । सा हरिं ददर्शेत्येवं योजना । कीदृशमेकरसम्, एको रसो यस्येति विग्रहः । राधाया: यो रसः स एव कृष्णस्येत्यर्थः । पुनः कीदृशम्, अनङ्ग निकाशं कामसदृशं राधेत्यादि । राधावदन-विलोकनेन विकसितो विवधविकारो विभङ्ग्ये रोमाञ्चादि भङ्गी यत्रेति विग्रहः । अत्रोपमानमाह । जलनिधिमिव चन्द्रमण्डलदर्शन तरलित तरङ्गमिति अत्र कृष्ण समुद्रयोः राधा वदनचन्द्रयोर्विकारो वस्तुना साम्यम् ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

प्रवेशानन्तरं कृत्यमाह । राधेत्यादिना । वराडीरागेण गीयते । अटतालेन गेयम् । अस्य लक्षणं प्रागेव कथितम् चारतालेनेत्यन्ये । तल्लक्षणं तु—

"चाराभिसञ्ज्ञकं तालं तु गुरुरेकः प्रकीर्त्तितः" । आदितालेनेत्यन्ये । आदितालेन लघुमतेति । अत्र हरिमित्यारभ्यानङ्ग विकाशमित्यन्तं ध्रुवपदमिदम् । तदादौ व्याक्रियते । रस्यते आस्वाद्यते इति रसः, सुखम् एकोऽद्वितीयः स चासौ रसश्च, अद्वितीय

१ । ख. विकाशम् ।

सुखस्वरूपमित्यर्थः । अथवा एको मुख्यः सुख स्वरूपमिति वा तस्य सुखत्वं नाम निरुपाधिकत्वम् । एके मुख्यान्यकेवला इत्यमरः । हरे रसरूपत्वे "रसो वै सः" "रस एवायं लब्धानन्दा भवतीति श्रुतिप्रमाणम् । रसगुणमित्यत्र रसगुणकमिति वा एक शब्दः पूर्ववत् सर्वपथिकाः कवय इति न्यायमनुसृत्य स्वरूपगुणपक्ष व्याख्यानम् । अथवा एको रसः शृङ्गारे यत्र तादृशं शृङ्गारैकपरायणमित्यर्थः शृङ्गारैकरूपं वा । उक्तमनेकं विना "शृङ्गारः सखिमूर्त्तिमानिव मधौ मुग्धो हरिः क्रीडति ।" "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः ॥

अथवा एको मुख्यो रसो राधायामनुरागो यस्य तादृशम् । अतएव चिरं चिरकाल-मारभ्य अभिलषितो बिलासो राधाविषयो केलिर्येन तादृशम् । अतएवानङ्गस्य काम-देवस्य विकाश उद्रेक आविर्भावो यत्र तादृशम् । अतएव गुरुः प्रवलो यो हर्षः समन-न्तरमेव राधासम्भोगः सम्भविष्यतीति सन्तोषः । तस्य वशम्वदं स्वायत्तं तदाक्रान्त मित्यर्थः । तादृशं वदनं मुखं यस्य तादृशं स्मेराननमित्यर्थः । हर्षस्य गुरुत्वं च विरहानन्तर सम्भोगस्यातिप्रियत्वादवगन्तव्यम् । तदुक्तं रतिरहस्ये "अख्याता विरहान्यसङ्गमविधौ क्रुद्धः । प्रसन्ना ऋतुस्नातेति ।" वशम्वदेत्यत्र "प्रियवशे वदः खचिति खच् । खित्यनव्ययस्येति ( ६ । ३ । )" मुम् । एतादृशं हरिं सा राधा । ददर्श । पुनः किंविधमित्याकाङ्क्षायाह । राधेति । राधायाः वदनविलोकनं मुखावलोकनं तेन विकसिता उल्लसिता विविधा नानाप्रकारा ये विकाराः शृङ्गारचेष्टाः तेषां विभङ्गो विरचनं यस्य तादृशम् । राधाविषयरससूचकानुभावाक्रान्तमित्यर्थः । राधेति भिन्नं वा पदं तदा तस्य ध्रुवपदस्थस्य इत्यनेनान्वयः । अत्र तुल्यधर्मवर्णना मुखचन्द्रस्य चावगन्तव्या । तरलितेत्यत्र तरलशब्दात् तत् करोति णिचिति कर्मणि क्तः" ॥ १ ॥

हारममलतरतारमुरसि दधतं परिलम्बि [१]विदूरम् ।
स्फुटतरफेनकदम्बकरम्बितमिव यमुनाजलपूरम् ॥
॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

हारं मुक्तावलिमुरस्थले दधतं हारं किं विशिष्टम् अमलतरतारं निर्मलमुक्ताग्रथितम् । "मुक्तशुद्धौ च तारः स्यादित्यमरः ।" पुनः कीदृशं, परिलम्बिविदूरं विदूरं लम्बनशीलमित्यर्थः । अत्रोपमानमाह । स्फुटतरफेनकदम्बकरम्बितमिव यमुनाजलपूर इति । अत्र कृष्णो रसो यमुनाजलपूरेण, मुक्ताहारस्य फेनकदम्बेन च साम्यम् । "करम्बितं तु खचितं रुषितं त्ववगुण्ठितमिति विश्वः" ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

पुनः किंविधं हरिम् इत्याकांक्षायामाह । हारमिति । अमलतरमत्यन्तनिर्मलम् अतएव तारं मस्यादिदोषरहितं "तारो मुक्तादिसंशुद्धावित्यभिधानम्" । अथवा जमलस्तारो नायकमणिः यत्तत्तादृशम् । अथवा अमलतरास्तारा नक्षत्रकल्पा मुक्ता यत्र तादृशं हारं मुक्ताहारं नक्षत्रकण्ठमालिकामित्यर्थः । परिलम्ब्य कण्ठे आसज्य उरसि वक्षस्थले दधतं दधानं "नाभ्यस्ताच्छतु (७।१।७८)" रिति नुम्भावः । विदूरं विगतदूरदेशं समीपवर्त्तिनमित्यर्थः । परिलक्ष्य विदूरमिति क्वचित्पाठः । तदा विदूरं हराभावः ।"अव्ययं विभक्तिसमीपसमृद्धीत्यादिना (२।१।६)" अव्ययीभावः समीपमित्यर्थः । प्राप्ताराधामितिशेषः । परिलक्ष्य विलोक्य उरसि हारं दधतमित्यन्वयः । किञ्च स्फुटतरमत्यन्तविशदं यत् फेनकदम्ब हिण्डीरमण्डल इत्यर्थः । तेन करम्बितं व्याप्तं यमुनाजलपूरं कालिन्दीपयःप्रवाहमिव स्थितं हरिं ददर्श इत्यन्वयः ॥ २ ॥

---

१ । ख. परिलम्ब्य । परिलचयेति पाठान्तरम्

श्यामलमृदुलकलेवरमण्डलमधिगतगौरदुकूलम् ।
नीलनलिनमिव पीतपरागपटलभरवलयितमूलम् ॥
॥ ३ ॥

तरलदृगञ्चलवलनमनोहरवदनजनितरतिरागम् ।
स्फुटकमलोदरखेलितखञ्जनयुगमिव शरदि तड़ागम् ॥
॥ ४ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

नीलनलिनमिव पीतपरागपटलभरेण वलयितं वेष्टितं मूलं यस्येति विग्रहः । अत्र नीलोत्पलेन कृष्णस्य परागेण पीतवस्त्रस्य साम्यम् ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

श्यामलेति । श्यामलं नीलवर्णं "कालश्यामलमेचका इत्यमरः" । मृदुलं यत् कलेवरं शरीरं तस्य मण्डलं सन्देशः । तमधिगतं प्राप्तं गौरं पीतवर्णं "गौरः पीते सितेऽरुण इत्यमरः" । एतादृशं दुकूलं कौशेयं यस्य तादृशम् । अतएव पीतपरागपटलभरेण वलयितं वेष्ठितं संघटित वलयमित्यर्थः । तारकादित्या वच । अथवा वलयितं बलयवत्कृतम्, अत्र वलशब्दात् तत्करोति णिचि कर्मणि क्तः । एतादृशं मूलं मूलप्रदेशो यस्य च तादृशम् । नीलनलिनमिव नीलोत्पलमिव स्थितं हरिं ददर्श इत्यन्वयः । कलेवरशब्दस्य ग्राम्यत्वदोषो देशभेदात् परिहर्त्तव्यः । कलेवरमण्डनमिति क्वचित्पाठः । प्रकृतानुपयोगित्वादस्वरसः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

तरलस्य चञ्चलस्य दृगञ्चलस्य वलनेन भ्रमणेन मनोहरं यद्वदनं तेन जनितो

वदनकमलपरिशीलनमिलितमिहिरसमकुण्डलशोभम् ।
स्मितरुचिकुसुमसमुज्ज्वलिताधरपल्लवकृतरतिलोभम् ॥
॥ ५ ॥

---

रतिरागो येनेति विग्रहः । अत्रोपमानमाह । स्फुटकमलेत्यादि । स्फुटं विकसितं यत्कमलं पद्मं तस्योदरे खेलितं क्रीडापरं खञ्जयुगं पक्षीविशेषयुगं यत्रेति विग्रहः । "पद्माकरस्तड़ागोऽस्त्री कासारः सरसी सरः" इत्यमरः । अत्र कृष्णस्य तडागेन वदनस्य कमलेन नयनस्य खञ्जनेन च साम्यम् ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

तरलेति । तरलो चञ्चलो यो दृगञ्चलोऽपाङ्गप्रदेशः तयोश्च वलनं विलास विलोकनं तेन मनोहरेण द्रष्टृजनचित्ताकर्षकेण वदनजनित उत्पादितः रतौ सुरते रागः राधाया अनुरागो येन तादृशं स्वमुखलावण्यप्रदर्शनेन राधायाः सुरतानुरागं जनयन्तमित्यर्थः । अतएव स्फुटकमलोदरे विकचकमलाभ्यन्तरे खेलितं विहरमाणं "गत्यर्थाकर्मकेत्या ( ३ । ४ । ७ ) दिना कर्त्तरि क्त च । खञ्जनयुगं मकरन्दपायी खञ्जरीटाक्षपक्षिविशेषयुगलं यत्र तादृशं "खञ्जरीटस्तु खञ्जन" इत्यमरः । खञ्जरीटस्य नयनोपमानत्वं तु "नलिनी नयन खञ्जरीट" इत्यादि महाकविप्रयोगे स्फुटम् । तादृशं शरदि तडागमिव शरत्कालपुष्करिणीमिव स्थितं ददर्शेत्यन्वयः । अत्र श्रीकृष्णस्य कटी वसन समेतकमलकल्पनवदनाधारत्वेन मनोहरत्वसाम्येन नैर्मल्येन वा शरत्तडागसाम्यमवगन्तव्यम् ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

वदनमेव कमलं तस्य परिशीलनाय संपर्काय मिलितयोर्मिहिरसमयोः सूर्यसदृशयोः कुण्डलयोः शोभा यस्येति विग्रहः । स्मितरुचीत्यादि । स्मितरुचिरेव कुसुमं तेन योऽसौ समुज्ज्वलितोऽधरपल्लवस्तेन कृतः रतिलोभो येनेति विग्रहः ॥ ५ ॥

शशिकिरणच्छुरितोदरजलधरसुन्दरकुसुमसुकेशम् ।
तिमिरोदित विधुमण्डलनिर्मलमलयजतिलकनिवेशम् ॥
॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

वदनेति । वदनकमलस्य मुखसरोरुहस्य परिशीलनं परिचयः अलंकरणमिति यावत् एतदर्थं मिलिते घटमाने ये मिहिरसमकुण्डले सूर्य्यसमाकर्णभूषणे ताभ्यां शोभा कान्तिर्यस्य तादृशम् । अथवा मुखकमलेन परिशीलन सख्यं मिलितः सर्वतो यो मिहिरः सूर्य्यः "मिहिरारुण पूषण" इत्यमरः । तत्समकुण्डलशोभि अत्यद्भुतोपमा । किञ्च स्मितेन मन्दहासेन या रुचिः कान्तिः तया रुचिरं मनोहरं यथा तथा समुज्ज्वलितं भासितं यदधरपल्लवं दन्तवासकिशलयं तेन कृतः निष्पादितः रतौ सुरते रतये वा लोभः । राधायाः स्पृहा विशेषो यत्र तादृशं विलासहासभासुरा धरणे राधाया रतिलोभं जनयन्तमित्यर्थः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

शशिकिरणःच्छुरितम् भक्षितम् उदरं यस्य जलधरोऽन्यपदार्थः । शशिकिरणो च्छुरितादरश्चासौ जलधरश्चेति कर्मधारयः । तद्वत् सुन्दराः कुसुमसुकुमाराः केशा यस्येति विग्रहः । अत्र पुष्पस्य शशिकिरणेन केशस्य जलधरेण च साम्यम् । तिमिरे-त्यादि । तिमिरे यदुदितं विधुमण्डलं तद्वन्निर्मलश्चन्दनतिलकनिवेशो यस्येति विग्रहः । अत्र कृष्णललाटस्य तिमिरेण चन्दनतिलकस्य विधुमण्डलेन साम्यम् ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

शशीति । शशिकिरणैश्चन्द्रमयूखैः च्छुरितं व्याप्तम् । उदरमान्तर प्रदेशो यस्य स चासौ जलधरो नीलमेघश्च तद्वत् सुन्दराः रमणीयाः कुसुमसुकेशाः प्रसूनाधिवासित

विपुलपुलकभरदन्तुरितं रतिकेलिकलाभिरधीरम् ।
मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरम् ॥

॥ ७ ॥

---

यस्य तादृशम् । हिमकरकरनिकरसहोदरकुसुमाधिवासितनीलनीरदनिभशिरोरुह निकुरम्बनिर्मितकामुकवेशोचितकेशपाशधारिणमित्यर्थः । किञ्च तिमिरे सति उदितो यो विधुश्चन्द्रस्तस्य मण्डलं बिम्बं तद्वन्निर्मलं यन्मलयजतिलकं चन्दनकृतवर्त्तुल पुण्ड्रं तस्य सन्निवेशो रचनाविशेषो यस्मिन् तादृशं तिमिरोपलक्षित केशसमीप विराजमानचन्द्रकल्पचन्दनतिलकशालीनमित्यर्थः ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

विपुलानां पुलकानां भरेणातिशयेन दन्तुरितं विषमीकृतं क्वचिदानतं क्वचिदुन्नत-मिति यावत्, पुनः कीदृशं रतिकेलिकलाभिरधीरं, मणिगणेत्यादि । मणिगणानां किरणसमूहेन समुज्ज्वलं यद्भूषणं तेन सुभगं सुश्रीकं शरीरं यस्येति विग्रहः ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

विपुलेति । विपुलास्तदङ्गजाः पुलका रोमोद्गमाः तेषां भरो भारः तेन दन्तुरितं निम्नोन्नतं राधाविलोकनजनितसात्त्विकोदयमहिम्ना सर्वाङ्गीणरोमोद्गममित्यर्थः । दन्तुरितेत्यत्र "दन्त उन्नत उरच्" ( ५ । २ । १०६ ) इति मत्वर्थे उरचित्कर्मणि क्तः । किञ्च, रतिकेलयः सुरतक्रीडाः तासु कलाः कामशास्त्रप्रसिद्ध-षोडशकलाः ताभिः तदर्थं वा कलापरीक्षार्थं सर्वदा प्रवर्त्तितशीलमित्यर्थः । कलास्वरूपं तु रतिरहस्ये—

अङ्गुष्ठे पदमूल जानु जघने नाभौ च वक्षःस्थले
कुक्षौ कर्ण्ण कपोलदन्तवसने नेत्रालके मूर्द्धनि ।
शुक्लाशुक्लविभागतोमृगदृशामङ्गेष्वनङ्गस्थिति-
रुर्ध्वाधोगमनेन वामपदतः पक्षद्वये लक्षयेत् ।

श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारम् ।
प्रणमत हृदि विनिधाय हरिं सुचिरं सुकृतोदयसारम् ॥
॥ ८ ॥

---

ऊर्ध्वोरः स्थलवामदक्षिणकरे वक्षोरुहोरुद्वये
नाभौ गुह्यललाटजाठरकटीपृष्ठे तु तिष्ठत्यसौ ।
कक्षश्रोणिभुजेषु च प्रतिपदा मारभ्य कृष्णाधमः
श्वेतायाप्रभृति क्रमेण मदनो मूर्धानमारोहति ॥

आश्लेषेषु मृगीदृशां मनसिजप्रस्तावनापण्डिता-
मात्रा षोडश चिन्तयन्ति विपुल ज्योतिस्फुलिङ्गा कृतिरिति ।

किञ्च, मणिगणस्य रत्नपुञ्जस्य किरणसमूहेन मयूखसमूहेन समुज्ज्वलैर्भासमानैः भूषणरङ्गादिभिः सुभगं विराजमानं शरीरं यस्य तादृशम् अनेनालम्बनालङ्करण रूपोद्दीपकस्य सम्पत्तिरुक्ता । तदुक्तं नूपुराङ्गदहारादितदलङ्करणं मतमिति । एतादृशं हरिं ददर्श इत्यन्वयः ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे जना ! हृदि विनिधाय सुचिरं यथास्यादेवं हरिं प्रणमतेति योजना । कीदृशं, सुकृतोदयसारं, पुण्योत्पत्तिनिमित्त सारभूतमित्यर्थः । कीदृशं, श्रीजयदेवभणित-विभव—द्विगुणीकृतभूषणभारं श्रीजयदेवभणितमेव विभवो वित्तं तेन द्विगुणीकृतो भूषणभारो यत्रेति विग्रहः । स्वयमलं कृतःजयदेवे वचनवित्तेनाप्यलङ्कृत इत्यर्थः ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । हे जनाः श्री जयदेवेन भणितं यद्गीतम्, अथवा श्रीजयदेवस्य

अतिक्रम्यापाङ्गं श्रवणपथपर्य्यन्तगमन-
प्रयासेनेवाक्ष्णोस्तरलतरतारं पतितयोः ।
इदानीं राधायाः प्रियतमसमालोकसमये
पपात स्वेदाम्बुप्रसर इव हर्षाश्रुनिकरः ॥ ८ ॥

---

भणितं गीतं तस्य विभवेन उत्कर्षेण द्विगुणीकृतः द्विधासम्पन्नः भूषणभारोऽलङ्कारभारो यस्य तादृशं सहजाङ्गदादिभूषणः कीर्त्तिप्रकाशगीभूषणश्च ताभ्यां भारत्वमवगन्तव्यम् । किञ्च सुकृतोदयस्य पुण्यजन्मनः सारो वलं यस्मात् सकलसुकृतफलभूतमित्यर्थः । अथवा सुकृताय धर्माय उदयसारः जन्मस्थैर्य्यं यस्य तादृशं सकल धर्मस्थापकमित्यर्थः । तदुक्तं—"धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" इति । तादृशं हरिं सुचिरं बहुकालं विनिधाय विन्यस्य प्रजपत अनेन गीतेन हरिं स्तुवतेत्यर्थः । प्रणमतेति क्वचित्पाठः । तदा हरिं हृदि निधाय नमस्कुरु इत्यर्थः ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

सा ददर्श इत्युक्तं तद्दर्शनान्तरं सङ्गमार्थं श्लोकाभ्यां दर्शयति । अतिक्रम्येति । इदानीं प्रियतमसमालोकसमये अक्ष्णोर्हर्षाश्रुनिकरः पपातेति योजना । कीदृशोरक्ष्णोस्तरलतरतारं यथा स्यादेवं पतितयोः । तरलतरा तरा कनीनिका यत्रेति विग्रहः । अन्योऽपि यः कश्चित् पतति सोऽपि केनापि किमहं दृष्टं इति लज्जया तरलतरतारे कृत्वा दृशोऽवलोकत इत्यभिप्रायः । उत्प्रेक्षते, अपाङ्गनेत्रान्त मतिक्रम्य श्रवणपथपर्य्यन्तगमनप्रयासेनेव स्वेदाम्बुप्रसर इवेति आयासात् घर्मजलं पतत्येवेत्यभिप्रायः । विस्तारे करीवृन्दे च प्रसरः परिकीर्त्तितः" ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

प्रियालोकन फलमाह । अतिक्रम्येति । अपाङ्गं नयनाञ्चलम् अतिक्रम्यातीत्य

भजन्त्यास्तल्पान्तं कृतकपटकण्डूतिपिहित-
स्मितं याते गेहाद्बहिरवहितालीपरिजने ।
प्रियास्यं पश्यन्त्याः स्मरशरसमाकूतसुभगं
सलज्जा लज्जैव व्यगमदति दूरं मृगदृशः ॥ ९ ॥

श्रवणपथस्य कर्णसरणेः 'ऋक्पुरे' (५।४। ) इत्यादिना समासान्तः । पर्यन्त गमनप्रयासेन समीपगमनक्रियायासेनैव तरलतरभावमतिचाञ्चल्यं पतितयोः पतितशब्दात् "द्वितीयाश्रितातीतपतितेत्यादिना (२।१।३४) निपातनात्साधुः । अक्ष्णोः नयनयोः हर्षाश्रुनिकरः हरिदर्शनजनितानन्दवारिपूरः । इदानीं श्रवण गमनप्रयाससमयव्यतिरिक्तकाले इत्याकाङ्क्षायामाह । राधाया इति । राधायाः प्रियतम समालोकसमये वल्लभावलोकनसमये स्वेदाम्बुप्रसरः घर्मजलपूर इव पपात पतितवान् । यथा लोके घर्मकालेऽध्वगमनश्रान्त्या वेपमानस्य तत्समयमुल्लंघ्य समयान्तरे छायाद्रुमावस्थानकाले स्वेदोद्गमः तद्वदत्रापीत्यर्थः । उत्प्रेक्षो पमादीपकालङ्काराः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

कृतकपटकण्डूतिपिहितस्मितं यथा स्यादेवमवहितालीपरिजने गेहाद् वहिर्गते सति मृगदृशो राधायास्तल्पान्तं भजन्त्या लज्जा सलज्जेव दूरं व्यगमदित्युत्प्रेक्षा । अवहितत्वमालीनां तत्कालयोग्यक्रमानुष्ठानात मृगदृशः स्मरशर सुभगं यथा स्यादेवं प्रियास्यं पश्यन्त्याः स्मरशरेण समाकूतमुल्लासस्तेन सुभगमिति विग्रहः ॥ ९ ॥

इति श्रीकविराजश्रीनारायणदासकृतायां श्रीगीतगोविन्दटीकायां सर्वाङ्गसुन्दर्यां सानन्दगोविन्दो नामैकादशसर्गविवरणम् ।

॥ श्रुतिरञ्जनी ॥

अथ कुट्टिन्याः सख्या निर्गमनं सूचयन् सुरतानुकूलसामग्रीमाह । भजन्त्या इति । अवहिता उभयो र्घटना सावधानमनस्का या आली सखी सेव परिजने परिचारके

कृताया कपटकण्डूतिः निःसरणार्थनिर्मितमिथ्याकण्डूयनं तया पिहितमाच्छादितं प्रियसमागमलज्जित सखीदर्शनजनितमन्दहासो यस्मिन् कर्मणि तद्यथा भवति तथा । गेहात् क्रीड़ोचितलतामन्दिरात् वहिर्य्याते परिसरवर्त्तिसखीभिः सह अपगते सति तल्पान्तं सम्भोगशय्यासमीपं भजन्त्या सेवमानायाः किञ्च स्मरेण कामदेवेन रसः, "तृतीया तत्कृत" ( २ । १ । ३० ) इत्यादिना समासः । तत्र समाकूतमभिप्राय-विशेषः । तेन सुभगं रमणीयं सम्भोगाकाङ्क्षाया सूचकमित्यर्थः "स्मरशरेति क्वचित्पाठः" । तदा स्मरस्य शरः अरविन्दं तेन समं सदृशं आकृष्टेन सम्भोगाभि-प्रायेण सुभगं समं तत् आकूतसुभगं च ।

अथवा, स्मरशराः कामबाणाः तैराकूतं दूरिताभिप्राये तेन सुभगम् । मदनशर-पतनसमुदितसुरतोद्योगशालीत्यर्थः । एतादृशं प्रियास्यं श्रीकृष्णवदनं पश्यन्त्याः वीक्ष्यमाणायाः मृगदृशोः राधिकायाः अत्र मृगदृग् शब्देन राधायाः हरिवदनदर्शने दृष्टिवैपुल्यं सूचयतीत्यवगन्तव्यम् । लज्जापि व्रीडापि सुलज्जेव सम्भोगोन्मुखमिथुन समीपे अवस्थानमनुचितमिति त्रपासहितेव व्यगमत् निरगात् । पुष्पादित्यादिना दितत्वा चोरङ् । उत्प्रेक्षालङ्कारः ॥ १ ॥

इति श्रीगीतगोविन्दव्याख्यायामेकादशसर्गः ।

—०—

## द्वादशः सर्गः

। सुप्रीतपीताम्बर ॥

गतवति सखीवृन्देऽमन्दत्रपाभरदुर्भर-
स्मरशरवशाकूतस्यूतस्मितस्नपिताधरम् ।
सरसमनसं दृष्ट्वा राधां मुहुर्नवपल्लव-
प्रसरशयने निक्षिप्ताक्षीमुवाच हरिः प्रियम् ॥ १ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

अस्मिन् द्वादशसर्गे स्वाधीनभर्तृका वर्णनीया । उक्तं च लक्षणं नायिका-लक्षणे —

क्षणं कराह तेनैव क्षणं चरणपातिना ।
कन्दुकेनेव कान्तेनाक्रीडत्स्वाधीनभर्तृका ।
कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम् ।
विचित्रविभ्रमासक्ता सा स्यात्स्वाधीन भर्तृका ।

अपिच — रे च शत काटि विलग्नं लसिता स पाता पत्तिस्स ।
हि यामाण उपत्थं उन्मोन्माचन्ति विकताहेइ ॥

प्राकृतत्वात्पूर्व निपातो मानशब्दस्य ।

गीतावतार श्लोकमाह । गतवतीति । सखीवृन्दे गतवति सति हरिः प्रियामुवाचेति योजना । किं कृत्वोवाचेत्याह । सरसमनसं दृष्वेति कथं तस्या सरसं मनो ज्ञातव्यमित्याह । मन्दत्रपेति । मन्दे यस्त्रपाभरस्तेन निर्भरो योऽसौ स्मरस्तस्य यः शरस्तद्वशो यः आकूतोऽभिप्रायः तेन स्यूतं ग्रथितं यत् स्मितं तेन स्नपितः पवित्री कृतः अधरो यस्या इति विग्रहः । मुहुर्नवपल्लव प्रसरशयने निक्षिप्ताक्षीमिति मुहुर्वार-

न्यारं नवपल्लव रचिते प्रसरशयने विस्तीर्ण शय्यायामर्पिताङ्गीमित्यर्थः । यद्वा नव पल्लवाश्च प्रसवाः पुष्पाणि च तेषां शयनं शय्या तस्मिन् :—

शङ्कासूयाभयं ग्लानिर्व्याधिश्चिन्ता स्मृतिर्द्धृतिः ।
औत्सुक्यं विस्मयो हर्षो व्रीडोन्मादौ मदस्तथा ।
विषादो जडतानिद्रावहित्था चापलं धृतिः ।
इति भावाः प्रयोक्तव्याः शृङ्गारे व्यभिचारिणः ॥

इति ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

अत्र सर्गे स्वाधीनपतिका वर्ण्यते । अस्याः लक्षणं तु—"प्रियोपलालिता नित्यं स्वाधीनपतिका मता" इति । सखी निर्गमनानन्तरं रहः कृत्यं सूचयति । गतवतीति । हरिः श्रीकृष्णः सखीवृन्दे आलीकदम्बे गतवति सति क्रीडा मन्दिरान्निर्याते सति मन्दा स्वल्पा या त्रपा व्रीडा तस्याः भरो भरणम् अथवा मन्दो यो त्रपाभरः लज्जाभारः त्रपायाः मन्दत्वं चैकान्ता वस्थाना दवगन्तव्यम् । अथवा अमन्देति च्छेदः । अमन्दः बहुल लज्जातिशयः "अत्यथाति शयोभर" इत्यमरः । त्रपाभरस्यामन्दत्वं च हृदय सङ्गमाभावकृतमित्यवगन्तव्यम् । तेन निर्भरः प्रवृद्धो यो स्मरः तस्य प्रवृद्धत्वं च लज्जा प्रायादवगन्तव्यम् । तत्परवशेन तस्य परवशत्वस्योपनायकत्वेन तत्परतन्त्रेण इत्यर्थः । आकूतेन संभोगाभिप्रायेण स्फीतं प्रभूतं स्मितं मन्दहासस्तेन स्नपितोऽभिषिक्तो तद्व्याप्त इति यावत् । तादृशोऽधरो यस्याः सा तथोक्ता ताम् आकूत सूतेति क्वचित्पाठः आकूतेन सूतमनुविद्धमित्यर्थः एकान्तावस्थित प्रियावलोकन जनित-मन्मथो द्रेक स्तम्भेनमन्दहास व्याप्त धारामित्यर्थः ।

द्वितीयव्याख्याने अमन्दत्रपाभरेण निर्भरः निर्गतातिशयत्वं च स्मरस्य लज्जया

॥ त्रयोविंशः प्रबन्धः ॥

रामकिरीरागेण[1] गीयते

किशलयशयनतले कुरु कामिनि चरणनलिनविनिवेशम् ।
तव पदपल्लववैरिपराभवमिदमनुभवतु सुवेशम् ।
क्षणमधुना नारायणमनुगतमनुभज[2] राधिके ॥

॥ ध्रुवम् ॥

---

विजितत्वादत्वगन्तव्यम् । सखीवृन्दनिर्गमनानन्तरम् उदयन्मदनजनितसुरतोद्योगस्य च मन्दहासं परिष्कृताधरामित्यर्थः । किञ्च, तुष्टं सम्भोगशृङ्गारेण सन्तुष्टं, किं च, मुहुः पुनः पुनःनवपल्लव प्रसवशयने नूतन प्रवालकुसुमनिर्मितशय्यायां निक्षिप्ते निहिते अक्षिणी यया तादृशीं लज्जया प्रियमुखावलोकनं परित्यज्य रतिक्रियोचित शय्यायामेव न्यस्तावलोकितामित्यर्थः । एतादृशीं प्रियां राधाम् अलसं मन्दं यथा भवति तथा दृष्ट्वा विलोक्य सरसं यथा भवति तथा उवाच उचे । दृष्ट्वा दृष्ट्वा इति क्वचित्पाठः । तदा दर्शं दर्शं प्रीत्यतिशयद्योतनार्थं द्विरुक्तिः । अक्षीत्यत्र "बहुव्रीहौ सक्थ्यक्ष्णो ( ५ । ४ । ११३ )" रित्यादिना समान्तेषित्वाङीप् ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

अधुना नारायणमनुगतं क्षणमनुभजेति योजना । नारायणः परमपुरुषस्तु भाग्यवशात् त्वय्यनुरक्तस्तस्मादेनं भजस्वेत्यर्थः । किशलयेत्यादि । हे कामिनि । किशलयशयनतले चरण कमल विनिवेशं कुर्विति योजना । किमेतावता सिध्यतीत्याह । पराभवमिवनुभवत्विति । इदमिति किशलयशयनं कथमस्य पराभवः साध्य इत्याह ।

---

१ । छ. विभास रागेण । ख. नादरा मक्रिया रागेण ।

२ । छ. सर ।

तव पदपल्लवे रिति शात्रवतुल्यसंज्ञत्वात् विज्ञेयम्। "पल्लवोऽस्त्री किशलयमित्यमरः।" कथं चरणकमलं किशलयशयनं पराभवितुं शक्तमित्याह । सुवेशमिति हंसकाद्यलङ्कृतमित्यर्थः ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

उवाचेत्युक्तं तत्प्रकारमेव विशदयति। किशलयेत्यादि। नादरामक्रियारागेण गीयत इत्युक्तम् । तस्यायमभिप्रायः । पूर्वत्र वरालिकाया उपस्थापितत्वात्तदनन्तरं तत्सपत्न्या उपस्थानं युक्तमिति तदुक्तम् । "रामक्रियावराली च कौशी वासन्तयोषित" इति । एकतालेन गेयम्। क्षणमित्यादि राधेत्यन्तं ध्रुवपदम् । हे राधिके ! अनुगतं त्वां पूर्वमनुसृतं, तव प्रियं पतिं यावत् । नारायणं मां अधुना इदानीम् अधुनेति निपातनात् साधुः । क्षणं स्वल्पकालम् अथवा क्षणशब्दादर्श आदिभ्योऽच्-क्षणम् उत्सवं भोगोत्सवं च नारायणमित्यन्वयः । "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण" इत्यमरः क्षणमुद्यम्य वा अनुभज सेवस्व । कृष्णसस्मत्यनन्तरभावित्वाद्राधासङ्गतेरनुभजेत्युक्तमित्यवगन्तव्यम् । अत्र नारायणशब्देन कृष्णाभिधानं तस्य जलशायित्वेन परमपुरुषता सूचनाद्वारावश्यकतासूचनार्थं तदुक्तम्—

आपो नारा इति प्रोक्ता आपा वै नरसूनवः।
अयनं तस्य ताः पूर्वं तेन नारायण स्मृतः ॥

इति । केन प्रकारेण इत्याकाङ्क्षायां कृष्णः स्वयमेवसेवा प्रकारमुपदिशति । किशलयेति। हे कामिनि ! सुरतेच्छाशालिनि राधिके! प्रकृतोपयोगार्थमनेन सम्बोधनमित्यवगन्तव्यम् । किशलयशयनं पल्लवतल्पशयितं तले तलप्रदेशे चरणनलिनयोः पादपद्मयुगलयोः चकोरवृत्तिसूचनार्थं नलिनग्रहणं विनिवेशनिक्षेपं विन्यासमिति यावत् कुरु देहि।

तेन किं स्यात्तदाह तवेति । सुवेशसङ्केतस्थानमाह । दृश्यमानं किशलयशयनं कर्त्तृ, तव पदपल्लवे चरणकिशलये एव वैरिणी ताभ्यां पराभवम् अधीरभावं तिरस्कार

**करकमलेन करोमि चरणमहमागमितासि विदूरम् ।**
**क्षणमुपकुरु शयनोपरि मामिव नूपुरमनुगतशूरम् ॥ २ ॥**

---

मित्यर्थः । अनुभवतु प्राप्नोतु । निषिद्धोपस्थापनार्थं पदपदपल्लवयोरौपम्यमित्यवगन्तव्यम् । अतएव वैरित्वं सुघटम् आवयोः सङ्गमात्पूर्वम् उद्दीपकत्वेन बाधकं यत् पल्लवतल्पं तदिदानीं भवच्चरणपल्लवाहतिमनुभवतु । "अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते" इति न्यायेनापराधात् इदानीमेव पराभवस्य युक्तत्वादितिभावः । भवच्चरण सदृश पल्लव विरचितमिति शयनस्य यो गर्वस्तु निर्बाधमिदानीमेवानुभवतु इत्यर्थः । शयने सम्भोगार्थमिदानीमेवावगच्छेति तात्पर्यम् ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

अहमात्मनः करकमलेन तव चरणपूजां करोमि । यतो विदूर मागमितासि त्वमिति वाक्यार्थः । यो हि दूरादागच्छति तत्पादं पाद्यादिना पूज्यत इत्यर्थः । क्षणमित्यादि । क्षणं शयनोपरि क्षणं मामिव नूपुरमुपकुरु, पादे गृहाणेत्यर्थः । उभयं विशिनष्टि । अनुगत शूरमिति, अनुगमनसमर्थं पादे लग्नमिव यावत् । पादलग्नस्य उपकारः कर्त्तुं युज्यत एवेत्यभिप्रायः ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

करकमलेनेति । हे राधिके ! यस्मात्त्वं विदूरमत्यन्तं दूरमागमितासि "गमेर्ण्यन्तात्कर्मणि क्तः ।" अहं तव चरणम् । अत्र एकत्वमविवक्षितम् । उभयोः परिश्रान्तेरविशेषो ईषद्धसनस्य क्रमिकद्वारा एकत्वोपपत्तिः । अथवा करकमलेन पाणिपङ्कजेन, अत्र पङ्कजग्रहणं कृष्णकरस्य राधाचरणसंवहने मार्दवगुणसम्पत्त्या करणत्वाहित सूचनार्थं करोमि सम्वाहनविशिष्टं कुर्वे । मन्दाध्वश्रम निवृत्त्यर्थं तव पादसम्वाहनं करोमीत्यर्थः । अत्र कृष्णस्य करवैशिष्ट्यमङ्गीकर्त्तव्यम् । लोकानुसारात्कामुकमनुसृत्य भगवत्यैवमुक्तमिति न विरोधः । अतिशूरस्य भगवन्नूपुरस्यापि श्रमेण भवितव्यमित्याह । क्षणमिति । अनुगतिरनुयानं तत्र शूरं समर्थम् अत्रानुगतिकार्य्यं च

वदनसुधानिधिगलतममृतमिव रचय वचनमनुकूलम् ।
विरहमिवापनयामि पयोधररोधकमुरसि दुकूलम् ॥ ३ ॥

भूतकालीनमगन्तव्यम् । न त्वधुना । अनन्तरवक्ष्यमाणविरोधापत्तेः नूपुरं मञ्जीरं शयनोपरि पल्लवतल्पोपरिभागे मामिव क्षणमुपकुरु । यदा भवदनुगति शूरं तव मुख कमलविलोकनप्रदानादिना सम्भावयसि । तव शयनोपरि निक्षिप्य चरणकटकमपि सम्भावयेत्यर्थः । सुरतकाले नूपुरावस्थाने जारसुरतं सर्वे ज्ञास्यन्ति ।……द्धारयेति तात्पर्य्यम् । न च त्यज मञ्जीरमित्यत्र नूपुरत्यागस्योपविष्टत्वात्तद्धोरप्रसक्तेरभावात्तत्र तदुद्धारक न प्रहारादिना न सम्भावयसि । तव शयनोपरि निक्षिप्य चरणकटकमपि सम्भावयेत्यर्थः उद्दीपकत्वेन समीपागमनवेलायां तत्तद्धारणस्यापि सम्भवात् । तथोक्तमिति विरोधः ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे राधे ! अमृतमिव वचनं रचय सरसं वदेत्यभिप्रायः । कीदृशं वदनसुधा-निधिगलितं, किमेतावता प्रेप्सितं सिध्यतीत्याह, विरहमित्यादि । दूकूलमपनयामि तव वस्त्रं स्फोटयामीत्यर्थः । विरहमिव, पयोधररोधकमिति विरहेण पयोधरो द्रष्टुं न प्राप्यते, तथानेनापीत्यर्थः ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

वदनेति । हे राधिके ! वदनसुधानिधेर्मुखामृतमयूखाज्ज्वलितं निस्रुतममृतमिवा-नुकूलं सुरतोपयोगिवचनं मन्मथोद्दीपक सुधाकल्पवचनान्युच्चारय इत्यर्थः । सम्भा-षणे त्वया किं कार्य्यमित्याशङ्कायामाह । विरहमिति । अनन्तरमहमुरसि वक्षसि पयोधररोधकं कुचकुम्भावरकं दूकूलं क्षौमं वस्त्रं विरहमिवावयोर्वियोगमिवा-पनयामि । सम्भाषणाभावे हृदयसङ्गमपूर्वककुचकलशास्फालनस्याघटनादिति भावः । एतावन्तमनेहसम्भवात्कुचकुम्भदर्शनाभावजनितवियोगं भवत्कुचकुम्भयुगल दर्शनेन दूरी करोमीत्यर्थः । सम्भाषणपूर्वं कुचमण्डलदर्शनजनितविरहापनयनेन मां सम्भापयेति तात्पर्य्यम् । अतश्च नारायणं मामनुभजेत्यन्वयः ॥ ३ ॥

प्रियपरिरम्भणरभसवलितमिव पुलकितमनिदुरवापम् ।
मदुरसि कुचकलशं विनिवेशय शोषय मनसिजतापम् ॥
॥ ४ ॥

अधरसुधारसमुपनय भाविनि जीवय मृतमिव दासम् ।
त्वयि विनिहितमनसं विरहानलदग्धवपुषमविलासम् ॥
॥ ५

॥ सर्वाङ्गसुन्दरी ॥

मदुरसि कुचकलशं विनिवेशयेति योजना । कीदृशमतिदुरवापं, पुनः कीदृशं पुलकितम् । अत्र उत्प्रेक्ष्यते, प्रियपरिरम्भणरभसवलितमिवेति । प्रियस्य ममैवालिङ्गनोत्साहेन संभक्तमिवेत्यर्थः । कथं मदुरसि कुचकलशो विनिवेशयनीय इत्याह । शोषय मनसिजतापमिति कामजनितसन्तापं खण्डयेत्यर्थः ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

कुचदर्शनानन्तरं कृत्यं दर्शयति प्रियेति । प्रियपरिरम्भणाय वल्लभाश्लेषाय यो रभसो वेगस्तेन मिलितं मिश्रितमिव स्थितम । अतएव पुलकितम् अतिदूरवापं कुचकलशं मदुरसि मम वक्षःस्थले "प्रत्ययोभरपदयोश्च ( ७ । २ । ९८ )" इत्यस्मदो मदादेशः विनिवेशय विधेहि । कुचोपममालिङ्गनेन मां सम्भावयेत्यर्थः । कुचनिवेशनकरणात् मनसिजतापं मम शरीरे कामदेवकृतबाधां नाशय निवारयेत्यर्थः । परितापवर्त्तिनप्रयोजनसम्भवादालिङ्गनमवश्यं कार्य्यमिति तात्पर्य्यम् । अत्र कुचयोस्तापनिवर्त्तकत्वसूचनाय कलशत्वारोपः । लोके हि शीतलजलकणस्यैव ताप निवर्त्तकत्वादितिभावः । अतश्च नारायणमनुभजेत्यन्वयः ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

जीवय मृतमिव दासमिति मामित्यर्थादवगन्तव्यम् । अमृतं दत्वा मृतमिव मां

**शशिमुखि मुखरय मणिरसनागुणमनुगुणकण्ठनिनादम् ।**
**श्रुतियुगले पिकरुतविकले मम शमय चिरादवसादम् ॥**
**॥ ६ ॥**

---

जीवयेत्यर्थः । त्वयि विनिहितमनसमिति सुधारसप्रदाने प्रोत्साहनम् । ननु न ते पीडाप्युपलभ्यते तत्कथमात्मानं मृतमिव कथयसीत्याह । विरहानलदग्धवपुषमविलासमिति । अस्योपमा ।

शम्भुः स्वयम्भुरमरा हरिणेक्षणानां
येन क्रियते सततं कुचकुम्भ दासः ।
वाचामगोचर चरित्रविचित्रिताय
तस्मै नमो भगवते कुसुमायुधाय ॥ इति ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

आलिङ्गनानन्तरकृत्यं सूचयति । अधरेति । हे भाविनि ! राधिके ! अधरसुधारसम् अधरामृतरसम् उपनय प्रापयेति शेषः । अथवा उपनय नामसमीपं नय मह्यं देहीत्यर्थ । दानफलं सूचयति त्वयेत्यादि । हे भाविनि ! विनिहितमनसं लग्नचित्तं विरहानलेन भवद्वियोगदहनेन दग्धवपुषं प्लुष्टदेहम् अतएवाविलासं गतविभ्रमम् अतएव दासं भवत्पराधीनजीवनम् । विशेषणचतुष्टयेन कृष्णस्य दानपात्रता सूचिता । एतादृशं मां मृतमिव गतप्राणमिव जीवय प्राणवन्तं कुरु । अथवा मृतमिव स्थितं मां जीवयेति वा योजना । यथा आराधिता देवता भक्तविशेषणविशिष्टजनम् अमृतदानेन जीवयति तथा मामपीत्यर्थः उपमानोक्तिः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे शशिमुखि ! मणिरसनागुणं मणियुक्तकाञ्चीगुणं मुखरय मुखरी कुरु विपरीत-

मामतिविफलरुषा विकलीकृतमवलोकितुमधुनेदम् ।
मिलति लज्जितमिव नयनं तव विरमविसृजरतिखेदम्[1] ॥
॥ ७ ॥

रतमारभस्व इति यावत् । कीदृशम् अनुगुणकण्ठनिनादम् अनुगुणः सदृशः कण्ठनिनादो यस्येति विग्रहः । कथमित्थं वदसीत्याह । श्रुतियुगले पिकरुतविकले मम शमय चिरादवसादमिति संप्रत्यावलितो रसनाध्वनिः । विरहावस्थायां कोकिल शब्देन विधूरितं कर्णयुगलं सुखयेति वाक्यार्थः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

अधरदानानन्तरकृत्यमाह । शशीति । हे शशिमुखि ! चन्द्रवदने ! तमनुगुणो अनुकण्ठनिनादो भवत्कण्ठसम्भवरतिकूजितजनितध्वनिर्यस्मिन् कर्म्मणि तत् मुखरय उपरि सुरतेन ध्वनयेत्यर्थः किमर्थमित्यतमाह । श्रुतीति । पिकरुतेन कोकिलालापेन विकले विरहे त्वद्वियोगकाले संजातव्यथ इत्यर्थ. । एतादृशे मम श्रुतियुगले चिरात् बहुकालमारभ्य स्थितमिति शेषः । अथवा चिरम् अति सततं गच्छतीति चिराद् बहुकालव्यापकमित्यर्थः । "अत सातत्यगमने इत्यस्माद्धातोः क्विप्" स चासावसादश्चेति चिरादवसादं कोकिलालापश्रवणजनित विषादं शमय, निवारय । उपरि सुरतं कुर्वित इति तात्पर्य्यम् । रतिकालीनरुतानि तु रतिरहस्ये—

"हूंकृतस्तनितमूकवत्कृतमित्यादि" पूर्वमुक्तम् । मुखरयेत्यत्र मुखरशब्दात् तत्करोति णिचि लोट् । शमयेत्यत्र शमु अदर्शने इति अदर्शने शमेर्मित्वात् नोपधा वृद्धिः ॥ ६ ।

॥ सर्वाङ्गसुन्दरी ॥

इदं नयनयुगमधुना मामवलोकयितुं लज्जितमिव मिलति मुद्रितं भवतीत्यर्थः । मां

१ । लज्जितमिव नयनं तव विरमति सृजति वृथा रति खेदमिति पाठान्तरम् ।

श्रीजयदेवभणितमिदमनुपदनिगदितमधुरिपुमोदम् ।
जनयतु रसिकजनेषु मनोहररतिरसभावविनोदम् ॥ ८ ॥

---

कीदृशं, मामतिविफलरुषा विकलीकृतं, अकारणेण कोपेन विधुरीकृतमित्यर्थः । अन्योऽपि यः कुपितः कश्चित्तिरस्करोति स तिरस्कृतस्य मुखादवलोकनेन लज्जितो भवतीत्यभिप्रायः । विरमेति अति विफलरोषादित्यर्थादधिगन्तव्य विसृजखेदमिति, स्वस्था भव इत्यर्थः ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

एवमुक्तेऽपि लज्जावशादनवेक्ष्यमाणां तामाह मामिति । हे राधे ! विकलीकृतं त्वत्कृत पराभवेन विकलचित्तं माम् अथवा किं निमित्तं भवत्यागेन कलुषचित्तं वा अवलोकितं वीक्ष्यमाणं कर्त्तरि निष्ठा । अतएवापि विकलरुषात्यन्तनिष्फलकोपेन कोपनिमित्तस्य स्फुटस्याभावात् । कोपस्यातिनैष्फल्यमिति वक्तुरभिप्रायः ।

अधुनेदानीं मिलितेन पक्ष्मपिधानेन लज्जितमिव संजातलज्जमिव स्थितमिदं परिदृश्यमानं कर्म विरम विशेषेण रमय माम् "अन्तर्घटित णिच् व्याङ परिभ्यो रम ( १ । ३ । ८३ ) इति परस्मैपदम् । मद्विषयनिमित्तकोपजनितमीलनाक्षलब्धायाः सकाशात् व्यावर्त्तयेत्यर्थः । सविलासदृष्ट्या मां सखेति तात्पर्य्यम् अति विकलरोषेत्यस्य विकलीकृतमित्यनेनान्वयः । न केवलमवलोकनमात्रमपितु रतये खेदं सुरत्यर्थं विषादमित्यर्थः । "चतुर्थी त्यादिना समासः" । विसृज त्यज समनन्तरमेवसम्भविष्यत् सुरतमाकलय्य तदर्थं खेदं मुञ्च इत्यर्थः । अथवा, विसृजेत्यन्तःगर्भित णिच् तदा रतिखेदं मदीयसुरतार्थं विषादं विसर्जय त्याजय सुरत—प्रवृत्त्या मदीयखेदमपाकृत्य निष्कारणं विकलीकृतं मां सम्भावयेति तात्पर्य्यम् । अवलोकितमित्यस्य मिलितलज्जेत्यनेनान्वयः । अतश्च नारायणं माम् अनुभजेत्यन्वयः ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

श्रीजयदेवभणितं रसिकजनेषु मनोरमरतिरसभावविनोदं जनयत्विति योजना ।

प्रत्यूहः पुलकाङ्कुरेण निविडाश्लेषे निमेषेण च
क्रीडाकूतविलोकनेऽधरसुधापाने कथानर्मभिः ।
आनन्दानुगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभू-
दुद्वृत्तः स तयोर्बभूव ललितारम्भः प्रियंभावुकः ॥

॥ २ ॥

---

मनोरमश्चासौ रतिरसभावश्चेति विग्रहः । कीदृशमनुपदनिगदितो मधुरिपुमोदम् अनुपदं निगदितो मधुरिपुमोदो यत्रेति विग्रहः । इदानीं सुरतैः श्लोकैः प्रविभज्य वर्णयन्नाह ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्रीजयदेवेति । अनुपदमनुतरं निगदितो भणितः मधुरिपोः श्रीकृष्णस्य मोदः सुरतघटनाजनितसन्तोषः येन तत् । श्रीजयदेवेन भणितमिदं गीतं रसिकजनेषु शृङ्गारास्वादिविदग्धजनेषु मनोरमा चित्ताकर्षका या रतिः स्थायीभावः तस्या रसस्तदा धृतिकशृङ्गाररससञ्चयस्तत्र विनोदं जनयतु सम्पादयतु । रसिकजना-ह्लादकारीत्यर्थः ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

यस्मिन् ललितारम्भे प्रत्यूहोऽपि प्रियं भावुको बभूव, ललितारम्भः तयोरभूत् बभूव इत्यर्थः । अन्यत्र ग्रन्थारम्भे मध्ये वा प्रत्यूहो दोषजनको दृष्ट इह त्वादौ मध्ये वा प्रत्यूहः क्रीडारम्भस्य ललितत्वं, कुत्र कुत्र केन केन प्रत्यूह इत्याह । पुलकाङ्कुरेणेत्यादि, अधर सुधापाने कथानर्मभिः कथाक्रीडाभिरित्यर्थः । आनन्दातिशयेन मन्मथ कलायुद्ध इति शृङ्गार इत्यर्थः । विघ्नोऽन्तरायः प्रत्यूहः । "क्रीडा खेला च नर्म च" इत्यमरः ॥ २ ॥

दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै-
राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः ।
हस्तेनानमितः कचेऽधरसुधास्यन्देन संमोहितः
कान्तः कामपि तृप्तिमाप तदहो कामस्य वामागतिः ॥ ३ ॥

---

॥ श्रुतिरञ्जनी ॥

अथ प्रियायाः सुरतोन्मुखी करण प्रार्थनायाः फलमाह । प्रत्यूहेति । प्रियंभावुकः प्रियोभवकन् "कर्त्तरि भुवः खिष्णुः च" (३ । २ । ५७)" अरुर्द्विषदवन्ते (६ । ३ । ३७)" त्यादिना मुमागमः । ललितस्य सुरतक्रीड़ाविशेषस्य आरम्भः तयोः राधामाधवयो-रुद्भूतः प्रादुर्भूतः बभूव जातः सुरतोपक्रमो जात इत्यर्थः । यस्मिन् सुरतप्रारम्भ विषये निविडाश्लेषे दृढ़ालिङ्गने पुलकाङ्कुरेण रोमोद्गमेन प्रत्यूहोऽन्तरायः। "विघ्नोऽन्तराय प्रत्यूह इत्यमरः" अभूत् पुलकरूपो विघ्नो जात इत्यर्थ । क्रीड़ाकूत विलोकने विभ्रमसूचकालोकने निमेषेण पक्ष्मपातेन प्रत्यूहोऽभूत् निमिषरूपविघ्नो जात इत्यर्थः । अधर सुधापानेअधरामृतसेवने कथानर्मभिरिष्टमधुरालापैः प्रत्यूहोऽभूत् मन्मथकलायुद्धे आनन्दाधिगमेन प्रत्यूहोऽभूत् आनन्दरूपोऽन्तरायो-ऽभूत् । सुरतकौशलद्योतनार्थ इषदर्थप्रयोजनम् ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

न केवलं प्रत्यूहो रतौ क्रीडाविघातको बन्धनादिकमपि क्रीड़ाविघातकं न भवतीति प्रतिपादयितुमाह । दोर्भ्यामिति । कामस्य वामा गतिरहो आश्चर्य्यम् । कथं वामा-गति कामस्येत्याह । दोर्भ्यां संयमित इत्यादि "भुजबाहु प्रवेष्टो दोर्बद्धकीलित संयताविल्यमरः", श्रोणीतटेनाहत इति विपरीतरतौ कट्याघात इत्यर्थः । हस्तेनान-मितः कच इति विधृतेत्यर्था दधिगन्तव्यम् । एवं दयितया तिरस्कृतोऽपि कान्तः

मारा‍ङ्के[१] रतिकेलिसङ्कुलरणारम्भे तया साहस-
प्रायं कान्तजयाय किञ्चिदुपरि प्रारम्भि यत्संभ्रमात् ।
निस्पन्दा जघनस्थली शिथिलिता दोर्वल्लिरुत्कम्पितं
वक्षो मीलितमक्षिपौरुषरसः स्त्रीणां कुतः सिध्यति ॥ ४ ॥

कामपि अनिर्वचनीयतृप्तिं प्राप्त इति कामस्य वामत्वं कुट्टमितनामायं भावः । तल्लक्षणं —

केशस्तनादि ग्रहणं रति हर्षसम्भ्रमोत्पन्नः ।
कुट्टमितं विज्ञेयं सुखसमयो दुष्ट्योपचारः ॥ इति ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

दोर्भ्यामिति । ग: श्रोणीत्यत्र इतः प्राण्यादित्वात् ङीप् । अत्र श्रोणिपदस्य जघन परत्वेन बन्धविशेषणत्वात् श्रोण्याहृतेरुपपत्तिरवगन्तव्या । तथा करे ललाटाग्रे चिकुरहस्तेन करकमलेनानमितः आनतः अधरपानार्थं कचेष्वाकृष्ट इत्यर्थः । अथवा अधरसुधापानेन सम्मोहितः परवशः कृतः इत्थं कामपि तृप्तिम् अपूर्वां प्रीतिम् आप प्राप्तवान् । अथवा आप इति वा च्छेदः । तदा आप्राप्तवान् तत्तस्मात्कारणात् कामस्य मन्मथस्य गतिः प्रकारः वामा वक्रभूता अहो आश्चर्यं यस्मादाप्तसक...... नित्यतृप्तं भगवन्तमपि श्रीकृष्णं कामः कामोपभोगरतपरतन्त्रमकार्षीत् । अत्र तुरीयगतेराश्चर्यावहत्वं वामत्वं चेतिभावः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

रतिकेलि संकुलरणारम्भे तया राधया कान्तजयाय साहसप्रायं कान्तस्योपरि ...

१ । ग. आरब्धे । घ. वामाङ्के ।

किञ्चित्प्रारम्भि किञ्चित्सामर्थ्यम् उपपादितं विपरीतमारब्धमिति यावत्, अनिर्णयो युद्धे इति रतिकेलिसङ्कुलारम्भे साहसं रतिकेलिरेव सङ्कुलरणः परस्पराहृतसंग्रामस्तस्यारम्भ इति विग्रहः यत्सम्भ्रमादिति यदायासीत्यर्थः। एतच्च निस्पन्दा जघनस्थलीत्यादौकारणमुपन्यस्तम् । पौरुषरसः स्त्रीणां कुतः कथञ्चित् सिध्यतीति यस्मात्किञ्चित्पौरुषकर्मारम्भेऽपि राधाया निस्पन्दा जघनस्थलीजात तत्तस्नादनुमितं स्त्रीणां पौरुषरसः सिध्यतीत्येव इत्यभिप्रायः । रतिकेलिसङ्कुलरणारम्भे कीदृशे माराङ्के रतिकेलिपक्षे मारः संकुली रणपक्षे मारो मारणम् ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

एवमुपरि सुरतेन कान्तमुपवर्ण्यानन्तरं तृप्तिमाह। माराङ्क इति । मारस्य "मदनो मन्मथो मार इत्यमरः" अङ्के चिह्ने तत्प्राप्तिगमक इत्यर्थः । मारो मरणं तस्याङ्क इति च ध्वन्यते। "उत्सङ्ग चिह्नयोरङ्क इत्यमरः।" अथवा प्रारब्धे रतिकेलीति क्वचित्पाठः। तदा रणारम्भे प्रारब्धे सतीति अन्वयः। रतिकेलि सङ्कुलरणारम्भे सुरतक्रीडा तुमुलसुरतोपक्रमे तथा राधया साहसप्रायं साहसबहुलं साहसेन मरणमिति यावत् । तद् यस्मिन्निति च ध्वन्यते। "प्रायो भूम्न्यन्तगमने इत्यमरः ।" रणारम्भस्य मरणफलकत्वात्साहसमूलत्वमवगन्तव्यम् । एतादृशं यत्किञ्चित्कार्यं कान्तजयाय वल्लभजयाय सम्भ्रमादाटोपात् उपरि कान्तोपरि प्रारम्भि उपक्रान्तमित्यर्थः । कर्मणि शुभं "दर्शाखारसेणल्युशेरिति ल्युट् च"। अत्र कान्तशब्देन वल्लभग्रहणं तस्यानन्यपत्यर्थत्व सूचनार्थमित्यवगन्तव्यम् । अतएव भट्टविजयार्थं प्रतियोद्धुः प्रवृत्तेरपि युक्तेतिभावः। कान्तजयाय यत्किञ्चित्कार्यं प्रारभ्यते वा योजना, तत्र तत्कार्ये जघनस्थली राधायाः नितम्बप्रदेशः निस्पन्दा कान्तजयाय प्रवृत्तानि चेष्टा जातेति वाक्यार्थः । तात्पर्यं तु स्तम्भरूपसात्त्विकभाववती । तथा दोर्वल्लिर्बाहुलतिका शिथिलिता शिथिलीकृता जयार्थं प्रवृत्ता शिथिलप्रयत्ना जाता इति तात्पर्यम्। तु सात्त्विकोदयेन गलित यन्त्रेणेति। अत्र बन्धनानुगुणाया दोर्वल्लित्वारोपणं युक्तमित्यवगन्तव्यम् । वक्ष उरस्थलम् उत्कम्पितं जयाय प्रवृत्तं बहिर्गतकम्पं जातमित्यर्थः । तात्पर्यं तु निधुवनजातनिःश्वासेन कम्पितमिति । अक्षि नयनम् एकत्वविवक्षितम् । तादृशं रणं द्रष्टुम् शक्नुवत् बद्धकष्टं जातमित्यर्थः।

तस्याः पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ
निर्द्धौतोऽधरशोणिमा[1] विलुलिताः स्रस्तस्रजो मूर्द्धजाः ।
काञ्चीदाम दरश्लथाञ्चलमिति प्रातर्निखातैर्दृशो[2]-
रेभिः कामशरैस्तदद्भुतमभूत्पत्युर्मनः कीलितम् ॥ ५ ॥

तात्पर्य्यं तु दुःखपारवश्येन मीलितं जातमिति अतश्च पौरुषेण पुरुष कर्मणा पुरुषभावेन वा रसः गुणोत्कर्षः स्त्रीणां कुतः सिध्यति । न कुतोऽपीत्यर्थः । श्लेषोत्थापितकाव्यलिङ्गमलङ्कारः । रतिकेलिरणारम्भ इत्यत्र रूपकम् । सिद्धस्य जयस्य पराजयरूपत्वेनोह्नादुगम्योत्प्रेक्षा । विशेषेण सामान्य समर्थनरूपो अर्थान्तरन्यासश्च । त्रयाणां समुच्चय प्रतिपादनात् समुच्चयालङ्कारश्च । एतेषां संसृष्टिः सङ्करो यथायोगं द्रष्टव्यौ । रतिकेलीत्यत्र रतिशब्देन एवं विधं सुरतं कथितं मुनिना क्रमशः कथयामि । विशेषसविशेषमथेति किञ्चिदुपरि प्रीतिरित्यनेन च धनकादिविशेषवल्लभायिताख्याः सुरतविशेषः सूचितः । तल्लक्षणं तु स्वेच्छया रमणी कापि वल्लभे योषिदाचरेद्धि वल्लभमिति प्रसङ्गे वन्धविशेष लक्षणान्यपि कथ्यन्ते :—

न्यस्त हस्तयुगला निजे पदे योषितेति कटिरुरु वल्लभा ।
अग्र तो········ रधोमुखी धेनुकं वृक्षवदुन्नतं प्रिये ॥
व्यानतं रतमिदं यदि प्रियः स्यादधोमुख चतुष्पदा कृतः ।
तत्कटि समधि रुह्य वल्लभं स्याद् वृषादि पशु सम्मित स्वरः ॥
चक्रवद् भ्रमता कृतांघ्रिणा भ्रामरम्भजघने समुद्धते ।
भूगत स्तन भुजास्यमस्तकामुन्नतस्फजमधोमुखीं प्रियाम् ॥
क्रमति स्वकरस्पृष्ट मेषनो वल्लवे करभैरव मुच्यते ॥

ग्रन्थान्तरे—प्रसारिते पाणिपादे शय्या स्पृशि मुखोरसि ।
उन्नतायां स्त्रियः कट्यां मार्जारकरणं विदुः ॥ इति बोद्धव्यम् ॥ ४ ॥

॥ सर्वाङ्गसुन्दरी ॥

पाटलपाणिजाङ्कितमुर इति नखक्षतलोहितं वक्ष इत्यर्थः सुरतविमर्दे पत्रावली-

---

१. ख: निद्धूंताधरशोणिमा । २ । खं निशातैर्दृशो ।

विनष्टेऽधिगन्तव्यं, पाटलपाणिलाङ्कितं पश्चात्पाटलमिति विग्रहः । राजदन्तादित्वा त्परनिपातः। निद्राकषाये दृशाविति निद्रालोहिते चक्षुषीत्यर्थः । कज्जलं लुप्तमित्य-धिगन्तव्यम् । निर्द्धौतोऽधरशोणितमिति अलक्तरागचुम्बनेनप्रक्षालित इत्यर्थः। विलुलिताः श्रस्तस्रजो मूर्द्धजात सुरत विमर्दे विगलितमाल्यत्वात् बन्धनवैविड्योपगमादितस्ततो गताः केशा इत्यर्थः काञ्चीदामदरश्लथाञ्चलमिति रसनाकलापः शिथिलैकदेश इत्यर्थः। दरमीषत् श्लथमञ्चलमग्रभागो यस्येति विग्रहः । प्रातर्निखातैर्दृशोरेभिः कामशरैस्तदद्भुतमभूत् पत्युर्मनः कीलितमिति प्रभाते कामशरीभूत्वा चक्षुर्द्वारा पत्युर्मनः प्रतिष्ठाप्यमित्यर्थ। तदद्भुतमिति तत्र तदाश्चर्यमित्यर्थः । सुरत विमर्दे राधायाः वेशभङ्गतापि कामशरायत्तमित्यद्भुतत्वम् ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

एवं सुरतमुपवर्ण्य तस्यान्तं वर्णयति। तस्या इति । तस्याः राधायाः पाटलाः श्वेतारुणाः ये पाणिजाः करजाः "श्वेतरक्तस्तु पाटलः" इत्यमरः । तैरङ्कितं कृष्णनख व्रणालङ्कृतमित्यर्थः । अत्र नखानां पाटलवर्णनं कृष्णस्य महाभाग्यसूचनार्थ-मित्यवगन्तव्यम्।

पाणिपादतले रक्ते नेत्रान्तौ च नखानि च ।
नाभिजिह्वाधरौष्ठं च सप्तरक्तं प्रशस्यते ॥

तस्या इत्यस्य दृशादिषु सर्वत्रान्वयः । तस्या दृशौ निद्राकषाये रक्तवर्णे जाते सुरतव्यापारे निद्राया अभावात् । पुनर्निद्रार्थं रक्तवर्णे जाते इत्यर्थः। अथवा। निद्रेत्यत्र दर्शव्यतिरेकलक्षणयात्र तदा वो गृहीतेति । तदा च निद्रया निद्राभावेन कषाये समन्तात् कषायेत्यर्थः। अथवा निद्रया करणेन कषाये सुरतानन्तरं शय्यायां निद्रायामनुभूतायामनन्तरमरुणे जाते इत्यर्थः । तादृशे अथवा अनिद्रेति बहुव्रीहिः । अधरस्य शोणिमा रागः निर्द्धूता निराधूता अधरपानेनापगतेत्यर्थः । अधर पानस्या त्यन्तासक्ति सूचनार्थं न ग्रहणम्। क्रिया सामर्थ्यं वेत्यरुणिमशब्देन

**अथ कान्तं रतिश्रान्तं पुनर्मण्डनवाञ्छया ।**
**निजगाद निरावाधा राधा स्वाधीनभर्तृका ॥ ६ ॥**

---

ताम्बूल·· न तु सहज इत्यर्थ.। तस्य स्त्रीलिङ्गप्रयोगः मृग्यः विलुलिताः सुरतव्यापारेण निद्रया वा। इतस्ततः स्रस्ता विक्षिप्ता इत्यर्थः । अतएव स्रस्ताः गलिताः स्रजः कुसुम मालिका येभ्यस्ते तादृशा जाता इति शेषः । काञ्चीदाम रसनाकलापं दरमीषत्श्लथं श्रस्तम् अञ्चलम् अन्तिमभावो यस्य तत्तादृशं सुरतव्यापारशिथिलकीलकमित्यर्थः। इत्येवं प्रकारैरेभिः पूर्वोक्तैः निशातैस्तीक्ष्णः प्रातरुषसि दृशो गोचरैरितिशेषः। कामशरैः कामवाणैः निखाते इति क्वचित्पाठः तदादृशोः कृष्णदृशोः निखातै र्निखनितैः तद्दृष्टि विषयीकृतैः, पुनः सुरतोत्कण्ठितं जातमित्यर्थः । इदं त्वाश्चर्य-मिति भावः। तदुक्तम्—

> उत्तिष्ठन्त्या रतान्ते भरसुरपतौ पाणिनैकेन कृत्वा-
> धृत्वा चान्येन वासः शिथिलतकवरी भारसंसे वहन्त्याः ।
> भूयस्तत्कालकान्तद्विगुणितसुरतप्रार्थनाशारिणाद्धः
> शय्यामालिङ्ग्य नीतं तवपुरलसब्धाहुलक्ष्म्या पुनातु ॥

अन्यत्राप्युक्तम्—

> सा रामविद्या निरवद्य गोष्ठी तृप्तस्य या विस्मयमातनोतु।
> सा रूपरेखा रतिदृष्टिभाजां भूयोदृशं संजनयत्यजस्रम् ॥

अत्र पत्युर्मनः कीलितमिति मनः कीलनरूपवस्तुना राधायाः सुरतान्तकालस्य लोकोत्तरत्वरूपं वस्तु व्यज्यत इति वस्तुध्वनिः ॥ ५ ॥

अथेति। स्वाधीनभर्तृका राधा कान्तं निजगादेति सम्बन्धः । स्वाधीन भर्तृका लक्षण यथा—

---

१। ख ग. श्लोको नास्ति ।
घ. अथ सहसा सुप्रीता सुरतान्ते सा नितान्तखिन्नाङ्गी ।
राधा जगाद सादरमिदमानन्देन गोविन्दम् ॥
ङ. अथ सा निर्गतवाधा राधा स्वाधीन भर्तृका ।
निजगाद रतिक्लान्तं कान्तं मण्डन वाञ्छया ॥
च. इति सहसा–शेषं 'घ' पुस्तकवत् ।
छ. अथ कान्तं रतिक्लान्तमिति पाठः ।

॥ चतुर्विंशः प्रबन्धः ॥

रामकिरी[1] रागेण गीयते

कुरु यदुनन्दन चन्दनशिशिरतरेण करेण पयोधरे ।
मृगमदपत्रकमत्र मनोभवमङ्गलकलशसहोदरे ।
निजगाद सा यदुनन्दने क्रीडति हृदयानन्दने ॥

॥ ध्रुवम् ॥ १ ॥

---

आश्लेषचुम्बनशतैः कुसुमादिदानैः
प्रेमोत्तरप्रणयकोमलमुग्धवाग्भिः ।
यां सर्वदैव सुखयन्नियतः प्रियोऽस्ति
स्वाधीनभर्तृकपदे प्रकटीकृता सा ॥

इदानीं स्वामिनं प्रति परितुष्टा सती श्रीराधा याचितं कुर्वतीति ॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

यदुनन्दने श्रीकृष्णे क्रीडति सति राधिका निजगादेत्यर्थः धातुसम्बन्धे प्रत्यया इति वचनात् क्रीडतीत्यस्य भूतकालता प्रयेतव्या । शृङ्गारकाले वक्ष्यमाण वचसो विरसता प्रतिपादकत्वात् । कुर्वित्यादि । हे यदुनन्दन ! मम पयोधरे मृगमदपत्रकं कस्तूरीपत्रावलीं करेण कुर्विति वाक्यार्थः । कीदृशे, मनोभवमङ्गकलशसहोदरे, मनोभवमभिषेकाय यो मङ्गलकलशस्तस्य सहोदरे तत्सदृश इत्यर्थः । करेण कीदृशा चन्दनशिशिरतरेण विरहसन्तापाभावादित्यभिप्राय. ॥ १ ॥

॥ श्रुतिरञ्जनी ॥

राधा पुनः सुरतार्थं भणति । मङ्गलकौशिकरागेण गेयमित्युक्तम् । तस्यायमभिप्रायः ।

---

१। ख. मङ्गल कौशिक ।

अलिकुलगञ्जनमञ्जनकं[1] रतिनायकसायकमोचने ।
त्वदधरचुम्बनलम्बितकज्जलमुज्ज्वलय प्रियलोचने ॥ २ ॥

---

रामक्रियानन्तरं तस्य पत्नी एव उपस्थापनं युक्तमिति । यद्वा देहालङ्करणरूपमङ्गल-समयत्वाच्च । तदनुगुणाय तस्या एव उपस्थानं युक्तमिति रूपकतालेन गेयम् । अमरतालेनेति केचित् । लक्षणं तु—

'लघुर्चारुध्रुवताले जगतीमरसंज्ञकः" इति । अत्र निजगादेत्यादि हृदयानन्द-मित्यन्तं ध्रुवपदम् । हृदयस्य मनसः आनन्दने सन्तोषकारिणि यदुनन्दने यादव कुमरे श्रीकृष्णे क्रीडति विहरमाणे यदुनन्दने विषये निजगादेति वा योजना । उक्त प्रकारकमेव विषदयति । कुर्वित्यादि हे यदुनन्दन ! श्रीकृष्ण ! अत्र यदुनन्दनेति सम्बोधनं सम्बन्धे जात्यनुगुणद्योतनार्थमित्यवगन्तव्यम् । लोकेऽपि हि समानजात्योः सम्भोगस्यातिमनोहरत्वादिभावः ।

चन्दनमिव शिशिरतरेण तव करेण पाणितलेन मनोभवस्य कामस्य मङ्गलार्थं कलशः पूर्णकुम्भः तस्य सहोदरे समाने, अत्र अस्मिन् पयोधरे कुचे मृगमदपत्रकं कस्तूरीमकरिकापत्रं कुरु रचय यथा—विवाहादिषु कस्मिंश्चिद्देशविशेषे हरिद्रादि-चित्रकद्रव्येति यौवनमेव पूर्णकुम्भमलङ्कुर्वन्ति । तथा प्रकृतेऽपीति सूचयितुं पयोधर मित्येव वचनमितिभावः । अत्रावयवेषु कुचकुम्भयोरेव प्रथमतः पुरुषस्पृहाकारित्वा-दादौ तदलङ्करणोपदेश इत्यवगन्तव्यम् ॥ १ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे प्रिय ! मम लोचने त्वदधरचुम्बनलम्बितकज्जलमुज्ज्वलयेति योजना । कीदृशम्, अलिकुलगञ्जनमञ्जनकम्, अलिकुलगञ्जनं मञ्जनयतीति थन प्रत्ययः । लोचने कीदृशे,

---

१. सज्जनकमिति पाठान्तरम् ।

**नयनकुरङ्गतरङ्गविकाशनिरासकृतिश्रुतिमण्डले ।**
**मनसिजपाशविलासधरे शुभवेश निवेशय कुण्डले ॥**

॥ ३ ॥

रतिनायकसायकविमोचने, कामबाणमोचने जनमोहककटाक्षकायिनीत्यर्थ ॥ २ ॥

॥ श्रुतिरञ्जनी ॥

अलीति । हे प्रिय ! मनोहर अलिकुलस्य भ्रमरनिकरस्य गञ्जनं तिरस्कारकं ततोऽपि अति नीलमित्यर्थः । त्वदधरचुम्बनेन लम्बितं नीतं प्रापितं कज्जलं कालिमा अशनैक देशो वा यस्मात्तादृशं मदीयचुम्बनेन···धरे लग्नैकदेशो मित्यर्थः । एतादृश-मञ्जनकं रतिनायकस्य रतिपतेः सायकानांदृष्टिरूप विशिखानां मोचनं प्रयोगो यस्मात्तादृशे लोचने नयनयोरुज्ज्वलय प्रकाशय निधेहीत्यर्थः । नेत्रे पुनरञ्जनं कुर्विति तात्पर्य्यम् ॥ २ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे शुभवेश ! मम श्रुतिमण्डले कुण्डले निवेशयेति योजना । कीदृशे, नयनकुरङ्ग विकाशनिरासकृती, नयनमेव कुरङ्गो मृगनाभिस्तरङ्गस्तङ्ग इति ख्यातः, तस्य विकाश निरासं करोतीति क्विप् प्रत्ययः । पुनः कीदृशे, मनसिजपाशविलासधरे "पाशो बन्धनरज्जुः स्यात्" ॥ ३ ॥

॥ श्रुतिरञ्जनी ॥

नयनेति । हे कृष्ण ! मनसिजस्य यः पाशः युवतिनिकरः मनोबन्धनरज्जुयन्त्र-विशेषः तस्य विलासः विभ्रमः तस्य धरे पाशकल्प इत्यर्थः । सुभगे मनोहरे नयने कुरङ्गा विव नयनकुरङ्गौ तद्वदति च चलगति इत्यर्थः ।

अथवा शब्देन नयनलक्षणापि तयोस्तरङ्गवत्तरङ्गः परं परं तस्य विकाशस्य विभवस्य निरासकं निरोधकं यत् श्रुतिमण्डलं कर्ण्णप्रदेशः, तस्मिन् नेत्रयोरवटपर्य्यन्त

भ्रमरचयं रचयन्तमुपरि रुचिरं सुचिरं मम सम्मुखे ।
जितकमले विमले परिकर्मय नर्मजनकमलकं मुखे ॥
॥ ४ ॥

---

गमननिरोधककर्णयुगल इत्यर्थः । अनेन नयनयोराकर्णान्तविशालतापि सूचिता । कुण्डले कर्णाभरणे विनिवेश्य निधेहि एवं निजगाद इत्यन्वयः ॥ ३ ॥

॥ सर्वाङ्गसुन्दरी ॥

नर्मजनकमलकं चूर्णकुन्तलं मम मुखे परिकर्मय प्रसाधयेति वाक्यार्थः । "परिकर्माङ्गसंस्कार इत्यमरः" । कीदृशे जितकमले पद्मनिभे इत्यर्थः । कीदृशं कमलस्य उपरि सम्मुखे भ्रमरचयं मुखस्य कमलत्वेन अलकस्य भ्रमरत्वेन वर्णनमुक्तम् । कं नाम रूपकमेतत् नर्मजनकमिति परिकर्मक्रियाविशेषणं वा । कश्चित्तु नर्मजनेति हरिविशेषणम् । किमित्यलकविशेषणं व्याचख्युः ॥ ४ ॥

॥ श्रुतिरञ्जनी ॥

भ्रमरेति । हे प्रिय ! मम सम्मुखे समीपे उपरि मुखोपरिभागे ललाटोपरिभागे सुचिरमत्यन्तचिरकालं भ्रमरचयं रोलम्बकदम्बं रचयन्तं कुर्वाणमिव स्थितम् । अतएव नर्मजनकं क्रीड़ासम्पादकमचूर्णकुन्तलं विमले निर्मले अतएव जितकमले पराकृत-पङ्कजे, ततोऽपीति मनोहर इत्यर्थः । एतादृशे मम मुखे परिकर्मय अलङ्कुरु परिकर्माङ्ग-संस्कार इत्यर्थः । तस्मात्करोते णिच । करोरुहाग्रै रतिसमयविकीर्णालकं परिष्कारं कुर्वित्यर्थः । यथा कमलोपरिभागं भ्रमरा अलंकुर्वन्ति, तथा मुखोपरिभागे ललाटो-परिदेशं चिकुरा अलङ्कुर्वन्त्विति समुदायार्थः । ललाटोपर्यलङ्करणमुत्कलदेशे-प्रसिद्धम् ॥ ४ ॥

मृगमदरसदलितं ललितं कुरु तिलकमलिकरजनीकरे ।
विहितकलङ्ककलं कमलानन विश्रमितश्रमशीकरे ॥
॥ ५ ॥

मम[1] रुचिरे चिकुरे कुरु मानद मनसिजध्वजचामरे ।
रतिगलिते मिलिते कुसुमानि शिखण्डविखण्डकडामरे ॥
॥ ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे कमलानन ! मम अलिक रजनीकरे ललाटचन्द्रे मृगमदरसदलितं तिलकं कुर्विति वाक्यार्थः । अलिकमेव रजनीकर इति विग्रहः । "ललाटमलिकं गोधिरित्यमरः ।" कीदृशं विहितकलङ्क कलं, अत्र ललाटचन्द्रत्वेन मृगमदतिलकं कलङ्कत्वेन निरूपितम् । अलिकरनिकरे, कीदृशे, विश्रमित श्रमशीकरे, इति विग्रहः, विश्रमिताः शान्ताः श्रम-शीकराः घर्मजलकणा यत्रेति विग्रहः ॥ ५ ॥

॥ श्रुतिरञ्जनी ॥

मृगमदेति । हे कमलानन ! हे श्रीकृष्ण । विश्रमिताः स्थिताः श्रमशीकराः स्वेदाम्बुकणाः यत्र तादृशे, समनन्तरनिवृत्तसुरतसम्भवा अवगन्तव्या । एतादृशे रजनीकरे चन्द्रमसि "अलिकं तु भ्रुवोर्मध्यमित्यमरः ।" ललाटस्यार्द्धचन्द्र साम्यादेवमुक्तमिति । मृगमदः कस्तूरिका तेन वलितं घटितम् अतएव ललितं मनोहरं विजिता कलङ्कला कलङ्क शोभा येन तादृशम् । कस्तूरी कलङ्कलयोःसावर्ण्यादेव मुक्तमिति विहितकलङ्केति क्वचित्पाठः । तथा विहिता विधानकर्मीं कृता अनुश्रुतेत्यर्थः । तिलकं कुरु रचय, यथा चन्द्रमसि कलङ्क शोभा भासते तथा मम ललाटे भवद्विरचितकस्तूरीतिलकं भासतामिति समुदायार्थः ॥ ५ ॥

॥ सर्वाङ्गसुन्दरी ॥

मानं ददातीत्यतोऽनुपसर्गकः । हे मानद ! मम रतिगलिते रुचिरे चिरे चिकुरे केशे

१. घन इति पाठान्तरम् ।

सरसघने जघने मम शम्बरदारणवारणकन्दरे ।
मणिरसनावसनाभरणानि शुभाशय वासय सुन्दरे ॥
॥ ७ ॥

---

कुसुमानि कुर्विति वाक्यार्थः । कीदृशे, मनसिजध्वजचामरे, पुनः कीदृशे, शिखण्ड विखण्डकडामरे शिखण्ड विखण्डको डामरो विप्लवो यस्येति विग्रहः । "पिच्छं बर्हं शिखण्डोऽपि डिम्बे डामर विप्लवौ इत्यमरः ।" डमर एव डामर इति स्वाभाविके ण प्रत्ययः ॥ ६ ॥

॥ श्रुतिरञ्जनी ॥

घनेति । मानं द्यति खण्डयतीति मानदः खण्डितानायिकामानभञ्जकेत्यर्थः । अथवा मानं पूजां ददातीति मानदः वासकसज्जानायिका सम्मानकारिन्नित्यर्थः । हे श्रीकृष्ण ! घनरुचिरे नीलमेघसंकाशे मनसिजस्य मन्मथस्य ध्वजः अङ्गस्थानीया या अङ्गयष्टिः तत् चामर इव चामरे यथा मन्मथध्वजे युवतिनिकर विजयालंभूते चामरं भासते तथा मन्मथविजयसाधनभूतगात्रध्वजे तद् विजयगमकत्वेन नीलचामरमिव शोभमानमित्यर्थः । किञ्च रतिगलिते सुरताटोपे ललिते ललितः मनोहरो धाम तेजः शोभेत्यर्थः रा दाने इत्यस्माद्धातोरनुपसर्गे क इति क प्रत्ययः एतादृशे चिकुरे केशपाशे कुसुमानि नानाविधकुसुमानि कुरु निधेहि । अतः कुसुमानि निक्षिप्य केशपाशं रचयेत्यर्थः । ६ ॥

॥ सर्वाङ्गसुन्दरी ॥

हे शुभाशय ! मम जघने मणिरसनाभरणानि वासयेति योजना, कीदृशे रसघने, मम शम्बरदारणवारणकन्दरे सरसं च तत् जघनं चेति विग्रहः पुनः कीदृशे, शम्बरेत्यादि शम्बरदारणः कामः स एव वारणो हस्ती तस्य कन्दरे दरीरूपे ॥ ७ ॥

श्रीजयदेववचसि जयदे सदयं हृदयं कुरु मण्डने ।
हरिचरणस्मरणामृतकृतकलिकलुषज्वरखण्डने ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

सरसेति । हे शुभाशय ! मङ्गलहृदय ! हे सरसरसिकाग्रेसर ! अथवा रसेन सम्भोगाभिलाषेण सह वर्त्तत इति सरसः । घने पृथुले शम्बरो नाम कश्चिद्दानवस्तस्य दारणः मर्द्दकः "शम्बरारिर्मनसिज इत्यमरः ।" स एव वारणः तस्य कन्दरे आवासभूतगुहारूपे अथवा शम्बरदारणवारणस्य कन्दरा मन्दिरं यत्रेति तादृशमदनमन्दिराहङ्कृत इत्यर्थः । अतएव सुन्दरे कामुकचित्ताकर्षके मम जघने नितम्बभागैकदेशे मणिरसनावसनाभरणानि-रत्नखचित काञ्ची दुकूलालङ्करणानि । तत्राभरणशब्देन किङ्किण्यादयो ग्राह्याः, वासय निधेहि अनेन प्रकारेण निजगाद इत्यन्वयः ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

श्रीजयदेववचसि हृदयं कुर्वीति योजना । कीदृशे जयदेवकवेर्जयं ददातीति कृत्वा, पुनः कीदृशे, मण्डनु अलङ्काररूपे, पुनः कीदृशे, हरिचरण स्मरणामृत-कृत-कलिकलुषज्वरखण्डने, हरिचरणस्मरणमेवामृतं तेन कृतं कलिकलुषज्वरखण्डनं येनेति विग्रहः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

श्री जयदेवेति । हे देव ! मण्डने श्रवणाननकुहरे हरिचरणस्मरणानन्दकरहरिचरण-स्मरणामृतेन करणेन कलिकलुषज्वरसंज्वरस्य पापाख्यज्वरसन्तापस्य खण्डने भेदके हरिचरणस्मरणप्रदातृत्वेन सर्वपातकनिवर्त्तक इत्यर्थः । अतएव रुचिरे कमनीये एतादृशे श्रीजयदेववचने, जयदेवस्य गीतरूपवाक्ये हृदयं तवान्तःकरणं सदयं दयासहितं कुरु, त्वत्समर्पितं तत्सादरमाकर्णयेत्यर्थः ॥ ८ ॥

रचय कुचयोः पत्रं चित्रं कुरुष्व कपोलयो-
र्घटय जघने काञ्चीमञ्च स्रजा कवरीभरम् ।
कलय वलयश्रेणीं पाणौ पदे कुरु नूपुरा-
विति निगदितः प्रीतः पीताम्बरोऽपि तथाकरोत् ॥
॥ ७ ॥

---

॥ सर्वाङ्गसुन्दरी ॥

गीतार्थश्लोकसंग्रहमाह । इति एवं प्रकारेण राधायाः निगदितः प्रीतो हरिः तथाऽकरोदिति योजना । इतीति किं हे कृष्ण ! कुचयोः पत्रं पत्रावलीं रचय, कपोलयोश्चित्रं तिलकं कुरुष्व । जघने काञ्चीं मेखलां घटय योजयेत्यर्थः । हे कृष्ण ! स्रजा मालया कवरीभरं केशपाशं अञ्च शोभितं कुरु । पाणौ हस्ते वलयश्रेणीं "श्रेणीरूपयोर्वलयं कङ्कणं कलय कलितं कुरु । पदे चरणे नूपुरौ कुरु खचितं कुरु, एतेन राधा स्वाधीनभर्त्तृका जाता इत्यभिप्रेरितम् । हरिणीनाम वृत्तम् ॥ ७ ॥

॥ श्रुतिरञ्जनी ॥

गीतोपदिष्टमुपदेष्टव्यं चार्थमवगमकरणाय श्लोकेन संगृह्योपदिशति रचयति । हे कृष्ण ! कुचयोः पत्रं मकरिकापत्रं रचय, कपोलयोश्चित्रं कस्तूरिकयालेख्यकर्म कुरुष्व, जघने नितम्बे काञ्चीं रशनां घटय धेहि । कवरीभरे कचभारे स्रजं पुष्पमालिकां अञ्च पूजय स्रजा कवरीभारमलङ्कुर्वित्यर्थः । पाणौ पाण्योः एकत्वमविवक्षितं वलयश्रेणीं कङ्कणजालं कलय आमुञ्च आरोपयेति यावत् । पदे चरणयुगले नूपुरौ पादकटके कुरु निक्षिपेत्यर्थः । इति पूर्वोक्तप्रकारेण निगदित उक्तः अतएव प्रीतः अनुरूपकार्य्ये मां नियुक्तवतीति सन्तुष्टचित्तः पीताम्बरः श्रीकृष्णोऽपि तथा उपदिष्टप्रकारेणाकरोत् । कुचादिषु पत्ररचनादिकार्य्यजातमकार्षीदित्यर्थः । साक्षात् भगवान् कृष्ण एव कार्य्याकार्य्यमविचार्य्यैव प्रियोपदिष्टमकार्षीत् ।

यद्गान्धर्वकलासु कौशलमनुध्यानं च यद्वैष्णवं
यच्छृङ्गारविवेकतत्त्वमपि यत्काव्येषु लीलायितम् ।
तत्सर्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः
सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः ॥
॥ ८ ॥

---

अन्ये कामान्धाः प्रियोपदिष्टकार्य्यमकार्य्यं वा कुर्वन्तीति किमु वक्तव्यमिति सूचयितुं पीताम्बरोऽपीत्यपि शब्दप्रयोग इति भावः । अथवा यथा कृष्णोपदिष्टं राधा अकरोत् तथा राधोपदिष्टं कृष्णोऽपीत्यपि शब्दार्थः । अत्र रतिगोपनार्थमुद्धृतानां चरणकटकादीनां पुनरलङ्करणोपदेशोयुक्त एवेति तात्पर्य्यम् । अत्र क्रियाणां यौगपद्यप्रतिपादनात्समुच्चयालङ्कारः । "गुणक्रियायौगपद्यसमुच्चय उदाहृते" इति लक्षणात् ॥ ७ ॥

॥ सर्वाङ्गसुन्दरी ॥

पण्डितश्चासौ कविश्चेति कर्मधारयः । जयदेव नामा पण्डितः कविरिति शाकपार्थिवादिः । जयदेवपण्डितकवेः श्रीगीतगोविन्दतः सानन्दाः सुधियः तत्सर्वं परिशोधयन्त्विति योजना । तत् किमित्याह । यद् गान्धर्वकलासु कौतुकमित्यादि । लीलायितमिति लीलाचरणमित्यर्थः । कृष्णैकतानात्मानमिति कृष्ण एव एकतान आत्मा यस्येति विग्रहः । एकतानोऽनन्यवृत्तिरित्यमरः ॥ ८ ॥

॥ श्रुतिरञ्जनी ॥

एवं काव्यं परिसमाप्य तत्र वर्णनावस्तु सूचनद्वारा काव्यस्य लोकोपादेयतां सूचयन् गर्वपरिहाराय पण्डितान् प्रार्थयते । हे सुधियः ! पण्डिताः ! गन्धर्वकलादि सम्प्रदायायातो गान्धर्वः प्रयुज्यमानगीतविशेषः तदुक्तं सङ्गीत रत्नाकरे—

रोचकस्वरसन्दर्भं गीतमित्यभिधीयते ।
गन्धर्वगानमित्यस्य भेदद्वयमुदाहृतम् ॥

अनादि सम्प्रदायं यत्गन्धर्वं संप्रयुज्यते ।
गान्धर्वमिति तत्प्रोक्तमिति तस्मिन् कलासु च ॥

अथवा गन्धर्वाणां सम्बन्धिन्यो गान्धर्व्यः ताश्च ताः कलाः विद्याश्च तासु यत्कौशलं गाननैपुण्यमित्यर्थः । गान्धर्वेणात्र स्त्रियां पुंवदित्यादिना पुंवद्भावः । किञ्च यद्वैष्णवं विष्णुसम्बुद्धिः यदनुध्यातं तदनन्तरभावि ध्यानं, किञ्च शृङ्गारस्य सम्भोगविप्रलम्भभेदेन संक्षिप्त सम्पन्नरूपभेदेन वैषयिकानुकूलादिनायकभेदेन बहुप्रकारस्य रतिस्थायिभावकरसस्य विवेकः, साकल्येन निर्णयस्तस्य तत्त्वं याथार्थ्यमिति यत्सम्भोगादिस्वरूपं तु—

"अनुकूलौ निगद्येते यत्रान्योन्यं विलासिनौः ।
दर्शनस्पर्शनादीनि सम्भोगोऽयमुकाहृतः ॥
द्विविधः स तु संक्षिप्तः सम्पन्नश्चेति कथ्यते ।
संयोगविरहमानान्तरजाः संयोगाक्षिप्ताः ॥

एतदन्यः सम्पन्नः वैषिकाख्यश्रृङ्गारस्य रूपं तु भरतेन कथितम्—

विशेषात् यत् कलासर्वा यस्मात्तस्मात्स वैशिकः ।
विशेषचारुता वापि वैषिकः परिकीर्त्तितः ॥

इति तल्लक्षणं तु—

यस्तु सर्वकलोपेत सर्वशिल्प विचक्षणः ।
स्त्रीर्दत्तग्राहकश्चैव रूपवान प्रियदर्शनः ॥
विवेकी मधुरस्त्यागी वयोवेशविभूतिमान् ।
कामोपचार कुशलो वाग्मी दक्ष प्रियंवदः ।
एवमादि गुणोपेतः स वैषिक इतिस्मृत ॥

अनुकूलादिस्वरूपं तु प्रागेव कथितं काव्येषु उत्तमाधमभेदेन त्रिविधेषु लीलायितं लीलावदाचरणं रसिकत्वमिति यावत् । सर्वत्रास्तीति शेषः । तस्मात्गान्धर्वकला कौशलादिकं सर्वत्र स्वयंककमित्यर्थः । अनेन काव्यस्यावश्यदृश्यता सूच्यते । श्रीकृष्णस्य रूपमात्मा स एको मुख्यः "एकोमुख्यानेकेवला इत्यमरः ।" तादृशो वासः

साध्वी माध्वीकचिन्ता न भवति भवतः शर्करे कर्करासि
द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते ।
माकन्द क्रन्द कान्ताधर धरणितलं गच्छ यच्छन्ति यावद्
भावं शृङ्गारसारस्वतमिह जयदेवस्य विष्वग् वचांसि ॥
॥ ६ ॥

गर्भदासरूप आत्मा यस्य तादृशस्य चरणारविन्दध्यानैक निरतस्येत्यर्थः । अनेन काव्यकर्त्तृम······मुच्यते एतादृशस्य जयदेवपण्डितस्य कवेः गीतगोविन्दः गीतो-गोविन्दो यत्र स तादृशः ततस्तस्माद्गीतगोविन्दादित्यर्थः । सानन्दाः एकैकस्मिन् काव्ये ज्ञेयमर्थजातम् सर्वमत्रैव लब्धं कान्तमिति जयः सन्तोषस्तत्······शतां परिशोधयन् गायतां गन्धर्वकला कौशला यर्थिनस्तत् प्रतिपादकबहुग्रन्थान्तरावलोकनं परित्यज्य तत् सर्वमत्रैव विचिन्त्य अभ्यस्यन्ति इत्यर्थः । ये सङ्गीतविष्णुभक्ति-रहस्य रसविवेकव्यापारिणस्तैरेवायं प्रबन्धो द्रष्टव्य नापि केवल पण्डितैः नापि केवलं कविभिरिति तात्पर्य्यम् । अथवा ये सङ्गीत-विष्णु-साधन-शृङ्गाररसकाव्यर-सबुभुत्सवस्तै तत्सिध्यर्थमयं प्रबन्धो द्रष्टव्य इति तात्पर्य्यम् अनेन काव्यस्य लोका-पादेयता सूचिता ॥ ८ ॥

॥ सर्वाङ्गसुन्दरी ॥

सारस्वतं मन्त्रविशेषः, शृङ्गारस्य सारस्वतमिति षष्ठी समासः । शृङ्गारसारस्वतं प्रस्तुतं यस्य इत्यर्थे तत्कृतवचने मयट् । शृङ्गारसारस्वतश्चासौ जयदेवश्चेति कर्मधारयः । हे माध्वीक ! यावत् तादृक् जयदेवस्य वचांसि भावं यच्छति, तावच्चिन्ता साध्वी न भवत्येवमादियोजना । शर्करे कर्करासीति काठिनासीत्यर्थः । "शर्करा खण्डविकृतादुपलाशर्कराशयोरिति मेदिनीकरः ।" माकन्द क्रन्देति चूतफल ! रुदिहीत्यर्थः ॥ ६ ॥

इति श्रीकविराज श्रीनारायणदासकृतायां श्रीगीतगोविन्दटीकायां सर्वाङ्ग-सुन्दर्यां स्वाधीनभर्त्तृकावर्णने सुप्रीतपीताम्बरो नाम द्वादशसर्गविवरणम् ।

अतिविषमसुप्रीते गीतगोविन्दगीते हरिचरणविशेषे वेदाङ्गशेषे ।
भवति गतिविचित्रा हस्तकं कर्त्तुकामा हरिहरिहरिशेषा त्राणभूमामघाप्ता ॥

॥ श्रुतिरञ्जनी ॥

एवं जयदेवः काव्यं समाज्य स्ववाक्सन्दर्भस्य सर्वोत्कृष्टमाधुर्यं सूनेद्धारालोकोपादेय सिध्यर्थं लोके मधुरत्वेन प्रसिद्धं वस्तुजात निन्दति । साध्वीति । भावशब्देन शृङ्गारस्य प्रकृतिभूतोरतिभावः । व्यभिचारिभाव निर्वेदाद्या ये स्तम्भादय सात्विकाभावाः । कटाक्षविक्षेपादयोऽनुभावाश्च रसाभिव्यञ्जकाः सर्वेऽपि विवक्षिताः । उक्तं च सूत्रकृता विभावानुभावव्यभिचारिसंप्रयोगाद्रसनिष्पत्तिरिति ते च शृङ्गाराश्च भावः शृङ्गारस्तत्र सारतः । सरसवस्तया सम्बन्धात्तस्येदमित्यपि यस्येति चेतिकारलोपः तादृशो यो विलासस्तल्पयस्तत्प्रचुरः तत् स्वरूपो वा । यो जयदेवस्तस्य शृङ्गाररसोपयोगीभाववर्णना शृङ्गाररसप्रधानकविता निर्माणनिपुणस्य जयदेवस्येत्यर्थः । वचांसि शृङ्गारवर्णना रूपवाग्विलासाः यावत् देवस्य सर्वत्रान्वयेवगन्तव्यम् । विश्वग् विश्वं गच्छन्ति प्राप्नुवन्ति तावद्देव यावत् सामर्थ्या······शस्यां नयः सर्वत्र समादः । हे कान्ताधर वनिताधरं धरणीतलं रसातलं गच्छ प्रयच्छ । इतः पूर्वं माधुर्येण विश्वातिशायिनस्त्वेदानीं भवति गायिनो जयदेवकवेरति मधुरा वाग्-वैभवस्य पुरतोऽनुष्ठानस्या नुचितत्वादितिभावः । तथा हेमाकन्द रसालजंल कन्दरसत्वमपि तावदेव क्रन्द इति माधुर्येण मत्समं वस्तु नास्ति । इदानीं जयदेवकविवचोरूपं मधुर ··· मिति श्रूयते । आवयोरन्तं विचारयन्त्विवति लोके आक्रोशं कुर्वित्यर्थः । तथाविधस्य लोके आक्रोशस्य युक्तत्वादिति भावः । हे क्षार तावदेव ते रसः नीरं तद्वदेव अतिविरलं जयदेवकविता माधुर्यरसनात् पूर्वं मधुरत्वेन परिगणितमिदानीं तत्कलना त्वं निरताऽप्यति विरलं यासीत्यर्थः उत्कृष्टवस्तुसन्निधाने नीरसभावस्योचितत्यादिति भावः । तथाहि हे अमृतसुधे तावदेव त्वं मृतं गतप्राणं निःसारमिति यावत् असि । इतिपूर्वं देवा ये केवलं त्वाद्रियन्ते तदानीं तु सर्वेश्वरसेवार्थं तेषां

श्री भोजदेवप्रभवस्य रामादेवी[1] सुतश्रीजयदेवकस्य ।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु[2] ॥ १० ॥

भवतोऽप्यतिमधुरजयदेववाचामृतलाभात् त्वां कटाक्षेणापि न पश्यन्ति भवतोऽपि जन्म धिगितिभावः। हे द्राक्षे मृद्वीके त्वां भवतीं के द्रक्ष्यन्ति विलोकयिष्यन्ते न कोऽपीत्यर्थः। इतः पूर्वं भवद्व्यतिरेकेण ···हरन्तः स्फुरदे (?) सवस्तुनोऽभावाद्रसिकात् समाद्रियन्ते इदानीं भवत्य अपि अतिमधुरवहिरन्तःस्फुरद्रसवतो जयदेवकवितारूपवस्तुनो मनागपि न पश्यन्ति तवापि जन्म वृथेति भावः। हे शर्करे सिते त्वमपि कर्करा कर्कशा कठिनेऽपि पाठेऽपि तद्वत् असि भवसि। माधुर्येण लोके त्वत्सति वस्तुनोऽभावात् मृद्वीमपि तामादधे। अधुना तु माधुर्यमार्दवाभ्यां भवदतिशायिन्याः जयदेवकवितायाः सम्भवात् कर्कशायास्तव जननमजननमनर्थकमित्यभिसन्धिः।

हे माध्वीक मदः भवतस्तत्र चिन्ता विचारः साध्वी समाशना भवति अचिन्तय धर्मशास्त्रविरुद्धत्वादिति भावः। पूर्वनियमत्वं न पेयमिति शास्त्रनिषिद्धापादानम धर्मसाधनमपि त्वां माधुर्य्यपरवशा ग्राम्यजनाः केचनाद्रियन्ते। अधुना तु परम॰ पुरुषार्थसाधनीभूतमतिमधुररसकलपदार्थकं सकलहृदयानन्दकं जयदेववाचामृतमाकलय्य कोऽपि कटाक्षेण त्वां न वीक्ष्यत इति तवापि जन्म वृथैवेति भावः। तथा च मधुरप्रियैः सात्त्विकैश्च वैहिकामुष्मिकसुखकरै जयदेवसरस्वत्ये वास्वादनीया न वस्त्वन्तरमिति भावः ॥ ९ ॥

इति गीतगोविन्दव्याख्यायां श्रुतिरञ्जिनीसमाख्यायां द्वादशः सर्गः।

। समाप्तोऽयं ग्रन्थः ।।

---

१. च. रधादेवी। २. क. व्याख्या नास्ति। ख. ग. श्लोकोऽपि नास्ति।

# —प्रबन्धानुक्रमणिका—



—०—

# —रागानुक्रमणिका—

| रागनामानि | सर्गसंख्या | प्रबन्धसंख्या |
|---|---|---|
| कर्णाट | ४ | ८ |
| गुर्ज्जरी | १, २, ३, ५, ७, ६, | २, ५, ७, ११, १५, १८, |
| गुण्डकिरी | २, ६, | ६, १२, |
| देशाख्य | ४ | ६ |
| देशी | १० | १६ |
| देशीवराडी | ५ | १० |
| भैरवी | ८ | १७ |
| मालव | १, ७, | १, १३, |
| रामकिरी | १, १२, | ४, २३, २४, |
| वराड़ी | ७, ११, | १६, २१, २२, |
| वसन्त | १, ७, ११, | ३, १४, २०, |

—०—

# —श्लोकानुक्रमणिका—

—o—

# छन्दसामनुक्रमणिका

| छन्दसां नामानि | सर्गसंख्या | प्रबन्धसंख्या |
|---|---|---|
| अनुष्टुप् | ३ | १ |
| | ४ | १ |
| | ११ | ७ |
| | १२ | ६ |
| आर्य्या | ६ | १ |
| | ७ | २ |
| | ९ | १ |
| | १२ | १० |
| उपेन्द्रवज्रा | ४ | ४ |
| | ७ | ४ |
| द्रुतविलम्बित | १ | ३ |
| | ७ | ५ |
| पुष्पिताग्रा | ४ | ६ |
| | ५ | १ |
| | ८ | १ |
| | १० | ४ |
| पृथ्वी | १० | ७ |
| मालिनी | १ | ८ |
| | ६ | २ |
| | ११ | १ |
| वंशस्थ | १ | १० |
| | ३ | २ |
| | ७ | ७ |
| वसन्ततिलक | १ | २, ६ |
| | ३ | ७ |
| | ७ | १, ९ |

| | | |
|---|---|---|
| | १० | १, ३ |
| | ११ | ४, ५ |
| शार्दूलविक्रीडित | १ | १, ४, ५, ६, ११, १२ |
| | २ | ३ |
| | ३ | ४, ५, ६ |
| | ४ | ४, ३, ५ |
| | ५ | २, ४, ५ |
| | ६ | ३ |
| | ७ | ३, ६ |
| | ६ | २ |
| | १० | ६ |
| | ११ | २, ३, ६ |
| | १२ | २, ३, ४, ५ |
| शिखरिणी | १ | ७ |
| | २ | ४ |
| | ८ | २ |
| | ११ | ८, ६ |
| स्रग्धरा | १२ | ६ |
| हरिणी | २ | १, २ |
| | ३ | ३ |
| | ५ | ३, ६ |
| | ७ | ८ |
| | १० | २, ५ |
| | १२ | १, ७, ८ |

—०—

# SELECT BIBLIOGRAPHY

1. कपिल संहिता—(ओडिआ) सं. रत्नाकर गर्गबटु, कटक, १९२८

2. हर्षचरित—बाणभट्ट, सं. पि. भि. काणे,

3. भक्तमाला—चन्द्रदत्त, भेङ्कटेश्वर प्रेस, बम्बे।

4. गीतगोविन्द—निर्णयसागर प्रेस, बम्बे १९४९

5. पवनदूत—मनमोहन चक्रवर्त्ती, एसिआटिक् सोसाइटि, वेङ्गल् १९०५

6. सदुक्तिकर्णामृत—सं. ड: सुरेश चन्द्र वानार्जी, कलिकता, १९६५

7. अमरकोष—अमरसिंह, सं. हरगोविन्द शास्त्री वाराणसी १९७०

8. काव्य प्रकाश—मम्मट, सं. गङ्गानाथ ओझा, वाराणसी, १९६७

अनु. पण्डित नारायण महापात्र, भुवनेश्वर, १९६४

9. काव्यादर्श – दण्डी, भाण्डारकर ओरियेण्टाल् रिसर्च इनिष्टिच्युट, पुना, १९३८

10. त्रिकाण्डशेष—पुरुषोत्तम देव, क्षेमराज कृष्णदास, बम्बे, १९१६

11. कालिदास ग्रन्थावली—सीतारामचतुर्वेदी, काशी, १९६२

12. नाट्यशास्त्र—सं. पण्डित वानाम्बर आचार्य्य,

ओड़िशा साहित्य एकाडेमी, भुवनेश्वर, १९६४

13. काव्यमीमांसा—राजशेखर, प्रथमभाग, वरोदा, १९२४

14. सङ्गीत नारायण—गजपति जगन्नाथ नारायण देव,

ओड़िशा साहित्य एकाडेमी, १९६६

15. भास नाटकचक्र—वलदेव उपाध्याय, बाराणसी,

ओरियेण्टाल् बुक् एजेन्सि, पुना।

16. ध्वन्यालोक—सं. पण्डित कुलमणि मिश्र, ओडिशा साहित्य एकाडेमी,

भुवनेश्वर, १९६४

17. क्षेमेन्द्र लघुकाव्य संग्रह—उसमानिआँ विश्वविद्यालय, हाइदराबाद।

18. मनोरमा—(संस्कृत पत्रिका) vol. VI, १९६५-६६

19. खुरधा इतिहास (ओड़िआ)—केदारनाथ महापात्र, भुवनेश्वर, १९७१

20. झङ्कार—विषुव संख्या, १९६६

21. चतुरङ्ग—(ओडिआ मासिक), कटक.

22. श्रीभक्तमालटीका - प्रियादास, तेजकुमार प्रेस, लक्ष्नौ, १९६९.

23. भक्त विजय (मराठी)—महीपति, निर्णय सागर प्रेस, बम्बे, १९६८

Ed. J. E. Abbot, Poona, 1833.

24 श्रीभक्तमाला—वसुमती साहित्यमन्दिर, कलिकता, १९२२

25. जयदेवचरित—वनमालीदास, वङ्गीय साहित्य परिषद, कलिकता, १९०५

26. शेख शुभोदय—सं. सुकुमार सेन्, एसिआटिक् सोसाइटि, बेङ्गल्, १९६३

27. (क) सुभाषित रत्नकोष—डि. डि. कोशाम्बि।

(ख) उत्तर रामचरित—भवभूति—सं. शेषराजशर्मा, चौखम्बा, १९६६

(ग) कादम्बरी—सं. कृष्णमोहन शास्त्री, चौखम्बा, १९६१

28. दार्ढ्यताभक्तिरसामृत (ओडिआ)—रामदास, राधारमण पुस्तकालय,

कटक, १९३१

29. प्राचीन उत्कल—जगवन्धुसिंह, ओड़िशा साहित्य एकाडेमी,

भुवनेश्वर, १९६४

30. प्राचीनदीर ऐतिहासिक विभव—डाक्तर राधाचरण पण्डा,

ओडिशा साहित्य एकाडेमी भुवनेश्वर, १९६६

31 सरस्वती कण्ठाभरण—भोजराज, निर्णय सागर प्रेस, बम्बे।

32. आर्य्यासप्तशती—गोवर्द्धनाचार्य्य, निर्णय सागर प्रेस, बम्बे।

33. ओड़िआ साहित्यर इतिहास—डक्टर मायाधर मानसिंह, कटक, १९६७

34. गीतगोविन्द—कालीचरण पट्टनायक, कटक, १९७०

35. ओड़िआ साहित्यरे गीतगोविन्द—डक्टर नगेन्द्र प्रधान कटक।

36. श्रीकृष्णलीलातरङ्गिणी—सं. नरसिंह शास्त्री, १९६९

37. हिन्दी साहित्यका आलोचनात्मक इतिहास—डक्टर रामकुमार वर्मा

38. गीतगोविन्द—बालबोधिनी टीका, कलिकता, १८७३

39. गीतगोविन्द—भेङ्कटेश्वर प्रेस, बम्बे, १८८६

40. गीतगोविन्द—सं. सि. आर श्रीनिवास आयाङ्गार, माड्रास, १९४८

41. गीतगोविन्द—अनु. प्रसन्न कुमार भट्टाचार्य्य, कलिकता, १९०१

42. गीतगोविन्द—अनु. विजय चन्द्र मजुमदार, कलिकता, १९०५

43, गीतगोविन्द—अनु. भावाचार्य्य अष्टपुत्र, पुना, १८६०

चेतोहर देव, पुना, १८८८

44. गीतगोविन्द—अनु. ब्रह्मानन्दतुका, पुना, १९५०

45. गीतगोविन्द—अनु. धरणीधर, कटक, १८४०

जगबन्धु महापात्र, पुरी, १९३९

46. गीतगोविन्द—प्रकाशक, हरिदास हीराचान्द ब्रुत्तदीपप्रेस, १८६५

47, कवि जयदेव ओ श्रीगीतगोविन्द सं. हरेकृष्ण मुखोपाध्याय

कलिकता, १९५६

48. साहित्य दर्पण—विश्वनाथ कविराज, सं. पि. भि. काणे, दिल्ली, १९६५

49. काव्यादर्श—दण्डी, सं. भि. एन्. आयार, माड्रास्, १९६४

50. सामन्त चन्द्रशेखर (ओडिआ जीवनी)—चन्द्रशेखर मिश्र, कटक, १९७२

51. चउतिशा मधुचक्र—तृतीयभाग, कटक

52. ढेङ्कानाल भूगोल (ओडिआ)—रामचन्द्र भक्तिविनोद।

53. वीरभूम विवरण (वंगला)—हरेकृष्ण मुखोपध्याय, कलिकता, १९१६

54. वाङ्गला साहित्येर इतिहास—डक्टर सुकुमार सेन, कलिकता १९६७

55. हिन्दी साहित्यका इतिहास—पण्डित रामचन्द्र शुक्ल।

56. जैन शिलालेख संग्रह—पण्डित विजय मूर्त्ति।

57. गाथा सप्तशती—हाल, सं. जुगलकर, पुना।

58. Sankara & Vaisnavism—Sri R. C. Shastri.

59. History of Sanskrit poetry—P. V. Kane, Bombay.

60. Studies in Orissan Archaeology —P. Acharya, Cuttack, 1969

61. Antiquities of Orissa—Vol. II, R. L. Mitra, 1880

62 History of Bengal—Published by the Dacca University, 1943

63. Tabaqat-i-Nasiri—Translated by Raverty.

64. A History of Sanskrit Literature—Dr. D. Varadachari.

65. Studies in Indian Literary History—Vol. I, Dr. P. K. Gode Bombay, 1953

66 Orissa and her Remains—M M. Ganguli, 1912

67. Bengal's Contribution to Sanskrit Literature— Dr S K. De, Calcutta, 1960

68. Indian Historical Quaterly—Vol. XX.

69. Sources of Vijay Nagar History—S. K. Ayyangar.

70. An Indian Ephemeris, Vol. II,V—S. K. Pillai, Madras, 1922

71. Kavi Jayadeva & Gitagovinda—Dr. S K Mukherji, Sahitya Akademi, New Delhi, 1973

72. P. K. Gode Commemoration Volume— M. M Patkar, Poona, 1960

73. Souvenir on Sri Jayadeva—Dr. N. K. Sahu, Bhubaneswar, 1968

